अव। मए वि तुह्मवअणादो तेण तेण वअणोवस्सासेण (१) भूरिवसुमन्दिरासस्स (२) राअमग्गेण माहवो सञ्चारीअदि। (ष)

काम। कथितमेव नो मालतीधात्रेय्या लवङ्गिकया। (स)

भूयोभूयः सविधनगरीरथ्यया पर्य्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था।

(ष) मयापि युष्मद्वचनात् तेन तेन वचनोपन्यासेन भूरिवसुमन्दिरासन्नराजमार्गेण माधवः सञ्चार्य्यते।

(ष) अवेति। युष्मद्वचनात् तवादेशात्। तेन तेन त्वदुपदिष्टरूपेण बहुविधेन वचनोपन्यासेन 'मनोहरोऽयं राजपथः, उभयपार्श्वे चास्य बहूनि सुहर्म्याणि सन्ति अस्त्रत्पर्य्यटनेन तान्यवलोकय' एवंविधवाक्प्रकारेण। सञ्चार्य्यते यातायातं कार्य्यते। मन्दिरासन्नत्वेन मालत्या दर्शनसंयोगः, राजमार्गेणेत्यनेन माधवस्य गमनागमने सङ्कोचाभावः, अन्येषाञ्च संशयराहित्यं व्यज्यते।

(स) कामेति। नः अस्माकं। धात्र्या उपमातुरपत्यं स्त्रीति धात्रेयी, मालत्याधात्रेय्या धात्रीकन्यया। एतेन वयस्यत्वेन तस्या रहस्यवेदित्वं सूच्यते। लवङ्गिकया तदाख्यया कयाचित् स्त्रिया।

किं कथितमित्याह भूय इति। यत् 'य' इति वङ्गभाषा। भवनस्य मन्दिरस्य या वलभी उपरिस्थं गृहं तस्याः तुङ्गवातायनस्था उच्चगवाक्षद्वारगता मालती रतिः ; नवं नूतनं हरनयनाग्निना दाहानन्तरोत्पन्नं साक्षात् कामं प्रत्यक्षं कन्दर्पमिव सविधा मन्दिरासन्ना या नगरीरथ्या राजधानीप्रधानमार्गः तया भूयोभूयः वारं वारं पर्य्यटन्तं यातायातं कुर्वन्तं माधवं दृष्ट्वा दृष्ट्वा गाढोत्कण्ठा माधवायांतीवौत्सुक्यवती सती लुलित-

(१) उवस्सासेण इति पाठः क्वचित्।

(२) मन्दिरासस्सतररराअमग्गेण इतिपाठभेदः।

साक्षात् कामं नवमिव रतिर्मालती माधवं यत्
गाढ़ोत्कण्ठा लुलितलुलितैरङ्गकैस्ताम्यतीति ॥१५॥

अव। वाढ़ं। जदो ताएवि उक्कण्ठाविणोदणिमित्तं माहवपड़िच्छन्दअं आलिहिदं, तं लवङ्गिआए अज्ज मन्दारिआए हत्थे णिहिदं दाव। (१) (ह)

काम। विचिन्त्य। सुविहितं लवङ्गिकया, यतो माधवानुचरः

(ह) वाढ़ं। यतस्तयाऽप्युत्कण्ठाविनोदनिमित्तं माधवप्रतिच्छन्दकं आलिखितं तत् लवङ्गिकया अद्य मन्दारिकाया हस्ते निहितं तावत्।

ललितैरतिशयेन ललितैः मदनान्दोलितैः अङ्गकैर्देहावयवैः ताम्यति म्लाना भवति। इति कथितमित्यन्वयः। अत एव मालती माधवानुरागिणी जातेति भावः।

अत्र नवं साक्षात्कामभिवेति द्रव्योत्प्रेक्षाऽलङ्कारः। सविधनगरवर्थ्येत्यनेनापि मालत्या दर्शनसुयोगः माधवस्य च निःसङ्कोचेन पर्य्यटनं व्यज्यते, भवनवलभीतुङ्गवातायनस्था इत्यनेन अन्येषां दर्शनासम्भवात् मालत्या माधवस्य पर्य्याप्तावलोकनं ध्वन्यते इति वस्तुना वस्तुध्वनिः।

"गृहान्ते वड़भी चन्द्रशाले सौधोर्द्धवेश्मनि।" इति रभसः।

"प्रेङ्खोलितस्तरंगितो ललितान्दोलितावपि। इति शब्दकल्पद्रुमः।

अङ्गकैरित्यनुकम्पायां कप्रत्ययः। मन्दाक्रान्ता वृत्तं ॥ १५ ॥

(ह) अवेति। वाढ़ं सत्यं ताम्यतीति यदुक्तं तदहमप्यनुमन्ये इत्यर्थः। तयाऽपि मालत्याऽपि, उत्कण्ठाविनोदनिमित्तं माधवदर्शनविषयकनिजौत्सुक्यनिवृत्तये, माधवस्य प्रतिच्छन्दकं प्रतिरूपं प्रतिमूर्त्तिरिति यावत् आलिखितं। तत् मालतीचित्रितंमाधवप्रतिच्छन्दकम्। "वाढ़ं विषु दृढ़े क्लीबं अनुमत्यामथ त्रिषु" इति नानार्थरत्नमाला।

---

(१) वाढ़ं। तदो ताए उव्वेअविणोअणं माहवपड़िच्छन्दअं अभिलिहिअं लवङ्गिआए मन्दारिआहत्थे अज्ज णिक्खित्तं दाव। इति पाठान्तरम्।

कलहंसस्तां विहारदासीं मन्दारिकां कामयते, इत्यनेन (१) तीर्थेन तत्प्रतिच्छन्दकमुपोद्घाताय (२) माधवान्तिकमुपेयादित्यभिप्रायः। (च)

अव। अज्ज माहवोऽवि कोदूहलमुप्पादिअ मए प्पउत्तमअणमहूसवं मअणुज्जाणं पहादे अणुप्पेसिदो। तहिं किल मालदी गमिस्सादि, तदो अण्णोण्णदंसणं भोदुत्ति। (क)

---

(क) अद्य माधवोऽपि कौतूहलमुत्पाद्य मया प्रवृत्तमदनमहोत्सवं मदनोद्यानं प्रभाते अनुप्रेषितः। तस्मिन् किल मालती गमिष्यति, ततोऽन्योन्यदर्शनं भवत्विति।

---

(च) कामेति। माधवस्य अनुचरः सेवादासः कलहंसनामा कश्चिज्जनः। विहारस्य बौद्धालयस्य दासीं परिचारिकां मन्दारिकां मन्दारकुसुमसदृशशोभनीयत्वात् तदाख्यां कामयते सम्भोगाय प्रार्थयति, सुतरां तदन्तिके कलहंसस्य नित्ययातायातं सम्भाव्यत एवेति भावः। तीर्थेन उपायेन। उपोद्घाताय चिन्तितप्रकृतिसिद्धये मालतीमाधवयोरन्योन्यासक्तिवृद्धिसिद्धये इत्यर्थः। अभिप्रायः लवङ्गिकायाः आशयः। तच्चित्रफलकं मन्दारिका कलहंसहस्ते दास्यति, सोऽपि च माधवहस्ते दास्यति माधवोऽपि तत्प्राप्य मालत्याः कलाकौशलं आत्मन्यनुरागबाहुल्यञ्चावगत्य तस्यां भृशानुरक्तो भविष्यति, सुतरामस्मदभिप्रेतसिद्धिरवश्यम्भाविनीति सविस्मितमेव लवङ्गिकयेति भावः। "विहारो भ्रमणे स्कन्धे लीलायां सुगतालये" इति मेदिनी। "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु। अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च विश्रुतम्"। इति विश्वः।

"चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः।" इत्यनुमितौ जगदीशतर्कालङ्कारः।

(क) अद्येति। कौतूहलं माधवस्यैव मालतीदर्शनकौतुकं अनुप्रेषितः प्रेरितः समुपदिष्टः। इति अनेनाभिप्रायेणेत्यर्थः।

---

(१) तदनेनेति पाठान्तरम्। (२) उपोद्घातेनेति पाठभेदः।

काम। साधु वत्से! साधु, अनेन मत्प्रियाभियोगेन स्मारयसि मे पूर्वशिष्यां सौदामिनीम् । (ख)

अव। भअवदि ! सा सौदामिणी अहुणा (१) समासादिद-अच्चरीअमन्तसिद्धिप्पहावा सिरिपव्वदे कावालिअव्वदं धारेदि । (ग)

काम। कुतः पुनरियं वार्त्ता ? (घ)

अव। अत्थि एत्थ णअरे महासमसाणप्पदेसे कराला (२) चामुण्डा । (ङ)

(ग) भगवति ! सा सौदामिनी अधुना समासादिताश्चर्य्यमन्त्रसिद्धिप्रभावा श्रीपर्व्वते कापालिकव्रतं धारयति ।

(ङ) अस्ति अत्र नगरे महाश्मशानप्रदेशे कराला चामुण्डा ।

(ख) कामेति। मत्प्रियाभियोगेण मम सन्तोषजनकाचरणेन। सौदामिनी विद्युद्वत् उज्ज्वलवर्णत्वात् चञ्चलत्वाद्वा सौदामिनीनाम्नीं। त्वं सर्व्वथैव सौदामिनीसदृशी चतुरा मत्प्रिया चेति भावः ।

(ग) अवेति। कापालिकव्रतं तन्त्रोपदिष्टवामाचाररूपं नियमं धारयति अवलम्बते। "कापालिकः (पु')...वामाचारिविशेषः"। इति शब्दकल्पद्रुमः। वामाचारमाह आचारभेदतन्त्रे —

"पञ्चतत्त्वं खपुष्पञ्च पूजयेत् कुलयोषितम् ।
वामाचारो भवेत्तत्र वामा भूत्वा यजेत् पराम् ॥"

(घ) कामेति। कुतो जनात्। वार्त्ता प्राप्तेति शेषः ।

(ङ) अवेति। कराला भयङ्करी। चामुण्डा चामुण्डाप्रतिमा। चामुण्डामूर्त्तिमाह

(१) सा दाणिं सौदामिणी इति पाठः पुस्तकान्तरे ।

(२) कराला नामेति पाठान्तरम् ।

काम। अस्ति; या किल विविधजीवोपहारप्रियेति साहसिकानां प्रवादः। (च)

अव। तहिं क्खु सिरिपव्वदादो आअदस्स रत्तिविहारिणो णादिदूरारस्सवासिणो (१) साधअस्स मुण्डधारिणो अघोरघण्टणामधेअस्स अन्तेवासिणी महाप्पहावा कवालकुण्डला णाम अणुसन्धं आअच्छदि। तदो इअं पउत्ती। (छ)

---

(छ) तस्मिन् खलु श्रीपर्व्वतादागतस्य रात्रिविहारिणो नातिदूरारण्यवासिनः साधकस्य मुण्डधारिणः अघोरघण्टनामधेयस्य अन्तेवासिनी महाप्रभावा कपालकुण्डला नाम अनुसन्धमागच्छति। तत इयं प्रवृत्तिः।

---

कालिकापुराणे—षष्टितमाध्याये—

"नीलोत्पलदलश्यामा चतुर्बाहुसमन्विता।
खट्वाङ्गं चन्द्रहासञ्च बिभ्रती दक्षिणे करे॥
वामे चर्म्मकपालञ्च ऊर्द्धाधोभावतः पुनः।
दधती मुण्डमालाञ्च व्याघ्रचर्म्मधराम्बरा॥
कृशाङ्गी दीर्घदंष्ट्रा च अतिदीर्घातिभीषणा।
लोलजिह्वा निम्नरक्तनयना नादभैरवा॥
कबन्धवाहनापीनविस्तारश्रवणानना।
एषा तारा हया देवी चामुण्डेति च कथ्यते।

(च) कामेति। विविधजीवोपहारप्रिया नानाविधप्राणिबलिदानेन साधकानां कामदानात् प्रीतिकर्त्री। साहसं मनुष्यमारणं नरबलिरिति यावत् तेन संसृष्टः इति साहसिकास्तेषाम्। साहसमाह व्यवहारतत्त्वे नारदः—

"मनुष्यमारणं स्तेयं परदाराभिमर्षणम्।
पारुष्यमनृतञ्च व साहसं पञ्चधा स्मृतम्॥

(छ) अवेति। रात्रिविहारिणः दिवसे ध्यानस्तिमिताः भूत्वा रात्रौ पर्य्यटनकारिणः।

(१) इदो णादिदूरसमाणवासिणो इति पाठभेदः।

काम। सर्व्वं सौदामिन्यां सम्भाव्यते। (ज)

अव। अलं दाव एदिणा। भअवदि! एसो वि सहअरो (१) माहवस्स बालमित्तं मअरन्दो णाम णन्दणस्स बहिणीं मद-अन्तिआं जइ समुव्वहदि, तं वि माहवस्स दुदीअं पिअं (२) होदि। (झ)

---

(झ) अलं तावदेतेन एषोऽपि सहचरो माधवस्य बालमित्रं मकरन्दो नाम नन्दनस्य भगिनीं मदयन्तिकां यदि समुद्वहति तदपि, नाम माधवस्य द्वितीयं प्रियं भवति।

---

मुण्डधारिणः पानपात्ररूपनृकपालधारिणः अघोरो भैरवविशेषः तत्पूजायां घण्टा यस्येत्यघोरघण्टस्तन्नामकस्य। "कापालिकास्तु घण्टान्तनामानः समुदाहृताः"। इति नरनोकरघोरघण्टे ति नामेति बोध्यम्। अन्तेवासिनी। शिष्या कपालं शिरोऽस्थि-खण्डं कर्णभूषणं यस्याः सा सन्ध्यायां सायंकाले इत्यनुसन्ध्यं विभक्त्यर्थेऽव्ययीभावः। तस्मिन् महाश्मशानप्रदेशे आगच्छतीत्यन्वयः। ततः कपालकुण्डलायाः सकाशात इयं सौदामिनीसम्बन्धिनी प्रवृत्तिर्वार्त्ता प्राप्तेति शेषः।

(ज) कामेति। वार्त्तामुपलभ्य अवलोकितोक्तं सौदामिन्या आश्चर्यसर्व्वोत्कृष्ट-प्रभावादिकमङ्गीकरोति सर्व्वमिति। बाल्य एव तदुद्यमक्षमतादर्शनादिति भावः।

(झ) अवेति। एतेन अनुद्देश्यविषयालोचनेन। बालमित्रं आशैशवात् सखा। मकरन्दः पुष्परसः तद्वत् लोभनीयत्वात् मकरन्दो नाम। मदयन्तिका रूपेण चित्तो-न्मादकरणात् मदयन्तिकानाम्नीम्। एकमात्मनो मालतीपरिणयनं द्वितीयं मकरन्दस्य मदयन्तिकापरिणयनम्।

(१) सोवि पासअरो इति पाठान्तरम्।

(२) पिअं किदं इति क्वचित् पाठः।

काम। नियुक्तैव तत्र मया प्रियसखी बुद्धरक्षिता (१)। (ञ)

अव। सुविहिदं भअवदीए (२)। (ट)

काम। (विचिन्त्य।) तदुत्तिष्ठ, माधवप्रवृत्तिमुपलभ्य मालतीमेव पश्यावः (ठ)। (इत्युभे उत्तिष्ठतः।)

काम। (विचिन्त्य।) अत्युदारप्रकृति मालती, तन्निपुणं निसृष्टार्थदूतीकल्पस्तन्त्रयितव्यः। सर्वथा (ढ)

(ट) सुविहितं भगवत्या।

---

(ञ) कामेति। तत्र विषये मकरन्दं प्रति मदयन्तिकाया अनुरागजनकतद्गुणवर्णनादिकार्य्ये इत्यर्थः। बुद्धेन सुगतेन रक्षितेति बुद्धरक्षिता तदाख्या काचित्स्त्री।

(ट) अवेति। भगवत्या भवत्या सुविहितं बुद्धरक्षिताया नियोगेन साधु कृतम् तस्याः अतीवनैपुण्येन मकरन्दं प्रति मदयन्तिकाया अनुरागस्यावश्यम्भावादिति भावः।

(ठ) कामेति। विचिन्त्य तत्कालीनं कर्त्तव्यं विभाव्य।

(ड) कामेति। विचिन्त्य मालत्या विषये कर्त्तव्यं मनसा समालोच्य। अत्युदारा सुमहती गभीरा प्रकृतिः स्वभावो यस्याः सा। तत् तस्मात् निपुणं यथा स्यात्तथा। निसृष्टार्थदूत्या दूतीविशेषस्य कल्पो रीतिः तन्त्रयितव्यः प्राधान्येनावलम्बनीयः सर्वथेति शेषः। गम्भीरस्वभावया मालत्या स्वयं स्वाभिप्रायस्याप्रकाश्यत्वेन मितार्थसन्देशहारकाख्यदूतीरीत्यवलम्बनस्य निष्फलत्वात् निसृष्टार्थाख्यदूतीरीतिरेव प्राधान्येनावलम्बनीया, सति तु सम्भवे दूत्यन्तररीतिरपीति भावः। सर्वथेत्यस्य श्लोकस्थक्रियाभिरन्वयः—। दूतीभेदं तल्लक्षणञ्चाह साहित्यदर्पणे—

---

(१) मत्प्रियसखीति पाठभेदः।

(२) किदं इत्यधिकः पाठः कुत्रचित्।

शरज्ज्योत्स्ना कान्तं कुमुदमिव तं नन्दयतु सा
सुजातं कल्याणी भवतु कृतकृत्यः स च युवा ।
वरीयानन्योन्यप्रगुणगुणनिर्म्माणनिपुणो
विधातुर्व्यापारः फलतु च मनोज्ञश्च भवतु (१) ॥१६॥

इति निष्क्रान्ते ।

---

"निसृष्टार्थो मितार्थश्च तथा सन्देशहारकः ।
कार्य्यप्रेष्यस्त्रिधा दूती दूत्यश्चापि तथाविधाः ।
उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् ।
सुश्लिष्टं कुरुते कार्य्यं निसृष्टार्थस्तु सस्मृतः ॥
मितार्थभाषी कार्य्यस्य सिद्धिकारी मितार्थकः ।
यावद्भाषितसन्देशहारः सन्देशहारकः ।

शरज्ज्योत्स्नेति । सा कल्याणी मालती शरज्ज्योत्स्ना कान्तं मनोरमं कुमुदमिव तं सुजातं सत्कुलोत्पन्नं कान्तं दयितं माधवं नन्दयतु मद्व्यवहारेण प्रीणयतु । स युवा माधवश्च कृतकृत्यो मालतीलाभात् चरितार्थो भवतु । वरीयानुत्कृष्टः अन्योन्यप्रगुणाः नायकनायिकयोः परस्परानुकूला ये गुणाः प्रणयानुवृत्तिप्रभृतयः तेषां निर्म्माणे सृष्टौ निपुणो दक्षः विधातुर्विधेः व्यापारः योग्ययोजनक्रिया फलतु अतीवयोग्ययोरनयोर्मालती-माधवयोर्योजनात् सार्थको भवतु । तथा मनोज्ञः गुणतारतम्याभावाद्विषादाभावेन सर्व्वेषां प्रीतिप्रदो भवतु ।

अत्रोपमाऽलङ्कारः । तथा ज्योत्स्ना कुमुदं नन्दयति, सा तु नन्दयतु इति विधि-भेदात् "चिरंजीवतु ते सूनुः मार्कण्डेयमुनिर्यथेति साहित्यदर्पणोदाहृतवत् भग्नप्रक्रमता-दोषः, स च 'शरज्ज्योत्स्नाभा सा कुमुदसदृशं नन्दयतु तं इति पाठेन समाधेयः ।

शिखरिणी वृत्तम् ॥ १६ ॥

(१) गरीयानिति पाठान्तरम् ।

## विष्कम्भकः। (ढ)

—:०:—

ततः प्रविशति गृहीतचित्रफलकोपकरणः (१) कलहंसः।

कल०। कहिं दाणिं तुलिदमअरद्धअरूआवलेव (२ विब्भमा-

(त) कस्मिन्निदानीं तुलितमकरध्वजरूपावलेपविभ्रमावचितसालतीहृदयमाहात्म्यं नाथमाधवं प्रेक्षिष्ये। परिश्रान्तोऽस्मि, यावदिहोद्याने मुहूर्त्तं विश्रम्य मकरन्दसहचरं नाथं माधवं प्रेक्षिष्ये।

(ढ) विष्केति। विष्कभ्नाति विषयविशेषमुपक्षिपति सूचयतीति विष्कम्भकः प्रबन्धविशेषः। तथा च साहित्यदर्पणे—

"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥

तथा चात्र विद्यापरिग्रहाय कामन्दक्यादीनामेकत्रावस्थानं, भूरिवसुदेवरातयोरपत्य-सम्बन्धप्रतिज्ञा, नन्दनार्थं राज्ञा मालतीयाचनं, माधवाय मालतीं दातुं भूरिवसोः कामन्दकीनियोग इत्यादीनां वृत्तकथांशानां निदर्शनम्। तथा कलहंसहस्तदत्त-चित्रस्य माधवान्तिके समुपस्थितिः, मदनोद्याने मालतीमाधवयोः परस्परसाक्षात्कारः, मदयन्तिकामकरन्दयोरनुरागप्रवृत्तिरित्यादीनां वर्त्तिष्यमाणानां कथांशानां निदर्शनञ्च बोध्यम्। स चायं कामन्दक्यवलोकिताभ्यां मध्यमनीचपात्राभ्यां सम्प्रयोजितत्वात् मिश्र-रूपः। यथा दर्पणे—

"...स तु सङ्कीर्णो नीचमध्यमकल्पितः"।
मिश्रविष्कम्भ' इति पुस्तकान्तरे पाठोऽपि।

साहित्यदर्पणमते तु अङ्कमुखमिदं। तल्लक्षणादिकन्तु तत्रैवानुसन्धेयम्।

(१) गृहीतचित्रोपकरण इति पाठान्तरम्।

(२) तुलिदमअरद्धआवलेव इति पाठः कुत्रचित्।

वक्खित्तमालदोहिअअमाहप्पं णाहमाहअं पेक्खिस्सं । परिक्रम्य परिस्सन्तोह्मि, जाव इमस्सिं उज्जाने सुहुत्तं विस्समिअ मअरन्दसहअरं णाहं माहवं पेक्खिस्सं । (त) इतिप्रविश्योपविशति

ततः प्रविशति मकरन्दः ।

मक । कथितमवलोकितया, मदनोद्यानं गतो माधव इति । भवतु, तत्रैव गच्छामि । परिक्रम्यावलोक्य च (१) । दिष्ट्या अयं वयस्य इत एवाभिवर्त्तते । निरूप्य । अस्य तु—(द)

गमनमलसं शून्या दृष्टिः, शरीरमसौष्टवं
श्वसितमधिकं, किं न्वेतत् स्यात्, किमन्यदितोऽ (२) थवा ।

(त) कलेति । तुलितः सदृशीकृतः मकरध्वजस्य मदनस्य रूपावलेपः सौन्दर्याभिमानो येन तादृशेन विभ्रमेण विलासेन अवक्षिप्तं निरस्तं दूरीकृतं मालतीहृदयस्य माहात्म्यं माहात्म्यप्रयोजकीभूतं गाम्भीर्यं येन तं तथोक्तम् । नाथः प्रभुः ( सुनिव इति अस्य भाषा ) स चासौ माधवश्चेति तं । परिश्रान्तोऽस्मि दूरादागमनेनेति शेषः । कलहंसपाठ्यमर्द्धमागधी भाषा । यथा दर्पणे—

"चेटानां राजपुत्राणां श्रेष्ठिनां चार्द्धमागधी ।"

(थ) तत इति । मकरन्दसहचरं" इत्यनेन तत्प्रवेशः सूचितः । मकरन्दः पुष्परसः तस्य तु माधवसाहचर्य्यम् युक्तमेवेति मकरन्दनाम्नस्तात्पर्य्यम् ।

(द) मकेति परिक्रम्य कियन्तं पदक्षेपं कृत्वा । दिष्ट्येति तृतीयान्तप्रतिरूपकमव्ययं भाग्यार्थे । अस्य तु माधवस्य, श्लोकस्थगमनादिना अन्वयः ।

गमनमिति । गमनं अलसं लक्ष्याभावादनिच्छापूर्व्वकत्वेन जड़ं मन्थरं । दृष्टिः अवलोकनं शून्या चिन्ताविशेषेण विषयविशेषपरिच्छेदाभावात् निष्फला । शरीरं असौष्ठवं अङ्गसंस्काराद्यभावादागन्तुकसौन्दर्य्यरहितम् । श्वसितं श्वासः अधिकं स्वाभा-

(१) दृष्ट्वा च इत्यपि पाठः ।　　(२) किमन्यदतोऽथवा इति पाठभेदः ।

भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं,
ललितमधुरा (१) स्ते ते भावाः क्षिपन्ति च धीरताम् ॥ १७ ॥

ततः प्रविशति यथानिर्दिष्टरूपो (२) माधवः। (घ)

विकारातिरिक्तम् एतदलसगमनादिकं किं कथं स्यात्। नुशब्दो वितर्के। इति वितर्कयन् स्वयमेवावधारयति किमन्यदिति। अथवा इतो सत्यभावकारणादन्यत् किं अलसगमनादेः कारणं स्यात् अपि तु किमपि नेत्यर्थः। किं तत् कारणमित्यत्र भ्रमतीति। भुवने जगति सर्व्वान् जनान् प्रतीत्यर्थः—कन्दर्पस्य आज्ञा आसक्त्यादेशः भ्रमति अप्रतिहता सती विजृम्भते। इतश्च यौवनं विकारि मनोविकारजननशीलम्। तथा ललितमधुराः कोमलसुन्दराः, ते ते प्रसिद्धाः, भावाः चन्द्रचन्दनमलयमारुतोपवनादयः पदार्था धीरतां स्वाभाविकधैर्य्यं क्षिपन्ति निरस्यन्ति। स्वाभाविकयौवनमलयमारुतोद्दीपनैश्च कन्दर्पविशवशादस्य अलसगमनादिकं जातं न पुनरन्यकारणादिति भावः।

अत्र क्व वितर्कं प्रति अलसगमनादीनामनेककारणानामुक्तत्वादेकः—समुच्चयोऽलङ्कारः, पूर्व्वावस्थां प्रति च कन्दर्पाज्ञादीनां त्रयाणां कारणानामुक्तत्वात् द्वितीयः समुच्चय इत्यनयोर्मिथोनैरपेक्ष्यात् संसृष्टिः। तथा—किन्नु तत् स्यादित्यत्र दुःश्रवत्वदोषः 'स्यादन्यत् किं' इति पाठे तु तत्समाधानम्। आलस्य-चिन्ता-ग्लानिरूपा व्यभिचारिभावा अत्र सन्धेयाः। इदञ्च नर्म्मस्फोटाख्यं कौशिकीवृत्त्यङ्गं "नर्म्मस्फोटो भावलेशैः सूचितान्यरसो मतः" इति साहित्यदर्पणोक्तेः।

"पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मना"मितिदर्पणोक्तरस्य माधवस्य च संस्कृतं पाठ्यं।

हरिणीवृत्तम् "न स मरसलागः षड्वेदैर्हयैर्हरिणी मते"ति लक्षणात् ॥ १७ ॥

(घ) दिष्ट्या इत्यादिना सूचितं माधवप्रवेशमाह तत इति। यथानिर्दिष्टं अलसगमनादिविशिष्टं रूपमाकृतिर्यस्य सः। वसन्तकाल इवायं स्वरूपतो युवत्युन्मादकरो लोभनीयश्चेति माधवनामस्तात्पर्य्यम्।

(१) प्रकृतिमधुरा इति पाठान्तरम्। (२) यथानिर्दिष्ट इति क्वचित् पाठः।

माधवः। स्वगतम्। (न)

तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य
चेतः कथं कथमपि व्यपवर्त्तते मे।
लज्जां विजित्य, विनयं विनिवार्य्य, धैर्य्य-
मुन्मथ्य, मन्थरविवेकमकाण्ड एव ॥ १८ ॥

आश्चर्य्यम्। * यद्विस्मयस्तिमितमस्तमितान्यभाव-
मानन्दमन्दममृतप्लवनादिवाभूत्।

(न) माधव इति। स्वगतं अन्यैरश्राव्यमस्फुटमिति यावत् आहेति क्रियाविशेषण-मेतत्। स्वगतलक्षणं यथा साहित्यदर्पणे—

"अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्।"

तामिति। इन्दुसुन्दरमुखीं चन्द्रवन्मनोहरवदनां तां मालतीं सुचिरं बहुसमयं यावत् विभाव्य विचिन्त्य वर्त्तमानं मे मम चेतः मनः कर्त्तृ अकाण्ड एव सहसैव मन्थरो मन्दः विवेकः कर्त्तव्याकर्त्तव्यज्ञानं यस्य तत् मन्थरविवेकं सत् लज्जां विजित्य निरस्य, विनयं परकन्यायां सहसासक्तिर्न विधेयेत्येतादृशीं शिक्षां विनिवार्य्य दूरीकृत्य, तथा धैर्य्यं स्वाभाविकीं धीरतां उन्मथ्य विहाय कथं कथमपि केनचित् केनचिदपि प्रकारेण अतिकष्टेनेत्यर्थः व्यपवर्त्तते तद्भावनातः प्रत्यावर्त्तते। मालत्यामतीवासक्तं मम चित्तमिति भावः।

अत्र इन्दुसुन्दरमुखामिति लुप्तोपमाच्छेकानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः "संसारध्वान्तविध्वंस इति दर्पणोदाहृतरूपकानुप्रासयोरिव।

"दरवक्रे च मन्थरः इति त्रिकाण्डशेषः। "विनयः शिक्षाप्रणत्योर्विनया तु वनौषधौ।" इति हेमचन्द्रः।

वसन्ततिलका वृत्तम् ॥ १८ ॥

* आश्चर्य्यं मम मनसोऽवस्थावैषम्यमिति शेषः।

तत्सन्निधौ, तदधुना हृदयं मदीय-
मङ्गारचुम्बितमिव व्यथमानमास्ते ॥ १९ ॥

मक । सखे ! माधव ! इत इतः ( १ ) । ( प )

किन्तदित्याह यद्विस्मयेति । यत् मदीयं हृदयं मनः कर्त्तृ, तस्या मालत्याः सन्निधौ विस्मयस्तिमितं अलौकिकमिदं रूपं लावण्यञ्च इत्याश्चर्य्यवशात् स्तब्धं तथा अस्तमितः लोपं प्राप्तः अनपस्थितः अन्यः मालतीव्यतिरिक्तः भावः पदार्थो यस्मिन् तत् । तथा अमृतप्लवनादिव पीयूषे सन्तरणादिव हेतोः आनन्देन मालतीदर्शनजनितसुखेन मन्दं जडं विषयान्तरपरिच्छेदासमर्थं अभूत् । अधुना तद्वियोगकाले तत् हृदयं अङ्गारेण अग्निसमेतकाष्ठेन चुम्बितमिव संयुक्तमिव सत् व्यथमानं सन्तापोपेतं आस्ते वर्त्तते । अतएव मालत्याः संयोगवियोगयोरानन्दसन्तापानुभवात् हृदयस्य विषममवस्थाद्वय-माश्चर्य्यमेवेति भावः । प्रियायाः संयोगवियोगाभ्यामानन्दसन्तापयोः प्रसिद्धत्वेऽपि माधवस्य प्राथमिकत्वादाश्चर्य्यज्ञानमिति बोध्यम ।

अत्रानन्दव्यथयोर्विरूपयोः सङ्घटनया विषमोऽलङ्कारः, तथा अमृतप्लवनादिवेति वाच्या भावाभिमानिनी क्रियारूपहेतूत्प्रेक्षा, अङ्गारचुम्बितमिवेति तु तादृशी क्रियास्वरूपोत्प्रेक्षा इत्येतेषामङ्गाङ्गिभावेन सङ्करः । तत्सन्निधावित्यस्य द्वितीयार्द्धगतत्वेऽपि पदद्वयात्मकत्वात् न अर्द्धान्तरैकपदतादोषः । अस्मिन् श्लोकद्वये नायकहृदये नायिकानुरागरूपबीजोपन्यासादुपक्षेपो नाम मुखसन्धेरङ्गम् । यथा भरतः—

"बीजन्यास उपक्षेपः ।"

वसन्ततिलका वृत्तम् ॥ १९ ॥

( प ) सखेति । आत्मानमपश्यन्तं विमनस्कं माधवमवलोक्याभिमुखीकरणाय सम्बोधयति सख इति । इत इतः अस्यामस्यां दिशि आगच्छेति शेषः ।

( १ ) मकरन्दः । उपसृत्य । सखे ! माधव ! इत इतः ललाटन्तपस्तपति घर्म्मांशुः । तदस्मिन्नुद्याने मुहूर्त्तमुपविशावः । उभौ परिक्रामतः । इति पाठान्तरम् ।

माध। परिक्रम्य। कथं, प्रियवयस्यो मम मकरन्दः। (१) (फ)

मक। उपसृत्य। सखे! ललाटन्तपस्तपति घर्म्मांशुः (२) तदस्मिन् उद्याने मुहूर्त्तमुपविशाव:। (ब

माध। यथा प्रियवयस्याय रोचते (३)। इत्युभावुपविशतः।

कल। दृष्ट्वा। कधं, मअरन्दसहअरो इमं एव्व बालवउलुज्जाणं (४) अलङ्करेदि माहवो। ता दंसेमि मअणवेअणाखिज्जमाण मालदीलोअणसुहावहं अत्तणो से पड़िच्छंदअं। अहवा मुहुत्तं विस्सामसोक्खं दाव अणुहोदु। (भ)

(भ) कथं मकरन्दसहचर इदमेव बालबकुलोद्यानमलङ्करोति माधवः। तद्दर्शयामि मदनवेदनाखिद्यमानमालतीलोचनसुखावहं आत्मनोऽस्य प्रतिच्छन्दकम्। अथवा मुहूर्त्तं विश्रामसौख्यं तावदनुभवतु।

(फ) माधेति। कथमिति हर्षार्थकमव्ययम्। तथा च मेदिनी—

"कथं हर्षे च गर्हायां प्रकारार्थे च सम्भ्रमे। प्रश्ने सम्भावनायाञ्च।"

(ब) मकेति। ललाटं तपतीति ललाटन्तपः "ललाटे तप" इति तपतेः खश्। आकाशमध्यवर्त्तीत्यर्थः घर्म्मांशुः सूर्य्यः। मुहूर्त्तं कियन्तं कालमिति तात्पर्य्यम्।

(भ) कलेति। बालं नूतनं बकुलोद्यानं बकुलोपवनं, अलङ्करोति आत्मन उपस्थित्या शोभयति। मदनवेदनया कामपीड़या खिद्यमाना पीड्यमाना या मालती तस्या लोचनसुखावहं नेत्रप्रीतिकरम्। अस्य माधवस्य प्रतिच्छन्दकं चित्रितप्रतिमूर्त्तिं मुहूर्त्तं विश्रामसौख्यमनुभवतु, पश्चाद्दर्शयिष्यामीति भावः।

(१) (३) चिह्नितौ पाठौ पुस्तकान्तरे न दृश्यते

(२) तपन इति पाठभेदः।

(४) बालुज्जाणं इति पाठः पुस्तकान्तरे।

मक । **तदस्यैव तावदुच्छ्वसितकुसुमकेसरकषायशीतला-मदवासितोद्यानस्य काञ्चनपादपस्याधस्तादुपविशावः ।** (म)

उभौ । तथा कुरुतः ।

मक । **वयस्य ! माधव ! अद्यैव तावत् (१) सकल-नगराङ्गनाजनप्रवर्त्तित महोत्सवाभिराममदनोद्यान (२)-यात्राप्रतिनिवृत्तमन्यादृशमिव (३) भवन्तमवधारयामि । अपि त्वमवतीर्णोऽसि रतिरमणवाणगोचरताम् ? (४) (य)**

माधवः । लज्जयाऽधोमुखस्तिष्ठति । (५)

मक । विहस्य ! **तत् किमवनतमुग्धमुखपुण्डरीकस्तिष्टसि ?(६) पश्य (र)**

(म) मकेति । उच्छ्वसितानां प्रस्फुटितानां कुसुमानां ये केसराः किञ्जल्काः तैः कषायः सुरभिः शीतलश्च य आमोदो गन्धः, तेन वासितं सुरभीकृतं उद्यानं उपवनं येन तस्य तथोक्तस्य ।

(य) मकेति । सकलैर्नगराङ्गनाजनैः नगरवासिभिः स्त्रीलोकैः प्रवर्त्तितः अनुष्ठितः यो महोत्सवः तेन अभिरामं पताकातोरणादिसन्निवेशैः सुन्दरं मदनोद्यानं तस्मिन् यात्रायाः गमनात् प्रतिनिवृत्तं विरतं, अतएव अन्यादृशमिव पूर्व्वतो विलक्षणमिव । अवधारयामि सम्भावयामि । अपिशब्दः प्रश्ने । रतिरमणवाणगोचरतां कामवाणलक्ष्यतां अव तीर्णोऽसि गतोऽसि । तस्यैव सम्भावनाधिक्यादिति भावः ।

(१) कस्मिंश्चित् पुस्तके अयं पाठो नास्ति ।

(२) कामदेवोद्यान इति पाठभेदः ।

(३) क्वचित् इवशब्दो नास्ति ।

(४) अपि नाम मनागवतीर्णोऽसि रतिरमणवाणगोचरमिति पाठान्तरम् ।

(५) माधवः सलज्जमधोमुखस्तिष्ठतीति पाठोऽपि दृश्यते ।

(६) किमवनतमुग्धमुखपुण्डरीकः स्थितोऽसीति भिन्नः पाठः ।

अन्येषु जन्तुषु रजस्तमसा (१) वृतेषु
विश्वस्य धातरि समः परमेश्वरे च।

(२) सखेति। लज्जया माधवस्याधोवदनतादर्शनात् कामावेश एवायमिति निश्चयेन कौतुकोदयात् विहस्येत्युक्तम्। "मधुरस्वरं विहसित"मिति विहसितलक्षणं अवनतं मुग्धं सुन्दरं मुखपुण्डरीकं वदनसिताम्भोजं यस्य सः। वियोगवशात् श्वेततया मुखस्य सिताम्भोजसादृश्यमिति बोध्यम्। कामावेशवशेनात्मनोऽल्पतयावमानजाताशङ्का तामपनेतुमाह पश्येति।

अन्येष्विति। रजस्तमसा रजोगुणेन तमोगुणेन च आवृतेषु प्राधान्येनाधिष्ठितेषु अन्येषु विधातृहरव्यतिरिक्तेषु जन्तुषु प्राणिषु मनुष्यपश्वादिषु तथा विश्वस्य धातरि जगतः स्रष्टरि ब्रह्मणि तथा परमेश्वरे अणिमादिमहैश्वर्य्यशालिनि महादेवे च समः समान-प्रभावः, स प्रसिद्धः अयं उल्लिख्यमानः चित्तजन्मा मनोजः कामः, प्रसिद्धः विभवः अप्रतिहतक्षमतारूपमैश्वर्य्यं यस्य स प्रसिद्धविभवः खलु निश्चितम्। मनुष्यपशुपक्ष्यादीनां का कथा, कामप्रभावात् स्वयं ब्रह्मा स्वकन्यां चकमे, महेश्वरोऽपि ध्यानहीनो मोहिनी-मूर्त्तिदर्शनेन विह्वलश्च बभूव, सुतरां तदावेशवशात् लघुत्वेनात्मन्यवज्ञा त्वया सामान्य-मानवेन न करणीयेति भावः। सत्यमेतत्, किन्तु लज्जया स्वावस्थां विवरीतुं न शक्नोमीति चेत् तत्राह मेति। लज्जया कथञ्चिदल्पापि तव अपह्नुतिः आत्मनोऽवस्था-गोपनं माभूत् न भवतु। वयस्यस्यात्मनिर्विशेषत्वात् सति सम्भवे प्रतीकारोऽवश्यम्भावा-न्नेति भावः।

अत्र यतः समः, अतः प्रसिद्धविभव इति परवाक्यार्थं प्रति पूर्व्ववाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः।

प्राधान्येन रजसावृता मनुष्याः। तथा च सांख्यसूत्रम् "मध्ये रजोविशाला।" प्राधान्येन तमसावृतास्तिर्य्यग्जातयः पश्वादयः। तथा च श्रीमद्भागवते –

"अविदो भूरितमसो घ्राणजा हृद्यवेदिनः।"

(१) अन्येषु जन्तुषु च यस्तमसावृतेष्वित्यपि पाठः

सोऽयं प्रसिद्धविभवः खलु चित्तजन्मा
मा लज्जया तव कथञ्चिदपह्नुतिर्भूत् ॥ २० ॥

माध । वयस्य ! किं न कथयामि, श्रूयताम् । गतोऽहमवलोकिताजनितकौतुकः कामदेवायतनम् । तत्र च (१) इतस्ततः परिक्रम्यावलोक्य च (२) परिस्रमादुल्लसितमदिरामोदमधुर (३)-परिमलाकृष्टसकलमिलदलिपटलसङ्कुलाकुलितबकुलावलीमनोहराभरण (४)-रमणीयस्याङ्गनभुवो बालबकुलस्यालबालपरिसरे स्थितः । (ल) ।

तत्र च (५) यदृच्छया निरन्तरनिपतितानि (६) कुसुमान्यादाय विदग्धरचनामनोहरां स्रजमभिनिर्म्मातुमारब्धवानस्मि । (व) ।

---

सात्त्विकेषु मदनप्रभावनिरासार्थं रजस्तमसावर्तेष्वित्युक्तम् । तथा च भगवद्गीतायाम्—
"काम एष क्रोध एष रजोगुणसमुद्भवः ।"
रजसायुक्तं तम इति रजस्तमः शाकपार्थिवादित्वान्मध्यपदलोपी समासः ।
वसन्ततिलका वृत्तम् ॥ २० ॥

(ल) माधेति । अवलोकितया तदाख्यया कामन्दकीशिष्यया जनितं कौतुकं 'मदनोद्याने मालतीं गमिष्यति तव साक्षात्कारो भविष्यति' इत्थं कौतूहलं यस्य सः । पूर्व्वविष्कम्भके सूचितमेतत् । कामदेवायतनं मदनोद्यानम् । उल्लसितः प्रसृतः यो मदिरामोदवत् सुरासौरभवत् मधुरो मनोहरः परिमलः पवनविमर्दजनितकुसुमगन्धः

---

(१) क्वचित् तत्र चेति नास्ति । (२) अवलोक्येति च क्वचिन्न दृश्यते ।
(३) मधुरमदिरामोदेति पाठान्तरम् । (४) मनोहराभरणस्य इति पाठभेदः ।
(५) तस्य चेति भिन्नः पाठः । (६) विकसितानीत्यधिकः पाठः पुस्तकान्तरे ।

अनन्तरञ्च सञ्चारिणीव देवस्य मकरकेतो ( १ ) र्जगद्विजयवैजयन्तिका निर्गत्य गर्भभवनादुज्ज्वलविदग्धमुग्ध बालनेपथ्य (२)-विरचनाविभावितकुमारीभावा महानुभावप्रकृतिरत्युदारपरिजना कापि तत्रैवा ( ३ )-गतवती ( श )।

सा रामणीयकनिधेरधिदेवता वा
सौन्दर्य्यसारसमुदायनिकेतनं वा।

तेन आकृष्ट समीपमानीतं यत् मकरन्दं सर्व्वविधं मिलदलीनां सम्मिलितभ्रमराणां पटलं समूहः, तेन सङ्कुला व्याप्ता आकुलिता इतस्ततो विक्षिप्तीकृता च या बकुलावली बकुलकुसुमश्रेणी, सैव मनोहरम् आभरणं तेन रमणीयस्य, अङ्गने भवतीति अङ्गनभूमस्य चत्वरदेशोत्पन्नस्य बालबकुलस्य नवीनबकुलवृक्षस्य आलवालपरिसरे मूलस्थजलाधारसमीपे परिश्रमात् अध्वगमनश्रमात् स्थितः विश्रामार्थमुपविष्टः।

( व ) तत्र चेति। यदृच्छया स्वेच्छया उद्देश्यविशेषाभावेनेत्यर्थः। निरन्तरनिपतितानि पतित्वा घनभावेन स्थितानीत्यर्थः। विदग्धरचनया निपुणग्रथनेन मनोहरां रम्यां स्रजं मालाम्।

( श ) अनन्तरञ्चेति। सञ्चारिणीव गमनशीलेव। मकरकेतोः कामस्य। जगद्विजयवैजयन्तिका भुवनजयसूचकपताका। गर्भभवनात् गृहमध्यात्। उज्ज्वलं यत् विदग्धं निपुणं मुग्धं मनोहरं बालनेपथ्यं शिशुचितवेशः तस्य रचनया विधानेन विभावितः सूचितः कुमारीभावः अविवाहितावस्था यस्याः सा, महानुभावप्रकृतिः अतिगम्भीरस्वभावा, अत्युदारः अतीवसरलः परिजनो यस्याः सा।

सेति। सा कुमारी रामणीयकनिधेः सौन्दर्य्याकरस्य अधिदेवता अधिष्ठात्री देवी वा, वा अथवा सौन्दर्य्यसारसमुदायस्य यावन्ति परमसौन्दर्य्याणि सम्भवन्ति तावता-

( १ ) देवस्य सञ्चारिणी मकरकेतनस्य, ईदृशः पाठः कुत्रचित्।

(२) क्वचित् बालशब्दो नास्ति। (३) तत एवागतवतीति कुत्रचित् पाठः।

तस्याः सखे ! नियतमिन्दुसुधामृणाल-
ज्योत्स्नादि कारणमभून्मदनश्च वेधाः ॥ २१ ॥

अथ सा प्रणयिनीभिरनुचरीभिरविरलकुसुमसञ्चयावचय-लीलादोहदिनीभि (१) रभ्यर्थ्यमाना, तमेव बालबकुलपादपो-

सवेत्यर्थः निकेतनं एकाधारः। हे सखे ! नियतं निश्चितं इन्दुसुधामृणालज्योत्स्नादि तस्याः कुमार्य्याः कारणं उपादानकारणं अभूत्, तथा मदनश्च वेधाः स्रष्टा कुलालादिवत् स्रष्टृ निमित्तकारणं अभूत्। तथा च स्वयं मदनो विधाता भूत्वा इन्दुना तस्या वदनं, सुधया अधरं, मृणालाभ्यां बाहुद्वयं, ज्योत्स्नया लावण्यम् ( आदिपदात् ) कदलीस्तम्भेन ऊरुद्वयं पद्माभ्याञ्च पादद्वयं निर्म्मितवानिति सत्यम्, अन्यथा साधारणपञ्चभूताना-मुपादानत्वे वेदाभ्यासजड़स्य साक्षाद्ब्रह्मणः स्रष्टृत्वे च ईदृशमसाधारणसौन्दर्य्यमसम्भव-मेवेति भावः।

अत्र प्रथमार्द्धे भेदेऽभेदाध्यवसायरूपातिशयोक्तिरलङ्कारः, द्वितीयार्द्धे तु इन्द्वादीना-मुपादानत्वासम्बन्धेऽपि तथा मदनस्य स्रष्टृत्वासम्बन्धेऽपि च तत्सम्बन्धोक्तेरतिशयोक्ति-रित्यनयोर्मिथो नैरपेक्ष्यात् संसृष्टिः। केचित्तु नूनशब्दसमानार्थकनियतशब्दोपादानादुत्-प्रेक्षाऽलङ्कार इत्याहुः।

रमणीयस्य भावो रामणीयकं "योपधाद्गुरूपोत्तमा"दिति वुञ्। द्वितीयार्द्धानुरूपः श्लोको यथा विक्रमोर्वश्याम्—

"अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजड़ः कथं नु विषयव्यावृत्तकौतूहलो
निर्म्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः॥

वसन्ततिलका वृत्तम् ॥ २१ ॥

( ष ) अथेति। अविरलस्य निविड़स्य कुसुमसञ्चयस्य बकुलपुष्पसमूहस्य अव-

( १ ) कुसुमसञ्चयावचयलीलाभिलाषवतीभिरिति पाठान्तरम्।

देशमागतवती। तस्याश्च कस्मिंश्चिदपि महाभागधेयजन्मनि बहुदिवसोपचीयमानमिव मन्मथव्यथाविकारमुपलब्धवानस्मि। यतस्तस्याः। (ष)

परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदपाण्डुः कपोलः॥ २२॥

---

चयनलीलायां चयनकेल्यां दोहदोऽभिलाष आसामस्तीति ताभिः। अभ्यर्थ्यमाना "भद्रे! कुसुमानि अवचिनु" इत्थं अनुरुध्यमाना। महाभागधेयेन अतीवसौभाग्येन जन्म यस्य तस्मिन् पुरुषे, बहुदिवसात् उपचीयमानं वर्द्धमानं, मन्मथव्यथाविकारं कामपीड़ाजनितवैषम्यम्।

परिमृदितेति। तस्या मालत्याः अङ्गं हस्तादिकं परिमृदिता आतपतापादिना विकलीकृता या मृणाली अल्पं मृणालं तद्वत् म्लानं मालिन्यमापन्नं, तथा क्रियासु कुसुमचयनादिकार्य्येषु परिवाराणां परिजनानां अनुचरीणामिति यावत् प्रार्थनाभिः अनुरोधैः कथमपि कष्टेन प्रवृत्तिर्यत्नः उपलक्षिता इति शेषः। सुतरां कामविकारस्यैवायं स्वभाव इति भावः। ननु रोगस्वभावोऽपि भवितुमर्हतीत्याह कलयतीति। अभिनवो यः करिदन्तच्छेदः हस्तिदन्तखण्डः तद्वत् पाण्डुः श्वेतः कपोलः तस्या गण्डः निष्कलङ्कस्य हिमांशोश्चन्द्रस्य लक्ष्मीं शोभां च कलयति दधाति। मन्मथविकारमन्तरेण तादृशः कपोलश्वेतिमा न सम्भवतीति भावः।

अत्र प्रथमचरणे लुप्तोपमा, तथा अन्यस्य लक्ष्मीं कथमन्यः कलयतीति वस्तुसम्बन्धासम्भवात् लक्ष्मीमिव लक्ष्मीमिति सादृश्याक्षेपादसम्भववद्वस्तुसम्बन्धरूपा निदर्शना चालङ्कारः। अनयोर्मिथोनैरपेक्ष्यात् संसृष्टिः।

मालिनीवृत्तम् "न न म य य युतेयं मालिनी भोगिलोकै"रिति लक्षणात्॥ २२॥

(१) सा मम दर्शनात् प्रभृत्यमृतवर्त्तिरिव चक्षुषोर्निरतिशयानन्दमुत्पादयन्त्ययस्कान्तमणिशलाकेव लोहधातुमन्तःकरणमाकृष्टवती (२)। (स) किं बहुना,

सन्तापसन्ततिमहाव्यसनाय तस्या-
मासक्तमेतदनपेक्षितहेतुचेतः॥

(स) सेति। अमृतवर्त्तिः पीयूषतूलिका। निर्नं विद्यते अतिशयो यस्मात्तादृशमानन्दं सुखस्य परां काष्ठामित्यर्थः। अयस्कान्तमणिः "कान्तलोह, चुम्बक" इति च भाषा। अन्तःकरणं मम मनः।

अत्र समुत्पन्नानुरागरूपबीजार्थस्य (काव्यार्थस्य) बाहुल्यात् "वयस्य! किं न कथयामि श्रूयतामित्यादि एतदन्तं परिकरो नाम मुखसन्ध्यङ्गम्। यथा दर्पणे—

"समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः।"

सन्तापेति। एतत् मदीयं चेतः कर्त्तृ सन्तापसन्ततिः अविच्छिन्नधारावाही तद्विरहजनितस्तापः, सैव महाव्यसनं विशालविपत्तिः तस्यै तन्निमित्तमित्यर्थः न अपेक्षितः न आश्रितः हेतुः आसक्तिनिमित्तं तत्पित्रादिकर्तृकदानप्रस्तावादि संलापादि वाह्योपाधिरूपं वा येन तत् तादृशं सत् तस्यां प्रमदायामासक्तं लग्नम्। ननु तदासक्तिर्महाव्यसनाय इति चेदवगतं तदा ततः कथं न निवर्त्तसे इत्याह प्राय इति। सर्व्वङ्कषा स्वप्रभावेण जगन्नियमनकारिणी सर्व्वव्यापिनी वा, भगवती स्वयमीश्वरेणाप्यपेक्षितत्वात् माहात्म्यवती भवितव्यतैव नियतिरिव प्रायो बाहुल्येन जन्तोः प्राणिमात्रस्य शुभस्य अशुभस्य विदधाति। यथा इष्टसाधने प्राणिनो न स्वतन्त्रास्तथा अनिष्टप्रतीकारेऽपि, सुतरां नियतिवशात् यदुपस्थितं स्यात् तदवश्यमेवानुभवितव्यमिति तदासक्तिं चिरसन्तापकारणतया जानताऽपि मया निवर्त्तितुं न शक्यमेवेति भावः।

---

(१) सा पुनर्मम प्रथमदर्शनक्षणात् प्रभृतीति पाठान्तरम्।

(२) उपसंहृतवतीति पाठभेदः।

प्रायः शुभञ्च विदधात्यशुभञ्च जन्तोः ।
सर्व्वङ्कषा भगवती भवितव्यतैव ॥ २३ ॥

मक । वयस्य ! माधव ! स्नेहस्य निमित्तसव्यपेक्ष इति (१) विप्रतिसिद्धमेतत् । पश्य (ह)

अत्र प्रथमे पादे सन्तापसन्ततीति व्यञ्जनानामनेकधा सकृत् साम्यात् छेकानुप्रासः, द्वितीये एकतकाराणामसकृत् साम्यात् वृत्त्यनुप्रासः, तथा सामान्येन विशेषसमर्थनरूपो-ऽर्थान्तरन्यासश्चालङ्कार इत्येतेषां संसृष्टिः । तथा तस्यामेतच्चेत आसक्तमित्यनुराग-निष्पत्तेः परिन्यासो नाम मुखसन्ध्यङ्गमेतत् । तथा माधुर्य्यप्रसादगुणाभ्यां तत्तदलङ्कारै-र्णामत्र योगात् भूषणं नाम नाट्यलक्षणञ्च । क्रमशस्तयोर्लक्षणं यथा साहित्यदर्पणे

"तन्निष्पत्तिः परिन्यासः ।" "गुणैः सालङ्कारैर्योगस्तु भूषणम् ।"

"भवितव्यता भाग्य"मिति शब्दकल्पद्रुमः । सर्वङ्कषेति "सर्वकूलाभ्रकरीषेषु कषः" इति कषतेः खप्रत्ययः ।

कर्म्मणः प्राधान्यमुक्तं शान्तिशतकेऽपि "नमस्तत्कर्म्मभ्यो विधिरपि न येभ्यः प्रभ-वती"ति । "ईश्वरः कारणं पुरुषकर्म्मवैकल्यदर्शना"दिति गोतमसूत्रदर्शनात् नैया-यिकमते कर्म्मणः क्वचिन्निष्फलतादर्शनेन ईश्वरस्य कारणताऽङ्गीकारात् प्रायःपद-मभिहितम् ।

वसन्ततिलका वृत्तम् ॥ २३ ॥

(ह) मकेति । "किञ्चेति चार्थः" इति मल्लिनाथः । किञ्चशब्दस्तु आरम्भार्थे तथा च "किञ्चारम्भे च साकल्ये" इति मेदिनी । तेन वाक्यविशेषारम्भे चकारो-ऽयमिति मन्तव्यम् । निमित्तसव्यपेक्षः वाह्योपाधिसापेक्ष इत्येतत् साधारणलोकवाक्यं विप्रतिसिद्धं विरुद्धं असमीचीनमित्यर्थः । वस्तुदृष्टिमवलम्ब्य तस्यासमीचीनतां प्रति-पादयितु माह पश्येति ।

(१) स्नेहस्य निमित्तसव्यपेक्षश्चेति पुस्तकान्तरे पाठः ।

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ २४ ॥

ततस्ततः ।

माध । ततश्च तत्र । (च)

सभ्रूविलासमथ सोऽयमितीरयित्वा (१)
सप्रत्यभिज्ञमिव मामवलोक्य तस्याः ।

---

व्यतिषजतीति । आन्तरः अन्तःकरणवर्त्ती कोऽपि निर्दिष्टुमशक्यः हेतुः कारणं पदार्थान् वस्तूनि व्यतिषजति परस्परं सम्मेलयति ; किन्तु प्रीतयः स्नेहाः बहिरुपाधीन् बाह्यविशेषणानि भार्य्यात्व-पुत्रत्वादिसर्वविदितकारणानीत्यर्थः न खलु संश्रयन्ते कारणत्वेनापेक्षन्ते । हि यस्मात् पुण्डरीकं पद्मं कर्त्तृ पतङ्गस्य सूर्य्यस्य उदये सति विकसति, तथा चन्द्रकान्तः स्वनामप्रसिद्धो मणिश्च हिमरश्मौ चन्द्रे उद्गते उदिते सति द्रवति निष्यन्दते जलमेवं क्षरति । सुतरां हेतुमनपेक्ष्यापि तव चेतो यत्तस्यामासक्तं तत् सम्भवपरमेवेति भावः ।

अत्र विशेषद्वयेन सामान्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । इदमुदाहरणं नाम नाट्यलक्षणं । तथा दर्पणे ।

"यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात् ।
साध्यतेऽभिमतश्चार्थ स्तदुदाहरणं मतम् ॥"

"उपाधिर्धर्म्मचिन्तायां कुटुम्बव्यापृते छले । विशेषणे पुंसी"ति मेदिनी । उत्तररामचरितषष्ठाङ्के रामेण लवमवलोक्य अविकल एवायं श्लोकः पठितः । मालिनी वृत्तम् ॥ २४ ॥

(च) माधेति । तत्र तस्मिन् स्थाने ।

(१) सोऽयमितीव नाम इति पाठान्तरम् ।

अन्योन्यभावचतुरेण (१) सखीजनेन
मुक्तास्तदा स्मितसुधामधुराः कटाक्षाः ॥ २५ ॥

मक। स्वगतम्। कथं प्रत्यभिज्ञाऽपि नाम। (क)

माध। अथ ताः सलीलमुत्तालकरकमललुलितताल्लिका-तरलवलयावलोकं उत्तस्तमत्तकलहंसविभ्रमाभिरामचरण-

सखविलासमिति। अन्योन्यभावं आवयोः परस्परावस्थायां चतुरेण निपुणेन मालतीमाधवयोरावयोः परस्परावस्थां सम्यग्विजानतेत्यर्थः तस्याः मालत्याः सखीजनेन मामवलोक्य सोऽयं "मालति! यदर्थं त्वमुत्कण्ठितासि, अयं सः" इति वाक्यं सप्रत्यभिज्ञमिव पुनरनुभवेन सहैव सभ्रविलासं भ्रुवोर्विभ्रमेण सहितं इङ्गयित्वा उक्ता अथानन्तरं तदा तस्मिन् काले स्मितमेव सुधा स्मितं सुधेव वा तया मधुरा मनोहराः कटाक्षाः अपाङ्गेन दृष्टयः मुक्ताः परस्परं त्यक्ताः।

अत्र सप्रत्यभिज्ञमिवेति भावाभिमानिनी वाच्या गुणोत्प्रेक्षा, तथा स्मितसुधामधुरा इति उपमारूपकयोः साधकबाधकप्रमाणाभावात् सन्देहसङ्करः, इत्यनयोर्मिथोनैरपेक्ष्यात् संसृष्टिः।

अनुभूतस्य पुनरनुभवः प्रत्यभिज्ञा। किन्तु मालत्याः सखीजनेन कदाचिदपि माधवस्याननुभूतत्वात् तदानीं दर्शनेऽपि वास्तविकप्रत्यभिज्ञा नासीत्, परन्तु चित्रदर्शनात् प्रत्यभिज्ञावद्व्यवहार इति प्रतिपादनाय इवशब्दप्रयोगः।

वसन्ततिलका वृत्तम् ॥ २५ ॥

(क) मकेति। अनुभूतपुनरनुभवस्य प्रत्यभिज्ञापदार्थत्वात् किमितः पूर्वंत एवायमुद्यमो जात इति भावः।

(ख) माधेति। ता मालतीसख्यः। सलीलमित्यादिकं क्रियाविशेषणद्वयं। सलीलं यथा स्यात्तथा। उत्ताला महती या करकमलयोर्ललिता मनोहरा ताल्लिका

---

(१) अन्योन्यमेवचतुरेण इति पाठभेदः।

सञ्चरण झणझणायमान (१) मञ्जीरमञ्जु शिञ्जिता (२) नुविद्ध-मेखलाकलापकिङ्किणीरणत्कार (३) मुखरं प्रतिनिवृत्य "भर्त्तृ-दारिके! दिष्ट्या वर्द्धामहे, यदत्रैव कोऽपि कस्यापि (४) वल्लभस्तिष्ठती" ति मामङ्गुलीदलविलासेनाख्यातवत्यः। (ख)

मक। स्वगतम्। हन्त, महतः प्रथमानुरागस्योद्भेदः। (५) (ग)

कल। आकर्ण्य। कथं सरसरमणीयानुवन्धिणी इत्थीअण-कधा (६)। (घ)

---

(घ) कथं सरसरमणीयानुबन्धिनी स्त्रीजनकथा।

ऊर्द्ध प्रसारितकरतलस्य परस्पराघातः तेन तरला चञ्चला वलयावली कङ्कणश्रेणी यस्मिन् कर्म्मणि तत् यथा तथा। उवस्त उद्विग्नः मत्तश्च यः कलहंसः तस्य विभ्रमवत् विशिष्ट-भ्रमणवत् अभिरामं मनोहरं यत् चरणसञ्चरणं पादक्षेपः, तेन झणझणायमानं यत् मञ्जीरं नूपुरं तस्य मञ्जुशिञ्जितेन मधुररवेण अनुविद्धः अनुसृतः मिलित इति यावत् यः मेखलाकलापस्य काञ्चीदाम्नः किङ्किणीरणत्कारः क्षुद्रघण्टिकाध्वनिः तेन मुखरं यथा स्यात्तथा; प्रतिनिवृत्य यदृच्छया ममान्तिकमागताः पुनर्मालतीसमीपं गत्वा। भर्त्तृ-दारिके! स्वामिकन्ये! दिष्ट्या भाग्येन। अङ्गुल्य एव दलानि तेषां विलासेन विन्यास-विशेषेण। आख्यातवत्यः निर्दिष्टवत्य इत्यर्थः। कस्यापि जनस्य वल्लभ इत्यनेन मालत्या-वल्लभ इति ध्वनितम्।

(ग) मकेति। हन्त हर्षे। प्रथमानुरागस्य पूर्वरागस्य उद्भेदः प्रकाशः। उभयोरपि मालतीमाधवयोरिति भावः।

(घ) कलेति। सरसं रमणीयञ्च यथा तथा अनुबन्धुं अनुकर्त्तुं शीलं यस्याः सा।

(१) रणरणायमान इति पाठान्तरम्। (२) मञ्जुमञ्जीरक्वणितानुविद्धेति पाठभेदः।

(३) रणरणत्कार इति क्वचित् पाठः। (४) कस्या अपि इति भिन्नः पाठः।

(५) प्रागनुरागस्य इति पुस्तकान्तरे पाठः। (६) इत्थि आकधा इत्यपि पाठः।

मक। तत स्ततः ?

माध। अत्रान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्र्यमुल्लसितविभ्रममुत्पलाक्ष्याः (१)
तद्भूरिसात्त्विकविकारमपास्तधैर्य्य-
माचार्य्यकं विजयि मान्मथमाविरासीत् ॥२६॥

ततश्च। स्तिमितविकसितानामुल्लसद्भ्रूलतानां
मसृण मुकुलितानां प्रान्तविस्तारभाजाम्।

अत्रेति। अत्रान्तरं अस्मिन्नवसरे उत्पलाक्ष्याः पद्मनयनाया मालत्याः किमपि अनिर्वचनीयं, वाग्विभवं वाक्शक्तिं अतिवृत्तमतीतं वैचित्र्यं यस्य तत् वाक्पथातीत वैचित्र्यं, उल्लसितः प्रकाशितः विभ्रमो विलासः शृङ्गारचेष्टाविशेषो यत्र तत्। भूरि प्रचुरः सात्त्विकविकारः स्तम्भादिसात्त्विकभावो यत्र तत्। अपास्तं दूरीकृतं धैर्य्यं येन तत्, अत एव विजयि जयशीलं सर्वत्राप्रतिहतं, तत् प्रसिद्धं, मान्मथं कामकृतं आचार्य्यकं आचार्य्यभावः मन्मथदत्तशिक्षेत्यर्थः आविरासीत् प्रादुर्भूतं।

विभ्रममाह भरतः—"चित्तवृत्तेरनवस्थितत्वं शृङ्गारजो विभ्रम उच्यतेऽसौ।"

सात्त्विकमाह विश्वनाथः "स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका मताः॥"

वसन्ततिलका वृत्तम् ॥ २६ ॥

स्तिमितेति। अहं, आदौ स्तिमितानि मयि निश्चलानि, अनन्तरञ्च विकसितानि ममाङ्गानां विशेषनिर्णयाय विकचीकृतानि तेषां, उल्लसन्त्यौ उन्नमन्त्यौ भ्रूलते येषु तेषां आदौ मसृणानि अनुरागेण मनोहराणि परञ्च मुकुलितानि निरतिशयसुखास्वादात् ईषन्निमीलितानि तेषां, प्रान्ते अपाङ्गदेशे विस्तारं भजन्ति इति तेषां सम्यगाश्लिष्टमदङ्ग-

(१) आयताक्ष्या इति पाठान्तरम्।

प्रतिनयननिपाते किञ्चिदाकुञ्चितानां
विविधमहमभूवं पात्रमालोकितानाम् ॥ २७ ॥

ततश्च (१) अलसवलितमुग्धस्निग्धनिष्पन्दमन्दै (२)
रधिकविकसदन्तर्विस्मयस्मेरतारैः।

---

रूपविषयाणामित्यर्थः। नयननिपातं मम दृष्टिपातं प्रतीति प्रतिनयननिपातं तस्मिन् यदा मयापि दृष्टिपातः कृत स्तदेत्यर्थः किञ्चिदाकुञ्चितानां लज्जया ईषत्सङ्कुचितानां आलोकितानां मालत्याः सहसा दर्शनानां विविधं नानारूपं पात्रं भाजनं विषय इत्यर्थः अभूवं भूतवान्।

केचिदनयोः परिकरालङ्कारं वदन्ति। स्मितदर्शनादीनां लक्षणानि निपुणरि भूतानि। यथा—

"स्वर्गोचरात्र चाल्यं न यत्तत् स्मितमुच्यते।"

"विकासितं यद्विषयं विशेषमवगाहते।"

"सरुणं तत्तु विज्ञेयमनुरागकषायितम्।"

"स्फुरिताश्लिष्टपक्ष्माग्रा मुकुलीईषत्पटाञ्चिता।"

"सुखोन्मीलिततारा च मुकुला दृष्टिरिष्यते॥"

"येनाश्लिष्टोहि विषय स्तद्विस्मारीति कथ्यते।"

"अपाङ्गभागसङ्कोचो यत्र तत् कुञ्चितं भवेत्।"

आलोकितमाह भरतः—"सहसा दर्शनं यत्स्यात्तदालोकितमुच्यते।"

मालिनी वृत्तम् ॥ २७ ॥

अलसेति। अलसाः लज्जया कथञ्चिन्निवृत्ताः, वलिताः पुनर्दर्शनोत्कण्ठया तिर्य्यगुदञ्चिताः, मुग्धाः भावगर्भा अपि छलेन स्वाभाविकाः, स्निग्धाः स्नेहस्वरूपप्रतिभावानुसारिणः, निष्पन्दाः स्वविषयं परिहाय अन्यत्र न चलन्तः, मन्दाः विषयान्तरगमनानुद्यताः

(१) हैर्य्यं ति क्वचित् पाठः। (२) निष्पन्दमन्दैरिति पाठोऽपि दृश्यते

हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै-
रपहृतमपविद्धं पीतमुन्मूलितञ्च ॥ २८ ॥

अहन्तु (१) तस्याः सर्वाकारहृदयङ्गमायाः सम्भाव्यमान-स्नेहरसेन सन्निधिना (२) विधेयीकृतोऽपि परिप्लवत्वमात्मनो-

---

तैः। तथा अधिकं यथा स्यात्तथा विकसन् प्रकाशमानो यः अन्तर्विस्मयः अन्तःकरणगतमाश्चर्यं तेन स्मेरा प्रस्फुरिता तारा कनीनिका येषु तैः पक्ष्मलाक्ष्याः पक्ष्माणि अतिनिविड़पक्ष्ममालं अक्षिणी यस्याः तस्याः मालत्याः कटाक्षैः पूर्वोक्तविशेषणविशिष्टैः अपाङ्गदर्शनैः मे मम अशरणं रक्षकशून्यं हृदयं अपहृतं बलादाकृष्य गृहीतमिव, तथा अपविद्धं स्वात्मनि विक्षिप्तमिव, पीतं अन्यत्र गमनसामर्थ्याभावात् निगीर्णमिव, तथा कस्यापि विषयस्याग्रहणात् उन्मूलितमिव उत्खातमिव। तस्याः कटाक्षैरतीवविह्वलोऽस्मीति भावः।

अत्र अपहृतमिवेत्याद्यर्थानुसन्धानात् चतस्रो भावाभिमानिन्यः प्रतीयमानाः क्रियोत्प्रेक्षाः, तथा छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां मिथोनिरपेक्षत्वात् संसृष्टिरलङ्कारः।

अलसादीनां लक्षणानि च विप्रगादिष्टतानि। यथा—

"अलसं तदभीष्टार्थाद्व्रीडाद्यैर्यन्निवर्त्तते।"
"वलितं तन्निवृत्तस्य भूयस्त्र्यावलोकनम्।"
"त्र्यस्रं तिर्य्यगुदञ्चितम्।"
"स्वभावालोकितं मुग्धं भावगर्भमपि च्छलात्।
"स्निग्धं यद्रतिभाविन स्नेहप्रायेन संयुतम्।"
"निष्पन्दं तद् यदन्यत्र दृष्टान्न स्पन्दते क्वचित्।"
"मन्थरा मन्दसञ्चारा।"

मालिनी वृत्तम् ॥ २८ ॥

(१) एवमहन्तु इत्यपि पाठः क्वचित्।

(२) अभिसन्धिना इति पाठान्तरं।

निङ्क्षोतुकामः (१) प्राक्प्रस्तुतस्य बकुलपुष्पदाम्नो यथा कथञ्चिदवशेषं ग्रथितवानेव। ततो मिलितवेत्रपाणि (२) वर्षवरप्रायपुरुषपरिवारा गजवधूमारुह्य नगरगामिनं मार्गमिन्दुवदनाऽलङ्कृतवती। तदा च (ङ)।

यान्त्या मुहुर्वलितकन्धरमाननं तत्
आवृत्तवृन्तशतपत्रनिभं वहन्त्या।

---

(ङ) अहन्विति। सर्वाकारेण लावण्यसौन्दर्य्यकटाक्षहावभावादिना सर्व्वेण प्रकारेण हृदयङ्गमायाः मनोरमायाः तस्याः मालत्याः, सम्भाव्यमानः कथञ्चिन्निर्णीयमानः स्नेहरसः प्रेमानुरागो यत्र तेन, सम्भाव्यमानमत्प्रेमानुरागप्रयुक्तेनेत्यर्थः सन्निधिना मत्समाप्य्येन विधेयीकृतोऽपि वशीकृतोऽपि अहं आत्मनः स्वस्य पारिप्लवत्वं चाञ्चल्यं निङ्क्षोतुकामः अन्येभ्यो गोपयितुमिच्छुः सन् प्राक्प्रस्तुतस्य पूर्व्वमारब्धस्य बकुलपुष्पदाम्नः बकुलकुसुममालायाः, अवशेषं अवशिष्टांशं यथाकथञ्चित् प्रकारेण चित्तहस्तयोर्नितान्तचाञ्चल्यादतिकष्टेनेत्यर्थः ग्रथितवानेव। अन्यथा यदि कश्चित् संशयीतेति भावः। मिलिता उपस्थिता वेत्रपाणयो वर्षवरप्रायाः नपुंसकप्राया पुरुषा एव परिवारा परिजना यस्याः सा तथोक्ता। इन्दुवदना चन्द्रानना मालती। गजवधूं काञ्चित् हस्तिनीं। अलङ्कृतवती गमनेन शोभितवती।

"षण्ढोवर्षवर" इत्यमरः।

यान्त्येति। मुहुः पुनः पुनः वलिता पश्चादवस्थितं मामवलोकयितुं परिवर्त्तिता कन्धरा ग्रीवा यस्मिन् कर्म्मणि तद् यथा तथा यान्त्या गच्छन्त्या अतएव आवृत्तं पवनान्दोलनादिना परिवर्त्तितं वृन्तं यस्य तादृशं यत् शतपत्रं पद्मं तन्निभं तत्तुल्यं तत् आननं मुखं वहन्त्या धारयन्त्या पद्मनाल्या तया मालत्या अनेन च तदानीं निरतिशयानन्द-

(१) अपनिङ्क्षोतुकाम इत्यपि पाठः।

(२) मिलितवेत्रशस्त्रपाणीति पाठभेदः।

दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥ २९ ॥

ततः प्रभृति—

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।

---

जननात् इदानीमपि तेनैव जीवनाच्च सुधया, तथा विषेण च दुःमर्मविर्गोनच्छेदना कारणत्वात् गरलेन च दिग्धो लिप्त इव कटाक्षः अपाङ्गनापरमेकं दर्शनं मे मम हृदये गाढं निखात इव प्रोथित इव ।

अत्र आवृत्तवन्तशतपत्रनिभमिति लुप्तोपमा, तृतीयपादे अमृतविषयोर्विरुपयोः संघटनया विषमः, तथा वस्तुतो दिग्धत्वाभावात् इवाद्यभावाच्च प्रतीयमाना भावाभिमानिनी क्रियोत्प्रेक्षा, निखात इवेति वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा, च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः । गाढं निखात इव इत्यनेन कटाक्षस्य मदननाराचत्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः । तथा युगपदानन्दविषादोदयात् विधानं नामेदं मुखसन्ध्यङ्गं । तथा च दर्पणे—

"सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम् ।"

न च विलोभनाद्यङ्गमनिर्दिश्य परवर्त्ति विधानं नामाङ्गमत्र कथं निर्दिष्टमिति वाच्यं "एतानि चाङ्गानि ( उपक्षेप परिकर परिन्यासरूपाणि ) उक्तेनैव पौर्व्वापर्य्येण सम्भवन्ति अङ्गान्तराणि त्वन्यथाऽपीति दर्पणकारेणैव व्यतिक्रमस्वीकारात् । एवमन्यत्रापि बोध्यम् ।

वसन्ततिलका वृत्तम् ॥ २९ ॥

परिच्छेदेति । इयान् एतावानिति निश्चयात्मकं ज्ञानं परिच्छेदः तमतीत. इयत्तया ईदृक्तया वा निर्द्देष्टुमशक्यः, सकलवचनानां वाचक-लक्षक-व्यञ्जकरूपाणां सर्वेषां शब्दानां अविषयः केनापि शब्देन प्रतिपादयितुमशक्यः, पुनर्जन्मनि जन्मान्तरे

विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापञ्च कुरुते(१)॥३०॥

अपि च ।

परिच्छेदव्यक्तिर्भवति न पुरःस्थेऽपि विषये
भवत्यभ्यस्तेऽपि स्मरणमतथाभावविरसम् ।
न सन्तापच्छेदो हिमसरसि वा चन्द्रमसि वा
मनो निष्ठाशून्यं भ्रमति च किमप्यालिखति च ॥ ३१॥

---

कस्मिंश्च जन्मनि यः, अनुभवपथं ज्ञानविषयतां न गतवान् कदाचिदपि नानुभूत इत्यर्थः । तथा विवेकस्य तात्त्विकज्ञानस्य प्रध्वंसात् संक्षयात् उपचितेन वर्द्धितेन महामोहेन विषयाज्ञानेन गहनः भीषणः कोऽपि अनिर्वचनीयः विकारः मालतीवियोगजनितवैषम्यं अन्तः चित्तं जडयति विकलीकरोति तापञ्च कुरुते सन्तापयति च । अतोऽयं विकलोऽस्मीति भावः ।

अत्र जडयति तापं कुरुते इत्यनेकक्रिययोर्विकार इत्येककारककत्वात् दीपकमलङ्कारः ।

पर्य्यकप्राधान्यसूचनार्थं चकारद्वयं । शिखरिणीवृत्तम् ॥ ३० ॥

परिच्छेदेति । पुरःस्थे ऽपि इन्द्रियसन्निकर्षयोग्ये अग्रतो विद्यमानेऽपि विषये वस्तुनि परिच्छेदव्यक्तिः घटोऽयं पटोऽयमिति निश्चयात्मकेन ज्ञानेन प्रकाशो न भवति मनसो विकारोपहततया वहिरिन्द्रियासम्बन्धादिति भावः । तथा अभ्यस्तेऽपि अनेकानुभवेन स्थिरीकृतसंस्कारेऽपि विषये अतथाभावेन अतथात्वेन अतद्रूपत्वेन विरसं विपर्य्यस्तं स्मरणं भवति अतएव परिचितोऽपि घटः पटरूपेण स्मृतावाविर्भवतीत्यर्थः तथा हिमसरसि तुषारदीर्घिकायां वा चन्द्रमसि हिमांशुकिरणे वा सञ्चारकाले इत्यर्थः सन्तापच्छेदः

---

(१) तनुते इति पाठान्तरम् ।

कल। दिढ़ं क्खु एसो कए वि अवहरिदो। अवि णाम मालदो ज्जेव माभवे ?। (च)

मक। स्वगतम्। अहो अभिषङ्गः। तत् किं निषेधयामि प्रियसुहृदम् अथवा। (छ)

मा मूमुहत् खलु भवन्तमनन्यजन्मा
मा ते मलीमसविकारघना मतिर्भूत्।

(च) दृढ़ं खल्वेष कयापि अपहृतः। अपि नाम मालत्येव सा भवेत् ?

तद्विरहजनिततापापगमो न भवति। तथा निष्ठाशून्यं अवस्थितिरहितं अधीरमिति यावत् मनः कर्त्तृ भ्रमति च, इतस्ततो विचरति च, तथा किमपि अनिर्वचनीयं वस्तु आलिखति अवगाहते विषयीकरोति च। दुःसहेण तद्विरहेण नितान्तविधुरोऽस्मीति भावः। अनेनोन्मादावस्थाऽभिहिता।

अत्र प्रथमार्द्धे विरहेण समाधानाद्विरोधाभासोऽलङ्कारः, तृतीयचरणे शीतलोपचाररूपहेतौ सत्यपि तत्फलसन्तापच्छेदाभावात् विशेषोक्तिः, तथा चतुर्थचरणे भ्रमत्यालिखतीत्यनेकक्रिययोरेकमनःकर्त्तृकारकत्वात् पूर्ववत् दीपकञ्च, इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः।

शिखरिणी वृत्तम् ॥ २१ ॥

(च) कलेति। अपहृतः सौन्दर्य्येण अनुरागप्रकाशेन वा आकृष्टः।

(छ) मकेति। अहो आश्चर्य्यः अत्यधिक इत्यर्थः अभिषङ्ग आसक्तिः।

मेति। न अन्यस्मात् चित्तव्यतिरिक्तात् जन्म यस्य स अनन्यजन्मा मन्मथः भवन्तं मा मूमुहत् न मोहयतु। खल्विति निषेधे। तथा ते तव मतिः मलीमसः मलिनतमोजन्यत्वात् मलिनो यो विकारः कामावेशः तेन घना सान्द्रा छन्ना माभूत् न भवतु इत्यादि वाक्यं इह अस्मिन् माधवे निरर्थकमेव फलजननाभावात् व्यर्थमेव भवेत्। नन्वि-

(१) अभिष्वङ्ग इति पाठान्तरम्।

इत्यादि नन्विह निरर्थकमेव, यस्मिन् (१)
कामस्य जृम्भितगुणो नवयौवनञ्च ॥ ३२ ॥

प्रकाशम् । वयस्य ! अपि विदितं (२) तदन्वयनामनी ? (ज)

---

त्यात्मनिश्चयं । कथमेतदित्याह यस्मिन्निति । यस्मिन् माधवे जृम्भितो बाहुल्येन प्रकटितो गुणः सम्मोहननैपुण्यं येन तादृशः कामः, नवयौवनञ्च वर्त्तते । मादृशां तादृश निषेधापेक्षया जृम्भितगुणकामावेशस्य स्वाभाविकनवयौवनविकारस्य च शतधाप्रबलत्वमिति भावः ।

अत्र निरर्थकमेवेति वाक्यार्थं प्रति यस्मिन्नित्यादिवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुक काव्यलिङ्गमलङ्कारः, तथा तत्र कामस्य जृम्भितगुणत्वरूपे एकस्मिन् कारणे सत्यपि नवयौवनरूपकारणान्तरोपन्यासात् समुच्चयश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः । "आत्मा जानाति यत् पाप" मित्यादिवत् यस्मिन्निति यत्पदस्य परवाक्यगतत्वेन तच्छब्दानपेक्षणात न वाक्य-गतविधेयाविमर्शदोषः ।

"कुसुमेषुरनन्यज" इत्यमरः । वसन्ततिलका वृत्तम् ॥ ३२ ॥

( ज ) प्रकाशमिति । "सर्व्वश्राव्यं प्रकाशं स्या"दिति प्रकाशलक्षणं । अपि शब्दः प्रश्ने । तस्याः प्रमदाया अन्वयनामनी वंशनामधेये । सा चेत् नीचजातीया, तत्र मातृनाम्नी वा स्यात्तदा विवाह्यत्वाभावेन तस्यामासक्तिर्निष्फलैव ।

"सदृशीं भार्य्यां विन्देत इति विष्णुवचनात्
मातु र्यन्नाम गुह्यं स्यात् सुप्रसिद्धमथापि वा ।"
तन्नाम्नी या भवेत् कन्या मातृनाम्नीं प्रचक्षते ॥
प्रमादाद् यदि गच्छेयात् प्रायश्चित्तं समाचरेत् ।
ततश्चान्द्रायणं कृत्वा तां कन्यां परिवर्जयेत् ॥

इति मत्स्य सूक्त वचनाच्चेति भावः ।

(१) यस्मादित्यपि पाठः ।

(२) अपि वयस्येन विदिते इति पाठान्तरम् ।

माध। सखे! श्रूयताम्। अथ तस्याः करेणुकारोहणसमय एव महतः (१) सखीकदम्बकादन्यतमा वारयोषित् विलम्ब्य कुसुमावचयक्रमेण (२) नेदीयसी भूत्वा प्रणम्य कुसुमापीड़-व्याजेन मामेवमुक्तवती। (झ)

"महाभाग! सुश्लिष्टगुणतया रमणीय एष वः सुमनसां (३) सन्निवेशः। कुतूहलिनी च नो भर्तृदारिकाऽस्मिन् (४) वर्त्तते।

(झ) माधेति। अहो विदित एव तदन्वयनामनी इत्याख्यातुं तावद्वृत्तान्तमाह अथेति। करेणुका हस्तिनी। महतः विशालात् सखीकदम्बकात् वयस्यासमूहात्, अन्यतमा काचित्। विलम्ब्य यावदन्या दूरं व्रजन्ति तावत्कालं कुसुमचयनच्छलेन विलम्ब्येति तात्पर्य्यं। एकाकिन्या एव माधवसमीपे गमनार्थमिदं विलम्बनमिति बोध्यम्। कुसुमावचयक्रमेण पुष्पचयनपारम्पर्य्येण, आदौ यत्किञ्चिदेकं कुसुमं चिन्वती किञ्चिदासन्ना ततः पुनरपरं चिन्वती ततोऽप्यासन्ना, इत्येवं क्रमेणेत्यर्थः, नेदीयसी भूत्वा मम अत्यन्त-निकटवर्त्तिनी भूत्वा। कुसुमस्य य आपीड़ः शिरसि तिर्य्यग्बद्धमाल्या तस्य व्याजेन शिरसि तिर्य्यग्बद्धा या कुसुममाला, तस्या मुख्यतस्थापनच्छलेनेत्यर्थः प्रणम्य मां नमस्कृत्य। अत्र प्रणामेन त्वमेवास्मद्भर्तृदारिकाया भर्त्तेति तया सूचितम्।

अथवा कुसुमापीड़व्याजेन मया ग्रथ्यमानबकुलकुसुममालाप्रार्थनाच्छलेन। एवं वक्ष्यमाणं।

तद्वाक्यमनुवदति महाभागेति। हे महाभाग! परमरमणीयाकृतिमत्तया महा-भाग्यशालिन्! एष दृश्यमानः वो युष्माकं सुमनसां बकुलकुसुमानां सन्निवेशः ग्रथनं

(१) तत इति पाठभेदः।

(२) बालबकुलकुसुमावचयक्रमेणेति भिन्नः पाठः।

(३) क्वचित् 'वः सुमनसां' इति पाठो नास्ति।

(४) कुवचित् 'अस्मिन्' इति पाठोऽपि न दृश्यते।

**तस्यामभिनवो विचित्रः कुसुमेषुव्यापारः। लब्धवतु कृतार्थता वैदग्ध्यस्य। फलतु निर्म्माणरमणीयता विधातुः आसादयतु(१) सरस एष भर्त्तृदारिकायाः (२) कण्ठावलम्बनमहार्घता"-मिति। (ञ)**

सुश्लिष्टगुणतया सम्यक्संलग्नसूत्रत्वेन कुसुमविवरपूरणोपयोगिपीवरसूत्रत्वेन कुसुमानां सुसमानावस्थानेनेत्यर्थः रमणीयो मनोहरः। तेन किमित्याह कुतूहलिनीति। नोऽस्माकं भर्त्तृदारिका असौ दूरे दृश्यमाना स्वामिकन्या, अस्मिन् त्वया ग्रथ्यमाने कुसुमदाम्नि कुतूहलिनी ग्रहणाय कौतुकवती वर्त्तते। ननु श्रमेण ग्रथ्यमान-मिदं कथं दीयते इत्याह तस्यामिति। तस्यां भर्त्तृदारिकायां, अभिनवो नूतनः विचित्रः अतीवाश्चर्य्यः कुसुमेषु मालानिर्म्माणोपयोगिषु पुष्पेषु विषये व्यापारः ग्रथनशक्तिः विद्यते। तत्तस्मात् वैदुग्ध्यस्य तवैतन्मालारचनानैपुण्यस्य कृतार्थता तस्यै प्रदानेन चरितार्थता भवतु। सा खलु मालारचनायामभिनवविचित्रनैपुण्यवती जाता सुतरां तस्यै प्रदानेन गुणिनि जने निजगुणप्रकाशात् तवास्य रचनानैपुण्य-गुणस्य चरितार्थकता भवेदिति भावः। तथा विधातुर्निर्म्मातुः स्रत्र निर्म्माणेन रमणीयता कुसुमदाम्नोऽपि सौन्दर्य्यं फलतु। रमणीयहस्तसंसर्गात् कुसुमदाम्नोऽपि सौन्दर्य्यं सार्थकं भवतु, सुतरां श्रमनिर्म्मितामपीमां तस्यै दातुमर्हसीति भावः। ननु तयापि कथं गृह्यत इत्याह आसादयत्विति। सरसः सद्यःपतितकुसुमैर्निर्म्मीयमानत्वात् अम्लानः अशुष्कः, एष माल्यगुच्छः भर्त्तृदारिकायाः अस्मत्स्वामिकन्यायाः कण्ठावलम्बनेन गलदेशाश्रयणेन महार्घतां मुक्तामालास्पदलाभान्महामूल्यतां आसादयतु प्राप्नोतु अस्माकं भर्त्तृदारिका खलु कण्ठे दातुमेवेमां याचत इत्यर्थः।

अर्थ दमप्यर्थान्तरं ध्वनयति, यथा। एषः अस्माभिः सखीजनैश्च सहृदयैः अभिलष्यमाणः, सुमनसां योग्ययोरिव परस्परयोरनुरागेणाकर्षणात् प्रशस्तमनसां यो

(१) समासादयतु इपि पाठान्तरम्।
(२) भर्त्तृदारिकायां इति सप्तम्यन्तः पाठभेदः।

मक । अहो वैदग्ध्यम् । (ट)

---

युष्माकं गौरवाद्बहुवचनं मालतीमाधवयोर्युवयोरित्यर्थः सन्निवेशः आवेशः परस्परासक्तिसम्बन्धः, सुश्लिष्टगुणतया रूपलावण्यादिसुयोग्यगुणकतया रमणीयः । विशेषतस्तु नोऽस्माकं भर्तृदारिका अस्मिन् सन्निवेशे कुतूहलिनी आपेचिकबालत्वात् कौतुकवती च वर्त्तते । पुनश्च, तस्यां भर्तृदारिकायां अभिनवः प्राथमिकः विचित्रः नानाविधभावप्रकाशादतीवाश्चर्य्यः कुसुमेषोः कामस्य व्यापारः भवन्तं लक्ष्यीकृत्य प्रादुर्भावो वर्त्तते तत्तस्मात् वैदग्ध्यस्य युवयोः सकलकलानैपुण्यस्य कृतार्थता परस्परयोः परस्परानुभवात् सार्थकता भवतु । तथा विधातुः स्रष्टुर्ब्रह्मणः निर्म्माणरमणीयता युवयोः सृष्टिसौन्दर्य्यमपि फलतु योग्यसमागमादिति भावः । मुख्यं प्रतिपाद्यमाह आसादयत्विति । सरसो रसिकः, एष भवान्, भर्तृदारिकायाः कण्ठावलम्बनेन कण्ठालिङ्गनेन महार्घता अन्ययुवतीनां दुर्लभत्वात् महामूल्यतां आसादयतु प्राप्नोतु । इति इत्थं उक्तवतीत्यन्वयः ।

अत्र मालत्यासक्तिज्ञापनरूपप्रधानार्थसूचनादिदमेकं पताकास्थानं तथा च दर्पणे ।

"द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः ।
प्रधानार्थान्तराक्षेपी पताकास्थानकं परम् ॥"

अत्र याच्ञा नाम नाट्यालङ्कारश्च । यथा तत्रैव—

"याचञा तु क्वापि याच्ञा या स्वयं दूतमुखेन वा ।"

तथा मालत्यनुरागरूपबीजस्य सम्यगाहितत्वादिदं समाधानं नाम मुखसन्ध्यङ्गं । तथा च तत्रैव—

"बीजस्यागमनं यत्तु तत् समाधानमुच्यते ।"

कादम्बर्य्यामपीदृशी चन्द्रापीडोक्तिर्यथा "अनवरतकृताश्रुबिन्दुपातेन वर्त्तते मुक्ताभरणता, गृहाण स्वयंवरार्हाणि मङ्गलप्रसाधनानि, सकुसुमशिलीमुखा हि शोभते नवालते"ति ।

(ट) मकेति । अहो आश्चर्य्यं, वैदग्ध्यं तत् परिचारिकायाः आगमनप्रणामवाक्यानां चातुर्य्यम् ।

माध। तया च मदनुयुक्तया समाख्यातं "इयममात्यभूरिवसोः प्रसूतिर्मालती नाम, अहञ्च प्रसादभूमिर्भर्तृदारिकाया धात्रेयिका लवङ्गिका नामे"ति। (ठ)

कल। सहर्षम्। किं णाम मालदी त्ति। दिट्ठिआ विलसिदं क्खु भअवदा देवेण कुसुमाउहेण, ता जिदं अम्हेहिं। (ड)

मक। अमात्यभूरिवसोरात्मजेत्यपर्य्याप्तिर्बहुमानस्य। अपि च मालती मालतीति मोदते भगवती कामन्दकी, ताञ्च किल राजा नन्दनाय प्रार्थयते (१) इति किंवदन्ती श्रूयते। ततः ? (२)। (ढ)

---

(ड) किं नाम मालतीति। दिष्ट्या विलसितं खलु भगवता देवेन कुसुमायुधेन। तज्जितमस्माभिः।

---

(ठ) माधेति। मदनुयुक्तया मया पृष्टया। प्रसूतिः कन्या। प्रसादभूमिरनुग्रहपात्रं। भूरिवसुकन्यात्वेनेयं तव विवाहयोग्या। तस्या धात्रीकन्यात्वात् विश्वस्तत्वेन प्रसादभूमित्वाच्च ममान्तिके अभिप्रेतं सर्वमेव त्वं वक्तुमर्हसीति भावः।

(ड) कलेति। किं नाम मालती, यामुद्दिश्य कथा प्रवृत्ता सा किं मालतीत्यर्थः। तर्हीति शेषः विलसितं उभयत्रैव विजृम्भितं। जितं उत्कर्षेण वृत्तं। कामेन स्वामिनः प्राणसङ्कटेमसुपस्थितं तत्त्राणोपायभूतमालतीलिखितत्चित्रानयनादिति भावः।

(ढ) मकेति। अमात्यभूरिवसोरात्मजा, इति, एतावन्मात्रं बहुमानस्य मालत्या गौरवस्य अपर्य्याप्तिः असमाप्तिः। अमात्यभूरिवसोः कन्यात्वेनैव तस्या गौरवमिति न, किन्तु रूपलावण्यादीन्यपि गौरवकारणानि सन्तीति भावः। किंवदन्ती जनश्रुतिः। संसारविरागिण्याः कामन्दक्या अपि प्रमोदहेतुत्वात् अन्याः शतशो युवतीरपहाय स्वयं

---

(१) याचते इति भिन्नः पाटः। (२) तत इति पाठः क्वचिन्नास्ति।

माध। तया चाहमभ्यर्थ्यमानस्तां। बकुलमालामात्मनः कण्ठादवतार्य्य दत्तवान्। असौ पुनरभिनिविष्टया दृशा मालतीमुखावलोकनविह्वलतया विषमविरचितैकभागामपि तामेव बहुमन्यमाना "महानयं प्रसाद" इति व्याहृत्य गृहीतवती (१) अनन्तरञ्च यात्राभङ्गप्रचलितस्य महतः पौरजनस्य (२) सङ्कुलेन विघटितायां तस्यामागतोऽस्मि। (ण)

मक। वयस्य! मालत्या अपि स्नेहदर्शनात् सुश्लिष्टमेतत्।

---

श्लाघ्य सुहृदे नन्दनाय प्रार्थ्यमानत्वाच्च सा मालती परमश्लाघनीयेति भावः। ततः तदनन्तरं किं जातं तद्ब्रूहीत्यर्थः।

(ण) माधेति। अभ्यर्थ्यमानो याच्यमानः। आत्मनः कण्ठादवतार्य्य स्वकण्ठ दत्त्वा पुनरुन्मोच्य। प्रियोपभुक्तस्य आदरातिशयार्थं स्वकण्ठे समर्पणं क्रतमिति बोध्यम्। असौ मालत्याः सा सखी अभिनिविष्टया तदेकलग्नया दृशा चक्षुषा। मालती मुखावलोकनेन या विह्वलता मम व्याकुलता तया हेतुना "विह्वलव्याकुलौ समौ" इत्यमरः। विषमं असमानं यथा स्यात्तथा विरचित एकभागो यस्या ताम् मालतीदर्शनेन व्याकुलतया तादृगभिनिवेशाभावात् पूर्वग्रथितकुसुमानां विपरीतमुखकुसुमै ग्रथितैकभागामित्यर्थः। यात्राभङ्गेन उत्सवनिवृत्त्या प्रचलितस्य नगरं प्रति प्रस्थितस्य, महतो विपुलस्य, पौरजनस्य पुरवासिजनसमूहस्य सङ्कुलेन गहनेन व्याप्त्या तस्यां मालत्यां विघटितायां तिरोहितायां सत्यां।

अत्र निरुक्तिर्नाम नाट्यलक्षणं। यथा साहित्यदर्पणे—

"पूर्वसिद्धार्थकथनं निरुक्तिरिति कीर्त्तितम्।"

(१) मुहुर्मुहुर्बहुमन्यमाना 'महानयं प्रसाद' इति प्रतिगृहीतवतीति पाठान्तरम्।

(२) पौरनैगमजनस्य इति पाठभेदः।

योऽपि हि कपोलपाण्डुतादिचिह्नसूचितः प्राक्प्रवृद्ध स्तस्याः कामाभिषङ्गः,* सोऽपि त्वन्निबन्धन इत्यभिव्यक्तमेवैतत्। एतत्तु न ज्ञायते, क दृष्टपूर्वस्तया (१) वयस्य इति। न खलु तादृश्यो महाभागधेयाः (२) कुमार्य्योऽन्यत्रासक्तमनसो भूत्वा अन्यत्र (३) चक्षूरागिण्यो भवन्ति। अपि च। (त)

अन्योन्यसम्भिन्नदृशां सखीनां
तस्या स्त्वयि प्रागनुरागलिङ्गम् (४)।

---

(त) मकेति। एतत् परस्परावलोकनबकुलमालाप्रदानादिकं कार्य्यं सुश्लिष्टं उभयोः समागमनिदानत्वेन साधु संघटितं। प्रवृद्धो वृद्धिं प्राप्तः। कामाभिषङ्गः मदनावेशः। त्वमेव निबन्धनं कारणं यस्य सः, त्वामुद्दिश्येत्यर्थः। इत्थं तत् अभिव्यक्तमेव प्रकाशितमेव इति ज्ञायत इति शेषः। नु किन्तु। तया मालत्या, वयस्यस्त्वं। इत्येतत् न ज्ञायते मयेत्यर्थः। ननु अन्यस्मिन्नपि यूनि कामाभिषङ्गेण तस्याः कपोलपाण्डुतादिसम्भवात् कथं मन्निबन्धन एव कामाभिषङ्ग इति त्वया ज्ञायत इत्याह नखल्विति चक्षूरागिण्यः नयनप्रीतिमत्यः। तथा च

"यदन्यासक्तचित्ता सा * चक्षुस्त्वयि पातयेत्।
मनोऽन्यत्र दृगन्यत्र चेटीनां नोत्तमस्त्रियाः॥"

अपि च अन्यच्च त्वन्निबन्धने तस्याः कामाभिषङ्गे लिङ्गमस्तीत्यर्थः।

किन्तदित्याह अन्योन्येति। अन्योन्यसम्भिन्नदृशां परस्परसम्मिलितचक्षुषां सोऽयमिति सप्रत्यभिज्ञमिव त्वां निर्द्दिश्य कृतपरस्परमुखावलोकनानामित्यर्थः, तस्या मालत्याः

* कामाभिष्वङ्ग इति क्वचित् पाठः।

(१) तस्या इति भिन्न पाठः।

(२) महाभागधेयजन्मान इति पुस्तकान्तरे पाठः।

(३) परत्र इति पाठोऽपि दृश्यते। (४) चिह्नमित्यपि पाठः।

कस्यापि कोऽपीति निवेदितञ्च

माध। किञ्चान्यत् (थ)। (१)

मक। धात्रेयिकायाश्चतुरं वचश्च ॥ २३ ॥

कल। उपसृत्य। एदं अ। (२) (द) इति चित्रं दर्शयति।

उभौ पश्यतः।

मक। कलहंसक! केनैतन्माधवस्य प्रतिबिम्ब (३) मभिलिखितम्। (ध)

(द) एतच्च।

---

सखीनां 'कस्यापि कोऽपीति' "भर्त्तृदारिके! दिष्ट्या वर्द्धामहे, यदत्रैव कोऽपि कस्यापि, तिष्ठति" इति पूर्वोक्तरूपं निवेदितञ्च विज्ञापितञ्च त्वयि तस्या मालत्या अनुरागस्य अनुरागसत्ताया इत्यर्थः लिङ्गं अनुमितिमाधको हेतुः।

(थ) माधेति। उत्कण्ठया चतुर्थचरणोच्चारणमात्रविलम्बमप्यसहमानः निवेदितञ्चेति चकारसमुच्चितं पृच्छति किञ्चान्यदिति। चकारेण किं समुच्चितमित्यर्थः।

मकेति। धात्रेयिकाया धात्रीकन्याया लवङ्गिकायाः चतुरं निपुणं "महाभाग! सुश्लिष्टगुणतया" इत्यादिकं श्लिष्टमित्यर्थः वचो वाक्यञ्च तस्यास्त्वयि प्रागनुरागलिङ्गमिति सम्बन्धः।

अत्र माधवे मालत्यनुरागसत्ताऽनुमितिं प्रति तदुद्देशेन 'कस्यापी'त्यादिनिवेदितत्वरूपे एकस्मिन् हेतौ सत्यपि 'धात्रेयिकायाश्चतुरं वचश्चे'ति हेत्वन्तरनिर्देशात् समुच्चयः, तत्कृतविच्छित्तिवशादनुमानालङ्कारः। इन्द्रवज्रा वृत्तम् ॥ २३ ॥

(द) कलेति। एतच्च एतच्चित्रञ्च तस्यास्त्वयि प्रागनुरागलिङ्गमिति सम्बन्धः।

(ध) मकेति। केन जनेन। प्रतिबिम्बं प्रतिमूर्त्तिः अभिलिखितं चित्रितम्।

---

(१) क्वचित् किञ्चान्यदिति पाठो नास्ति।

(२) एदं चित्तफलअं इति पाठान्तरम्। रूपमिति पाठभेदः

कल० । जेण एव्व से हिअअं अवहरिदम् । (न)

मक० । अपि मालत्या ? ।

कल० । अधइं । (प)

माध० । वयस्य ! मकरन्द ! प्रसन्नप्रायस्ते तर्कः । (फ)

मक० । कलहंसक ! (१) कुतोऽस्याधिगमस्ते । (ब)

कल० । मह दाव मन्दारिआहत्थादो, ताए वि लवङ्गिआ सआसादो । (भ)

मक० । कथय (२) किमाह मन्दारिका माधवालेख्यप्रयोजनं मालत्याः । (भ)

(न) येनैवास्य हृदयमपहृतम् ।

(प) अथकिम् ।

(भ) मम तावन्मन्दारिकाहस्तात्, तस्या अपि लवङ्गिकासकाशात् ।

---

(न) कलेति । येनैव जनेन । अस्य स्वामिनो माधवस्य ।

(प) कलेति । अथकिमिति स्वीकारार्थमेकमव्ययम् । "अङ्गीकारेऽपि चाथकि" मिति हारावली ।

(फ) माधेति । प्रसन्नप्रायः, संशयरूपमालिन्यापगमात् सा मय्यनुरक्तेति निश्चयोदयात् निर्म्मलीभूतः । तर्क ऊहः सहर्षोक्तिरियं । अत एवात्र प्राप्तिर्नाम सन्ध्यङ्गम्, "प्राप्तिः सुखागम" इति दर्पणलक्षणात् ।

(ब) मकेति । कुतः कस्मात् जनात् । अस्य चित्रस्य, अधिगमः प्राप्तिः ।

---

(१) क्वचित् कलहंसकेति सम्बोधनं न दृश्यते ।

(२) अथ इति भिन्न पाठः ।

कल। उक्कण्ठाविणोअणं (१) त्ति। (म)

मक। वयस्य! माधव! सर्वथा समाश्वसिहि (२)।

या कौमुदी नयनयो र्भवतः सुजन्मा
तस्या भवानपि मनोरथबन्धबन्धुः।
तत्सङ्गमं प्रति सखे! नहि संशयोऽस्ति
यस्मिन् विधिश्च मदनश्च कृताभियोगः॥ ३४॥

---

(म) उत्कण्ठाविनोदनमिति।

---

(म) कलेति! उत्कण्ठाविनोदनं माधववियोगविधुरतया तच्चित्रदर्शनेन आत्मन उत्कण्ठानिवारणमेव मालत्या एतदालेख्यनिर्म्माणोद्देश्यमित्यर्थः।

येति। या मालती भवतो नयनयोः कौमुदी चन्द्रिकारूपा परमाह्लादजनिकेत्यर्थः। सुजन्मा श्लाघ्योत्पत्तिः भवानपि तस्या मालत्या मनोरथबन्धात् चित्तासक्ते र्हेतोः बन्धु र्बान्धवः दयित इति यावत्। अतएव हे सखे! तत्सङ्गमं प्रति मालत्या सह सम्मेलन विषये नहि संशयोऽस्ति। विशेषतश्च, यस्मिन् सङ्गमविषये विधिः परस्परासम्भावनीय-साक्षात्कारप्रयोजकं दैवञ्च मदनश्च कृताभियोगः विहिताभिनिवेशो वर्त्तते। अतएव सर्वथा समाश्वसिहीति भावः।

अत्र तृतीयचरणगतवाक्यार्थं प्रति पूर्वार्द्धगतवाक्यार्थयोः चतुर्थचरणगतवाक्यार्थस्य च हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, तथा कौमुदी कौमुदीरूपेति निरङ्ग केवलरूपकञ्च इत्यनयोरङ्गाङ्गिभावेन, सङ्करः। तथा युक्तिनाम सन्ध्यङ्गं। "सम्प्रधारण मर्थानां युक्ति" रिति दर्पणलक्षणात्।· विचारो नाम नाट्यलक्षणञ्च "विचारोयुक्त-वाक्यै र्यदप्रत्यक्षार्थसाधन"मिति लक्षणात्।

वसन्ततिलका वृत्तम्॥ ३४॥

(१) उक्कण्ठाविणोदो इति पाठान्तरं।

(२) वयस्य समाश्वसिहि इत्येतावन्मात्रः पाठः क्वचित्।

द्रष्टव्यरूपा च (१) भवतो विकारहेतुः, तदत्रैव लिख्यतां मालती। (य)

माध। यदभिरुचितं वयस्याय, तदुपनय चित्रफलकं चित्रवर्त्तिकाश्च (२)। (र)

मकरन्दः। उपनयति।

माध। लिखन्। सखे! मकरन्द!

वारं वारं तिरयति दृशावुद्गता (३) वाष्पपूर-
स्तत्सङ्कल्पोपहितजड़िम स्तम्भमभ्येति गात्रम्।

(य) द्रष्टव्येति। द्रष्टव्यरूपा अतीवमनोहरत्वात् दर्शनीयाकृतिः। विकारहेतुः मदनप्रयुक्तवैषम्यकारिणीभूता। अत्रैव तत्र चित्रस्य वामपार्श्व एव।

(र) माधेति चित्रस्य वर्त्तिकाः तूलिकाः।

वारंवारमिति। उद्गतः मालत्या भ्रूनेत्रादिस्मरणेन विरहानुतापोदयादुपस्थितः वाष्पपूरः अश्रुप्रवाहः वारं वारं उन्मृज्यमानोऽपि पुनः पुनः दृशौ चक्षुषी तिरयति आवृणोति। सुतरां सम्यगवलोकनाभावात् चित्रयितुमिदानीमशक्तोऽस्मीति भावः। तथा तस्याः मालत्याः सङ्कल्पेन चिन्तया उपहितः उपस्थापितः जड़िमा कार्य्याक्षमत्वं यस्य तत् तथोक्तं गात्रं मम देहः स्तम्भं निस्पन्दतां अभ्येति प्राप्नोति। तथा सद्यः तच्चिन्ताक्षण एव स्विद्यन् घर्माक्तः सन् अविरतोत्कम्पेन अनवरतस्पन्दनेन लोलायञ्चला अङ्गुल्यो यस्य तादृशः, अयं मदीयः पाणिः लेखाविधिषु चित्रकार्य्येषु नितरां अतिशयेन वर्त्तते स्थिरीभवति चित्रणाय चाल्यमानोऽपि स्वयं न चलतीत्यर्थः। अथवा लेखाविधिषु अविरतोत्कम्पलोलाङ्गुलीको वर्त्तते अस्वाभाविकचाञ्चल्यवान् भवतीत्यर्थः। नितरां

(१) द्रष्टव्यस्वरूपा चेति पाठान्तरम्।

(२) क्वचित् तदुपनय चित्रफलकं चित्रवर्त्तिकाश्चेति, मकरन्दः। उपनयति, एतौ पा‌ दृश्येते

दृशोरुद्गममिति पाठान्तरम्

**सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः**
**पाणिर्लेखाविधिषु नितरां वर्त्तते, किं करोमि ॥३५॥**
**तथापि व्यवसितोऽस्मि (१)।** (ल) चिरादभिलिख्य दर्शयति।

मक। विलोका। **उपपन्नस्तावदत्र भवतोऽभिषङ्गः(२)** मकरन्दकम्।
**कथमचिरेणैव निर्म्माय लिखितः श्लोकः** (व) वाचयति।

---

सुतरां अतएवेत्यर्थः किं करोमि। ईदृशावस्थायां नैपुण्येनाविकलचित्रनिर्माणमसम्भवमेवेति भावः।

अत्र चित्रकार्य्याक्षमत्वं प्रति बहुतरकारणोपन्यासात् समुच्चयोऽलङ्कारः, तथा किं करोमीति वाक्यार्थं प्रति पूर्ववाक्यार्थानां हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्च, अनयोरङ्गाङ्गिभावेन सङ्करः। तथाऽत्र अश्रु-जाड्य-स्तम्भ-स्वेद-कम्पाद्याः पञ्च सात्त्विकभावा अभिहिताः।

मन्दाक्रान्ता वृत्तम् ॥ ३५ ॥

(ल) तथापीति। तथापि सम्यगवलोकनाभावात् जड़त्वादिप्रतिबन्धकत्वाच्च अविकलचित्रनिर्म्माणासम्भवेऽपि, व्यवसितोऽस्मि चित्रयितुमुद्यतोऽस्मि। सुहृद्वाक्यस्यालङ्घनीयत्वादिति भावः। अभिलिख्य चित्रयित्वा। एतेन तदानीमपि चित्रविद्यायां प्रायेण सर्व्वेषामपि नैपुण्यमासीदिति प्रतीयते।

(व) मकेति। अत्र मालत्यां। अभिषङ्ग आसक्तिः, उपपन्नः युक्तः। अतीवरमणीयाकृतिमत्त्वादिति भावः। कथं शब्दोऽत्र हर्षे! अचिरेणैव सद्यएव। सद्यःश्लोकनिर्म्माणं प्रायेण दुष्करत्वादतीवाश्चर्य्यमिति भावः। एतेन सद्यःश्लोकनिर्म्माणस्य विस्मयजनकतामङ्गीकुर्वन् भवभूतिरपि विलम्बकविरासीदिति प्रतीयते। प्रायेण दुरूहशब्दविन्यासादपि भवभूतेर्विलम्बकवित्वमुद्घोषयन्ति काव्यनिष्णाताः।

* न तरामिति क्वचित् पाठः।

(१) अवहितोऽस्मीति पाठभेदः। (२) अभिष्वङ्ग इति भिन्नः पाठः।

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥ ३६॥

प्रविश्य सत्वरं मन्दारिका । कलहंसअ ! पदाणुसारिणा उअलद्धोसि ।

माधवमकरन्दौ दृष्ट्वा सलज्जम् । अहं दे वि महाणुभावा एत्थ एव्व ।

जगतीति । जगति भुवने जयिनः जयशीलाः विरहिजनवशीकरणस्वभावा इत्यर्थः, प्रकृतिमधुराः स्वभावसुन्दराः, ते ते प्रसिद्धाः, अन्ये मालतीभिन्नाः, नवेन्दुकलादयः नवोदितचन्द्रलेखादयः, भावाः पदार्थाः सन्त्येव, न तत्र काचित् विप्रतिपत्तिरिति भावः । ये भावाः, मनो मदयन्ति स्वभावत एव सर्वेषां चित्तं प्रीणयन्ति । ननु सन्तु तादृशेष्वपि तव मालत्यामेवानुराग इत्याह मम त्विति । तु किन्तु इयं विलोचनचन्द्रिका नेत्रकौमुदी चन्द्रिकेव नयनाह्लादकारिणी मालती लोके जगत्प्रपञ्चमध्ये मम यत् नयनविषयं भावप्रधाननिर्देशात् नेत्रगोचरतां याता प्राप्ता ; जन्मनि मम जीवनमध्य इत्यर्थः, स एव, एकः सर्वातिशायी, महोत्सवः प्रमोदहेतुः । सन्तु नाम परेषामामोदकरा नवेन्दुकलादिपदार्थाः किन्त्वहं मालतीमेव तेभ्यो बहुमन्यमानस्तस्यामनुरक्तोऽस्मीति भावः ।

अत्र नवेन्दुकलादिभ्यो मालत्याः प्राधान्यप्रतिपादनात् व्यतिरेकालङ्कारः, विलोचनचन्द्रिकेति, निरङ्गं केवलरूपकञ्च, अनयोरङ्गाङ्गिभावेन सङ्करः । ते त इति प्रसिद्धार्थकत्वपरामर्शात् यच्छब्दस्य चोत्तरवाक्यगतत्वेन तच्छब्दानपेक्षणात् न वाक्यगता विधेयाविमर्शदोषः । किन्तु माधवपक्षे मालत्यपेक्षया चन्द्रिकादेरुत्कृष्टत्वं प्रतिपादितं पुनर्माधवपक्ष एव तस्यां मालत्यामुत्कर्षप्रतिपादनाय तच्चन्द्रिकात्वमारोपितमिति स्ववचनस्यैव विरोधेन व्याहतत्वात् व्याहतत्वदोषः "हरन्ति हृदयं यूना" मित्यादिदर्पणोदाहृतवत् । स च 'विलोचनमोदिनी' इति पाठेन समाधेयः ।

हरिण्यं वृत्तम् ॥ ३६ ॥

उपसृत्य प्रणमति (१)। (ग)

उभौ। मन्दारिके! इहास्यताम् (२)। (घ)

मन्दा। उपविश्य। (३) कलहंसअ! उवणेहि मे चित्तफलअं। (ङ)

कल। गृहीत्वा। गेह्न एदं। (च)

मन्दा। विलोक्य। कलहंसअ! केण उण किं णिमित्तं वा एत्थ मालदी आलिहिदा? (छ)

---

(ग) कलहंसक! पदानुसारेण उपलब्धोऽसि। कथं तावपि महानुभावी अत्रैव।

(ङ) कलहंसक! उपनय मे चित्रफलकम्।

(च) गृहाणेदम्।

(छ) कलहंसक! केन पुनः किं निमित्तं वा अत्र मालती आलिखिता?

---

(ग) प्रविश्येति। सत्वरं प्रविश्येति सम्बन्धः। पदानुसारेण चरणचिह्नानुसरणेन उपलब्धोऽसि प्राप्तोऽसि। चौरोऽपि चरणचिह्नानुसरणेनैव ध्रियत इति साधर्म्यादुपहासपरं वाक्यमेतत्। अजानतो विशेषव्यक्त्यन्तरसमीपे उपपतेरुपहासकरणात् सलज्जमित्युक्तम्। महानुभावौ विद्यादिना विशेषप्रभावशालिनौ।

(घ) उभाविति। आस्यतां उपविश्यताम्। ज्ञातव्यसंग्रहार्थमेतायं सामान्यपरिचारिकाया अपि समादरः कृत इति बोध्यम्।

(च) कलेति। गृहीत्वा चित्रफलकमिति शेषः।

(१) प्रविश्य मन्दारिका। कलहंस! कलहंस! चोर! चोर! पदाणुसरणेन लद्धोऽसि। सलज्जं। कहं दे वि महाणुहावा एत्थ एव्व। उपसृत्य। णमामि। इति पाठभेदः। (२) इत आगम्यतामिति पाठान्तरम्। (३) क्वचित् उपविश्येति पाठो नास्ति।

कल। जो (१) जेण णिमित्तेण मालदीए। (क)

मन्दा। सहर्षम्। दिट्ठिआ दंसिदफलं दाणिं विण्णाणं पआवइणो। (ख)

मक। सखि! (२) मन्दारिके! यदत्र वस्तुन्येष ते वल्लभः कथयति, अपि तथा तत्? (ग)

मन्दा। महाभाअ! अधइं (३)। (घ)

मक। क्व पुनर्मालती माधवं प्रागदृष्टवती?*

---

(क) यो येन निमित्तेन मालत्या।

(ख) दिष्ट्या दर्शितफलमिदानीं विज्ञानं प्रजापतेः।

(घ) महाभाग! अथकिम्।

(ङ) लवङ्गिका भणति वातायनगतेति।

(क) कलेति। मालत्या येन निमित्तेन स्वकीयोत्कण्ठानिरस्यर्थमित्यर्थः यो माधवः आलिखितः, तेनैव माधवेन तेनैव निमित्तेन मालती आलिखितेत्यर्थः। उभयोरेव समानैवोत्कण्ठेति भावः।

(ख) मन्देति। प्रजापतेर्विधातुः। विज्ञानं संमानसुन्दरयोर्मालतीमाधवयो-र्निर्म्माणनैपुण्यम्। दर्शितं प्रकटितं, फलं परस्परं प्रति परस्परासक्तिरूपं उद्देश्यं येन तादृशं जातमिति शेषः। अतीवाह्लादकारणमेतदस्माकमिति भावः।

(ग) मकेति। गूढार्थोद्भेदनाय सखीति स्नेहसूचकं सम्बोधनं। एष ते वल्लभः प्रियः कलहंसः, अत्र वस्तुनि माधवाकृतिचित्रणविषये यत् कथयति 'स्वकीयोत्-कण्ठाविनृत्यै मालत्या चित्रितमेतत्' इति यत् ब्रवीति, अपि तथा तत् सत्यं किम्।

* मकेति। क्व कुत्र स्थिता।

(१) जो एव्व इति क्वचित् पाठः। (२) क्वचित् सखीति पाठो नास्ति।

(३) तत्तहा इति पाठभेदः।

मन्दा। लवङ्गिआ भणादि, वादाअणगदेत्ति। (ङ)

मक। वयस्य! (१) नन्वमात्यभवनासन्नरथ्ययैव बहुशः सञ्चरावहे तदुपपन्नमेतत्। (च)

मन्दा। अणुमण्णन्तु मं महाणुभावा, जाव एदं भअवदो देवस्स मअणस्स सुचरिदं पिअसहीए लवङ्गिआए णिवेदेमि। (छ)

मक। प्राप्तावसरमेतद्भवत्याः। (ज)

मन्दारिका चित्रफलकं गृहीत्वा निष्क्रान्ता।

मक। वयस्य! खरतरकिरणोऽयं भगवान् सहस्रदीधितिरलङ्करोति मध्यमह्नः, (२) तदेहि, संस्त्यायमेव गच्छावः। (झ)

इत्युत्थाय परिक्रामतः।

---

(छ) अनुमन्यतां मां महानुभावौ, यावदिदं भगवतो देवस्य मदनस्य सुचरितं प्रियसख्यै लवङ्गिकायै निवेदयामि।

---

(च) मकेति। नन्वित्यवधारणे। उपपन्नं युक्तं। सञ्चरावहे इति "समस्तृतीयया युक्तात्" इत्यात्मनेपदम्।

(छ) मन्देति। अनुमन्यतां गन्तुमिति शेषः। सुचरितं विजृम्भितं तज्जनितां मालतीं प्रति माधवस्याप्यासक्तिमित्यर्थः। निवेदयामि एतदर्थमेव पूर्वस्मादुद्यातायास्तस्या उद्यमस्य कियत्साफल्यज्ञापनेन सन्तोषविधानायेति भावः।

(ज) मकेति। एतन्निवेदनं प्राप्तावसरं तत्तच्चेष्टानां साफल्यात् उपस्थितावकाशं। सुतरां गन्तुमर्हसीति भावः।

(झ) मकेति। संस्त्यायं गृहं। "संस्त्यायो विस्तृतौ गृहे।" इति हेमचन्द्रः।

(१) वयस्य इत्यपि क्वचिन्नास्ति।

(२) मध्याह्नोऽतिवर्त्तते इति पाठान्तरम्।

माध। **एवं हि मन्ये।**

**घर्म्माम्भोविसरविवर्त्तनैरिदानीं**

**मुग्धाक्ष्याः परिजनवारसुन्दरीणाम्।**

**तत् प्रातर्विहितविचित्रपत्रलेखा**

**वैदग्ध्यं जहति कपोलकुङ्कुमानि ॥३७॥**

**अपि च। उन्मीलन्मुकुलकरालकुन्दकोश-**

**प्रश्चोतद्घनमकरन्दगन्धबन्धो!**

**तामीषत् प्रचल विलोचनां नताङ्गीं।**

**मालिङ्गन् पवन! मम स्पृशाङ्गमङ्गम् ॥३८॥**

---

घर्म्माम्भ इति। इदानीं मध्याह्नकाले, मुग्धे सुन्दरे अक्षिणी चक्षुषी यस्याः तस्याः मालत्याः परिजनवारसुन्दरीणां परिचारिकाभूतगणिकानां कपोलकुङ्कुमानि गण्डयोरनुलिप्तानि कुङ्कुमानि कर्त्तृणि घर्म्माम्भसां स्वेदजलानां विसरस्य विन्दुसमूहस्य विवर्त्तनैः प्रसरणैः, तत् तदा मया दृष्टं, प्रातः प्रातःकाले विहिता विरचिता या विचित्रा आश्चर्य्या पत्रलेखा चित्रविशेषः तस्याः वैदग्ध्यं सौन्दर्य्यं जहति प्रक्षालनात् परित्यजन्ति। अस्मिन् मध्याह्नकाले प्रखररवितापात् मालतीपरिचारिकाभूतवारनारीणां कपोलयोः पत्रावलीरूपेण विन्यस्तानि कुङ्कुमानि स्वेदजलविन्दुभिः प्रक्षाल्यन्ते, इत्येवं मन्ये इति सरलार्थः।

अत्र द्युति र्नाम नाट्यलक्षणम्। यथा साहित्यदर्पणे—

"द्युतिः केनचिदंशेन किञ्चिद् यत्रानुमीयते।"

प्रहर्षिणी वृत्तम् "त्र्याशाभिर्मनजरगाः प्रहर्षिणीय"मिति लक्षणात्" ॥३७॥

उन्मीलन्मुकुलेति। उन्मीलद्भिः विकसद्भिः मुकुलैः कुट्मलैः करालः दन्तुरः विषम इति यावत् यः कुन्दकोशः कुन्दस्तवकः, तस्मात् प्रश्चोततां क्षरतां घनानां मकरन्दानां पुष्परसानां गन्धेन सौरभेण बन्धुः प्रायेण सुखदत्वात्प्रियः

मक । स्वगतम् ।

अभिहन्ति हन्त कथमेष माधवं
सुकुमारकायमनवग्रहः स्मरः ।
अचिरेण वैकृतविवर्त्तदारुणः
कलभं कठोर इव कूटपाकलः ॥३८॥

---

तत्सम्बोधनम् । हे पवन ! वायो ! ईषत्प्रचले सखीनामवगतिभयेन अधिकचाञ्चल्या-सम्भवात् भावविशेषेण किञ्चिच्चले चक्षुषी यस्याः तां नताङ्गीं स्वभावतः किञ्चिद-वनत स्कन्धाद्यवयवां तां मालतीं स्पृशन् सन् मम अङ्गमङ्गं प्रत्यवयवं स्पृश । एतेना-तीवोत्कण्ठा व्यज्यते ।

अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिरलङ्कारः ।

प्रहर्षिणी वृत्तम् ॥ ३८ ॥

अभिहन्तीति । अनवग्रहः दुर्निवारः, एष स्मरो मन्मथः सुकुमारकायं कोमल-कलेवरं माधवं, विकृतेः वातपित्तकफानां विकारस्यायमिति वैकृतः, यो विवर्त्तः परिणामः सन्निपात इति तात्पर्य्यम् । तेन दारुणो भयङ्करः, पक्षे स्वविकारकृत-भावान्तरभीषणः, अतएव कठोरः कठिनः चिकित्सादुरपनेयः कूटेन कपटेनागत्य पातयति इति कूटपाकलः पित्तज्वरः कलभं करिशावकमिव अचिरेण सद्य उत्पत्ति-क्षण एवेत्यर्थः कथं अभिहन्ति अभिघातं करोति पीड़यति हन्तेत्यनुकम्पायां । अतीव शोचनीया माधवस्येयमवस्थेति भावः ।

अत्र पूर्णोपमाऽलङ्कारः । हन्ति हन्तेति च्छेकानुप्रासश्चेत्यनयोः संसृष्टिः ।

"पित्तज्वरे, कुलालस्य पवने कूटपाकल" इति हारावली ।

वैद्यशास्त्रे च "यथाभिहन्यात् कूटेन मृगयूथं वनेचरः ।
तथा पातात्मकोनागं हन्ति वै कूटपाकलः ॥"

कूटपाकल इति पृषोदरादित्वात् साधुः ।

मञ्जुभाषिणीवृत्तं "स जसा जगौ च यदि मञ्जुभाषिणी"ति लक्षणात् ॥ ३९ ॥

तदत्र भगवती (१) कामन्दकी नः शरणम्। (ञ)

माध। स्वगतम्। आश्चर्य्यम्। (२)

पश्यामि तामित इतः पुरतश्च पश्चा-
दन्तर्बहिः परित एव विवर्त्तमानाम्।
उद्बुद्ध-मुग्ध-कनकाब्जनिभं वहन्ती-
मासक्ति-(३) तिर्य्यगपवर्त्तितदृष्टि वक्त्रम् ॥४०॥

प्रकाशम्। वयस्य! मम हि सम्प्रति

प्रसरति परिमाथी कोऽप्ययं देहदाह-
स्तिरयति करणानां ग्राहकत्वं प्रमोहः।

(ञ) तदत्रेति। अत्र उपस्थितायां विपत्तौ। शरणं रक्षिका।

पश्यामीति। उद्बुद्धं प्रस्फुटितं मुग्धं सुन्दरं यत् कनकाब्जं स्वर्णपद्मं तन्निभं तत्तुल्यं, तथा आसक्त्या मय्यनुरागेण तिर्य्यगपवर्त्तिता तिर्य्यग्भावेन प्रवर्त्तिता दृष्टिर्यत्र तत् तथोक्तं वक्त्रं वदनं वहन्तीं धारयन्तीं तां मालतीं, इतो वामपार्श्वे विवर्त्तमानामिति सर्वत्र योज्यं इतो दक्षिणपार्श्वे, पुरतः अग्रतः सम्मुखदेशे, पश्चात् पृष्ठदेशे, अन्तः हृदयमध्ये, वहिश्च वक्षःप्रभृति वहिरङ्गेषु च; किं वहुना परित एव सर्वत्र एव सर्वास्वेव दिक्षु विवर्त्तमानां विद्यमानां पश्यामि अवलोकयामि। तन्मयमेव भुवनं पश्यामीत्याश्चर्य्यमेवेति भावः। इयमुन्मादावस्था।

अत्र वास्तविकदर्शनाभावेऽपि दर्शनसम्भावनाकरणात् इवाद्यभावाच्च प्रतीयमाना भावाभिमानिनी क्रियोत्प्रेक्षाऽलङ्कारः समासगतोपमया सङ्कीर्य्यते।

वसन्ततिलका वृत्तम् ॥ ४० ॥

---

(१) तदत्रभवतीति क्वचित् पाठः।

(२) क्वचित् आश्चर्य्यमिति पाठो नास्ति।

(३) आसङ्गेति पाठान्तरम्।

रणरणकविवृद्धिं बिभ्रदावर्त्तमानं (१)
ज्वलति हृदयमन्तस्तन्मयत्वञ्च धत्ते ॥ ४१ ॥

इति निष्क्रान्ताः सर्वे। (ट)

---

प्रसरतीति। परिमाथी परिमथनशीलः कष्टकरः कोऽपि अनिर्व्वचनीयः, अयं अनुभूयमानः मम देहदाहः शरीरतापः मदनज्वर इति यावत् प्रसरति सर्व्वतो व्याप्नोति। प्रमोहो मालतीविरहदुःखजनितं वैचित्त्यं करणानां चक्षुरादीनां इन्द्रियाणां ग्राहकत्वं रूपादिस्वस्वविषयग्रहणयोग्यतां तिरयति पिदधाति विलुम्पति। आवर्त्तमानं कामानलेन पच्यमानं हृदयं कर्त्तृ, रणरणकविवृद्धिं उद्वेगोपचयं बिभ्रत् धारयत् सत् अन्तर्मध्ये ज्वलति सन्तप्तं भवति। ननु तदा कथं जीवसीत्याह तन्मयत्वमिति। तन्मयत्वं अविरतभावनया मालतीतादात्म्यञ्च धत्ते अवलम्बते। इत्थमनङ्गेन समाकुलीक्रियमाणोऽपि हृदयस्य सञ्जीवनौषधिरूपमालतीमयतया जीवामीति भावः।

अत्र ज्वलति धत्ते इत्यनेकक्रिययोः हृदयमित्येककर्त्तृकारकत्वात् दीपकमलङ्कारः। तथा अपराणि परस्मैपदान्यभिधाय धत्त इत्यात्मनेपदस्याभिहितत्वात् भग्नप्रक्रमतादोषः, स च 'ज्वलति हृदयमेवं तन्मयत्वं दधाति' इति पाठेन समाधेयः। न चैतत्पपाठे समुच्चयार्थकचकारानभिधानात् न्यूनपदतादोष इति वाच्यं चकारप्रतिपाद्यसमुच्चयस्य एवं शब्देनैव निर्व्वाहात्।

"करणं साधकतमं चेत्रगात्रेन्द्रियेष्वपि।" इत्यमरः। "रणरणक उद्वेगः।" "आवर्त्तनं क्राथनं स्या"दिति च हैमः।

मालिनी वृत्तम् ॥ ४१ ॥

(ट) इतीति। कलहंसेन सह माधवमकरन्दयोर्बहुत्वात् निष्क्रान्ता इति बहुवचनं, प्रायेण कविभिरङ्कसमाप्तौ निष्क्रान्ता इत्युक्ताऽपि सर्व्वशब्दस्योपात्तत्वात् कविरीतिसिद्धतया सर्व्वशब्दोपादानञ्च सङ्गच्छत इति भाव्यम्।

(१) बिभ्रदावर्त्ति गात्रमिति पाठान्तरम्।

# इति वकुलवीथी नाम (१) प्रथमोऽङ्कः। (ठ)

(ठ) इतीति। वकुलानां वकुलकुसुमानां वीथी पङ्क्तिः मालेति यावत्। सा नाम अस्याङ्कस्य वकुलमालाया एव प्राधान्येनोपकरणत्वात् वकुलवीथीति नाम्ना प्रसिद्धः। अङ्कः परिच्छेदः समाप्त इति शेषः। एवमन्यत्रापि व्याख्येयम्।

"प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः।" इत्यादि—

"अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः।"

इत्यन्तमङ्कलक्षणं साहित्यदर्पणादावनुसन्धेयम्।

"वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तरकर्म्मणोः।" इति मेदिनी।

"नाम प्राकाश्य-सम्भाव्य-क्रोधोपगमकुत्सने।" इत्यमरः।

इति श्रीहरिदाससिद्धान्तवागीशविरचितायां मालतीमाधवटीकायां

भावमनोहरायां प्रथमाङ्कविवरणं समाप्तम्॥०॥

---

(१) क्वचित् 'वकुलवीथ्यो'ति पाठो नास्ति

# द्वितीयोऽङ्कः ।

—∞*∞—

ततः प्रविशतश्चेट्यौ ।

एका । हला ! सङ्गीदसालापरिसरे अवलोइदादुदीआ तुमं (१) किं मन्तअन्ती आसि । (क)

द्वितीया । सहि ! तेन किल माहवप्पिअवअस्सेण मअरन्देण सअलो ज्जेव मअणुज्जाणवुत्तन्तो भअवदोए निवेदिदो । (ख)

प्रथमा । तदो किं । (२) (ग)

द्वितीया । तदो भट्टिदारिअं दट्ठुकामाए भअवदीए पउत्ति-

---

(क) हला ! सङ्गीतशालापरिसरे अवलोकिताद्वितीया त्वं किं मन्त्रयन्ती आसीः ।

(ख) सखि ! तेन किल माधवप्रियवयस्येन मकरन्देन सकल एव मदनोद्यान-वृत्तान्तो भगवत्यै निवेदितः ।

(ग) ततः किम् ।

---

(क) एकेति । सङ्गीतशालायाः परिसरे पर्यन्तभुवि प्रान्तभागे ।

(ख) द्वितीयेति । मदनोद्यानवृत्तान्तः परस्परावलोकनवकुलमालाप्रदानादिः ।

(ग) प्रथमेति । एका इत्युक्तं अन्यतरार्थकतया । अतो द्वितीयाऽपि प्रतीयेत, सुतरामुक्तं प्रथमेति ।

---

(१) भअवदी कामन्दई इति पाठभेदः ।

(२) क्वचित् पाठोऽयं नास्ति ।

णिमित्तं अवलोइदा अणुप्पेसिदा मएवि ताए कधिदं, जधा लवङ्गिआदुदीआ विवित्ते भट्टिदारिआ वट्टदित्ति। (घ)

प्रथमा। सहि! (१) लवङ्गिआ क्खु केसरकुसुमाइं अवचिणोमि त्ति गदा मअणुज्जाणं किं संपदं णिउत्ता? (२)। (ङ)

द्वितीया। अधइं, तं क्खु परावट्टन्तीं (३) ज्जेव हत्थे गेह्णिअ पड़िसिद्धपरिअणा (४) भट्टिदारिआ उअरिअलिन्दअं समारूढ़ा। (च)

---

(घ) ततो भर्त्तृदारिकां द्रष्टुकामया भगवत्या प्रवृत्तिनिमित्तं अवलोकिता अनुप्रेषिता। मयापि तस्यै कथितं यथा लवङ्गिकाद्वितीया विविक्ते भर्त्तृदारिका वर्त्तत इति।

(ङ) सखि! लवङ्गिका खलु केसरकुसुमानि अवचिनोमीति गता मदनोद्यानं किं साम्प्रतं निवृत्ता।

(च) अथकिं, तां खलु परावर्त्तमानामेव हस्ते गृहीत्वा प्रतिषिद्धपरिजना भर्त्तृदारिका उपर्य्यलिन्दं समारूढ़ा।

(घ) द्वितीयेति। प्रवृत्तिनिमित्तं कीदृशी वर्त्तते कुत्र वर्त्तते इति वृत्तान्तज्ञानार्थम्। विविक्ते विजनस्थाने। "विविक्तौ पूतविजना"वित्यमरः।

(च) द्वितीयेति। परावर्त्तमानामेव मदनोद्यानादागच्छन्तीमेव। "अलिन्दः

(१) हला इति भिन्नः पाठः।

(२) मअणुज्जाणादो ज्जेव णागदा, ता किं सम्पदं सम्पत्ता इति पाठान्तरम्।

(३) आपतन्तीं इत्यपि पाठः।

(४) अपरिअणा इति पाठोऽपि दृश्यते।

प्रथमा । णूणं तस्स महाणुभावस्स सङ्कधाए अत्ताणं विणोदेदि । (छ)

द्वितीया । निश्वस्य । कुदोसे आस्सासो । एदिणा अज्ज सविसेसदंसणेण अदिभूमिं क्खु ताए अहिणिवेसो गमिस्सदि । अस्सं च, (१) णन्दणस्स कारणादो महाराओ भट्टिदारिअं पत्थअन्तो अमच्चेण विसत्तो । (ज)

प्रथमा । किं त्ति । (झ)

द्वितीया । "पहवदि णिअस्स कस्सआजणस्स महाराओ"

---

(छ) नुनं तस्य महानुभावस्य सङ्कथया आत्मानं विनोदयति ।

(ज) कुतः अस्या आश्वासः । एतेन अद्य सविशेषदर्शनेनातिभूमिं खलु तस्या अभिनिवेशो गमिष्यति । अन्यच्च नन्दनस्य कारणात् महाराजो भर्त्तृदारिकां प्रार्थयन् अमात्येन विज्ञप्तः ।

(झ) किमिति ।

---

(पु') वहिर्द्वारसंलग्नचतुरस्रक्षितिभूमि"रिति शब्दकल्पद्रुमः, उपरिस्थितमलिन्दं उपर्य्यलिन्दम् ।

(छ) प्रथमेति । तस्य महानुभावस्य माधवस्य । सङ्कथया त्वया किमुक्तं तेन च किमुक्तमिति कथोपकथनेन ।

(ज) द्वितीयेति । अस्या मालत्याः । सविशेषदर्शनेन मदनोद्याने विशेषरूपेण परस्परसाक्षात्कारेण । अतिभूमिं आधिक्यं "अतिभूमिः ( स्त्री ) आधिक्य"मिति शब्दकल्पद्रुमः । अभिनिवेशः माधवे अनुरागः ।

(१) अस्सं च । कले एव्व णन्दणस्स कारणादो इति भिन्नः पाठः

त्ति। ता (१) जाटं आमरणं क्खु हिअअसल्लं मालदीए माहवाणुराओत्ति तक्केमि। (ञ)

प्रथमा। अवि णाम भअवदो किं वि एत्थ भअवदोत्तणं दंसइस्सदि। (ट)

द्वितीया। अइ! असंबद्धमणोरहे! एहि गच्छह्म। (ठ)

इति परिक्रम्य (२) निष्क्रान्ते।

(ञ) "प्रभवति निजस्य कन्यकाजनस्य महाराज" इति। तत् ज्ञातं आमरणं खलु हृदयशल्यं मालत्या माधवानुराग इति तर्कयामि।

(ट) अपि नाम भगवती किमपि अत्र भगवतीत्वं दर्शयिष्यति।

(ठ) अयि असम्बद्धमनोरथे! एहि गच्छाव।

(ञ) द्वितीयेति। आमरणं हृदयशल्यं जातमिति विधेयप्राधान्यविवक्षया नपुंसकत्वम्। प्रभवतीत्यादिप्रत्युत्तरेण नन्दनाय मालतीदानस्याङ्गीकृतत्वेन तस्यावश्यम्भावित्वादिति भावः।

(ट) प्रथमेति। भगवती कामन्दकी। अत्र मालत्यभिलाषपूरणविषये। भगवतीत्वं ऐश्वर्यशालित्वरूपं माहात्म्यं प्राकाम्यनामकेन स्वकीयैश्वर्यविशेषेण किं नाम राजामात्यनन्दनानां मतिं परिवर्त्तयिष्यति, अथवा मालत्यभिप्रायसम्पादने सदुपायान्तरं घटयिष्यतीत्यर्थः। भगवतीत्वमिति भगवतीत्यस्य संज्ञात्वविवक्षया "त्वतलोर्गुणवचनस्ये"ति न पुंवद्भावः।

(ठ) द्वितीयेति। असम्बद्धमनोरथे! विषयेणासंश्लिष्टाभिलाषे! परमसन्न्यासिनी खलु कामन्दकी, सुतरां सा कथं मालत्यभिलाषपूरणे महीयांसमीदृशमायासमङ्गीकरिष्यतीति भावः।

(१) अदो इति पाठान्तरम्।

(२) क्वचित् परिक्रम्येति पाठो नास्ति।

# प्रवेशकः। (ड)

ततः प्रविशत्युपविष्टा सोत्कण्ठा मालती लवङ्गिका च। (ढ)

मालती। हुं सहि! तदो तदो। (ण)*

लवङ्गिका। तदो तेण महाणुभाएण उवणीदा मे इयं वउलमाला। (त) इति मालामर्पयति।

---

(ण) हुं, सखि! ततस्ततः।

(त) ततस्तेन महानुभावेन उपनीता मे इयं वकुलमाला।

---

(ड) प्रवेशयति पात्रविशेषमिति प्रवेशकः अर्थोपक्षेपकविशेषः। तथा च दर्पणे—

"प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः।

अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा॥"

शेषं विष्कम्भके यथेति विष्कम्भकवत् वृत्तवर्त्तिष्यमाणकथांशानां निदर्शनमावश्यकमित्यर्थः। तथा चात्र "तेन किल माहवप्पिअवअस्सेण" इत्यादिना वृत्तकथांशानां निदर्शनम्। तथा—"लवङ्गिआदुदीआ विवित्ते भट्टिदारिआ वट्टदि" इत्यादिना वर्त्तिष्यमाणकथांशान निदर्शनमनुसन्धेयम्।

(ढ) तत इति। सोत्कण्ठा इति मालत्या एव विशेषणम् अत्र रूढ़िमूलया जहत्स्वार्थलक्षणया सभ्यदृष्टिगोचरत्वं विशधातोरर्थः ततश्च प्रविशति सभ्यानां दृष्टिगोचरीभवतीत्यर्थः। तेनोपविष्टायाः स्वयंप्रवेशो न विरुद्ध इति बोध्यम्। नन्वस्मिन्नङ्के नायकप्रवेशाभावात् कथं "प्रत्यक्षनेतृचरित" इत्याद्यङ्कलक्षणसङ्गतिरिति चेन्न तत्र नेता च नेत्री चेत्येकशेषात् नेतृपदेनैव नायिकाया अप्यभिहितत्वात् तस्याश्चात्र प्रवेशात्।

(ण) मालतीति। हुंशब्दः प्रश्ने। लवङ्गिकया कथितं वकुलमालाप्रार्थनापर्यन्तमाकर्ण्य समुत्कण्ठिता मालती पृच्छति 'तदो तद' इति।

(त) लवङ्गिकेति। तेन माधवेन। मे मम हस्ते, उपनीता तुभ्यमुपहृता।

* कुत्रचित् हुमिति पाठो नास्ति।

माल । गृहीत्वा सहर्षं निर्वर्ण्य । सहि ! एक्कपासविसमपडिबद्धा क्खु इअं विरअणा । (थ)

लव । एत्थ दाव अरमणीअत्तणे तुमं ज्जेव अवरजभसि (१) । (द) ।

माल । कधं विअ । (ध)

लव । जेण सो मुद्धो दुव्वा-सामलङ्गो तधा विहत्थीकिदो ।(न)

माल । पिअसहि ! लवङ्गिए ! सव्वधा आसासणशीलासि ।(प)

---

(थ) सखि ! एकपार्श्वविषमप्रतिबद्धा खल्वियं विरचना ।

(द) अत्र तावदरमणीयत्वे त्वमेवापराध्यसि ।

(ध) कथमिव ।

(न) येन स मुग्धो दूर्व्वाश्यामलाङ्गस्तथा विहस्तीकृतः ।

(प) प्रियसखि ! लवङ्गिके ! सर्व्वथा आश्वासनशीलासि ।

---

(थ) मालेति । एकस्मिन् पार्श्वे अंशे विषमं यथा स्यात्तथा प्रतिबद्धा विपरीत-मुखैः कुसुमैर्घटितेत्यर्थः ।

(न) लवेति । मुग्धः नवयौवनवशादल्पे नैव कारणेनाधीरबुद्धिः । दूर्व्वावत्-श्यामलाङ्गः । तथा तादृक् सातिशयमित्यर्थः विहस्तीकृतः त्वया कटाक्षपातादिना व्याकुलीकृतः । तवोदाररमणीयरूपमवलोक्य समागमाय माधवोऽतीव व्याकुलो जात इति भावः ।

(प) मालेति । आश्वासनशीलासि, वस्तुतो नासौ मय्यनुरक्तः, किन्तु तदनुरागो-पन्यासच्छलेन त्वमेव केवलमुत्कण्ठितां मामाश्वासयसीति भावः ।

(१) अवरज्झासि इति पाठान्तरम्

लव। सहि! का एत्थ आसासणसीलदा। णं भणामि सोवि पिअसहीए मन्दमारुदुव्वेल्लन्तप्फुल्लपुण्डरीअविब्भमेहिं पढ़मारद्ध (१) वउलावलीविरअणावदेस-संजमण (२) बला मोड़िअ वित्थरन्तेहिं लोअणेहिं विजिम्भमाणविम्हअत्थिमिद-दीहपेरन्त-परिअत्तणा-विलासतण्डविद (३)-भूलदाविडम्बि-दाणङ्गसारङ्गविब्भम-(४) विअड्ढं ओलोअन्तो पच्चक्खीकिदो ज्जेव। (फ)

---

(फ) सखि! का अत्र आश्वासनशीलता। ननु भणामि, सोऽपि प्रियसख्या मन्दमारुतोद्वेल्लत्प्रफुल्लपुण्डरीकविभ्रमाभ्यां प्रथमारब्धवकुलावलीविरचनापदेशसंयमन-बलात्कारविस्तीर्य्यमाणाभ्यां लोचनाभ्यां विजृम्भमाणविस्मयस्तिमितदीर्घपर्य्यन्तपरिवर्त्तनाविलासताण्डवितभ्रुलताविडम्बितानङ्गसारङ्गविभ्रमविदग्धं अवलोकयन् प्रत्यक्षीकृत एव।

---

(फ) लवेति। नन्वित्यवधारणे। प्रियसख्या त्वयापि स प्रत्यक्षीकृत इत्यन्वयः। प्रियसख्या त्वया। मन्दमारुतेन अल्पवायुना, उद्वेल्लत् ईषच्चलत्, प्रफुल्लं विकसितं यत् पुण्डरीकं श्वेतपद्मं तस्य विभ्रम इव विभ्रमो विलासो ययोस्ताभ्याम्। तथा प्रथमं आरब्धा या वकुलावलीविरचना वकुलमालानिर्म्माणं तस्या अपदेशेन छलेन पुनस्तत्समापनच्छलेनेत्यर्थः यत् संयमनं त्वदवलोकनजातस्वकीयाकारवैषम्य संवरणं तस्मिन् सत्यपि बलात्कारेण त्वदीयरूपावलोकनतृष्णाबलेन विस्तीर्य्यमाणाभ्यां

(१) पढ़माबद्ध इति पाठभेदः।

(२) संजमिद इति पाठान्तरम्।

(३) विलासुल्लसिअ इति पाठः क्वचित्।

(४) भुलदाविभाविदाणङ्गसरसंरम्भ इति भिन्नः पाठः।

मालती । लवङ्गिकां परिष्वज्य । **अम्मो (१) पिअसहि ! किं तस्स दाव महाणुभावस्स साहाविआ ज्जेव ते मुहुत्तसण्णिधाइणो जणस्स विप्पलम्भहेदुआ (२) विलासा, आदु जहा पिअसही सम्भावेदि । (ब)**

---

(ब) अहो प्रियसखि ! किं तस्य तावन्महानुभावस्य स्वाभाविका एव ते मुहूर्त्तसन्निधायिनो जनस्य विप्रलम्भहेतुका विलासाः, अथवा यथा प्रियसखी सम्भावयति ।

---

आयतीक्रियमाणाभ्यां लोचनाभ्यां अवलोकयन्निति सम्बन्धः । विजृम्भमाणो वर्द्धमानः, यौ विस्मयस्त्वद्दर्शनजनिताश्चर्य्यं तेन स्तिमितौ निश्चलौ दीर्घौ आयतौ यौ पर्य्यन्तौ अपाङ्गदेशौ तयोः परिवर्त्तना स्तिमितयोरपि दर्शनतृष्णावशात् पुनः सञ्चालना सैव विलासः, तेन ताण्डविते नर्त्तिते ये भ्रूलते ताभ्यां विडम्बितः अनुकृतः यः अनङ्ग-सारङ्गः कामधनुः तस्य विभ्रम इव विभ्रमो विलासस्तेन विदग्धं निपुणं यथा स्यात्तथा अवलोकयन् त्वामेव पश्यन् प्रत्यक्षीकृतः प्रियसख्या त्वयापि दृष्ट एव । सुतरां त्वामहं नाश्वासयामीति भावः । बलामोडीति देशीयभाषाशब्दः, सुतरां तदर्थकेन बलात्-कारशब्देनानुवादः कृतः । अभिनयप्रतिकूला खल्वीदृशी दुरूहशब्दानामेव दीर्घसमास-योजना भवभूतेः स्वाभाविको दोषः । "सारङ्गः (पुं)...धनु"रिति शब्दकल्पद्रुमः ।

(ब) मालतीति । परिष्वज्य स्वाभिलषितानुमित-माधवभावप्रकाशादानन्देनालिङ्ग्य । मुहूर्त्तसन्निधायिनः अत्यल्पकालं निकटवर्त्तिनः सतः । एतेन बलवती चिरतनसन्निधा-नाकाङ्क्षा व्यज्यते । विप्रलम्भहेतुकाः मादृशतरुणीजनप्रतारणाकारणीभूताः, विलासाः मुग्धकटाक्षपातादयो विभ्रमाः । प्रियसखी लवङ्गिका यथा सम्भावयति मां प्रत्यनुराग-वशादेव तादृशमवलोकनादिकं कृतमिति तर्कयति । अनयोः कतरः पक्षः सत्यतया ते प्रतिभाति, तद्ब्रूहीति भावः ।

(१) आम इत्यपि पाठः पुस्तकान्तरे ।

(२) विप्पलम्भदत्तआ इति पाठोऽपि दृश्यते ।

लव। विहस्य सासूयमिव। तुमम्वि सहावेण ज्जेव तस्सिं अवसरे असङ्गीदअं णच्चिदासि। (भ)

माल। सलज्जं विहस्य। हुं, तदो तदो। (म)

लव। तदो पडिणिअत्तमाणजत्ताजण-सङ्कुलेण अन्तरिदे तस्सिं जणे मन्दारिआए घरं उवगदह्मि। ताए क्खु चित्तफलअं पहादे हत्थोकिदं आसि। (य)

---

(भ) त्वमपि स्वभावेनैव तस्मिन्नवसरे असङ्गीतकं निर्त्तितासि।

(म) हुं, ततस्ततः।

(य) ततः प्रतिनिवर्त्तमानयात्राजनसङ्कुलेन अन्तरिते तस्मिन् जने मन्दारिकाया गृहमुपगतास्मि। तस्याः खलु चित्रफलकं प्रभाते हस्तीकृतमासीत्।

---

(भ) लवेति। तस्मिन्नवसरे मदनोद्याने माधवदर्शनसमये, असङ्गीतकं सङ्गीतं विना, नर्त्तितासि नाटितासि नृत्यवेलायामिव चञ्चलाङ्गी जातासि। सोत्प्रासनोक्तिरियम्। यथा माधवावलोकनेन भावावेशवशात्तव विविधं चाञ्चल्यमासीत् तथैव तवावलोकनेन माधवस्यापि कटाक्षपातादिको विविधभाव आसीदिति भावः।

अत्र परिभावना नाम मुखसन्धेरङ्गं "कुतूहलोत्तरा वाचः प्रोक्ता तु परिभावना।" इति दर्पणात्।

(म) मालेति। तदानीं भावावेशवशादेव माधवस्य तादृशो भावो जात इत्यवगत्याऽपि मालत्या गोपयितुमजानत्येव समालप्यते, चतुरा लवङ्गिका तु तत् सर्वमेवावगतेति विज्ञाय अप्रतिभया सलज्जमित्युक्तम्। आहेति क्रियाविशेषणमेतत्।

(य) लवेति। तस्या मन्दारिकाया हस्ते। हस्तीकृतं न्यासीकृतं मयेति शेषः। पूर्वमेव मया मन्दारिकाया हस्ते तच्चित्रफलकं न्यस्तमिति त्वया स्मरणीयमिति भावः।

माल। किं णिमित्तं। (र)

लव। तं क्खु माहवाणुअरो कलहंसो णाम कामेदि, सा तस्स दंसइस्सदि त्ति। तदो पिअणिवेदिआ मे मन्दारिआ संवुत्ता। (ल)

माल। स्वगतं सानन्दम्। णूणं तेणवि कलहंसएण तं पडिच्छन्दअं अत्तणो णाहस्स दंसिदं हुविस्सदि। प्रकाशम्। सहि! किं दाणिं दे पिअं। (व)

(र) किं निमित्तम्।

(ल) तां खलु माधवानुचरः कलहंसो नाम कामयते; सा तस्य दर्शयिष्यतीति। ततः प्रियनिवेदिका मे मन्दारिका संवृत्ता।

(व) नूनं तेनापि कलहंसकेन तत् प्रतिच्छन्दकं आत्मनो नाथस्य दर्शितं भविष्यति। सखि! किमिदानीं ते प्रियम्।

(र) मालेति। किं निमित्तं त्वया मन्दारिकाया हस्ते तच्चित्रफलकं हस्तीकृतमित्यर्थः।

(ल) लवेति। सा मन्दारिका, तस्य कलहंसस्य समीपे दर्शयिष्यति प्रकाशयिष्यति, इति हेतोः मन्दारिकाया हस्ते तच्चित्रफलकं मया न्यासीकृतमित्यर्थः इत्यन्तेन अन्तरा मालतीपृष्टमभिधाय प्रक्रान्तमभिधातुमुपक्रमते तत इति। ततो मन्दारिकागृहगमनानन्तरम्।

(व) मालेति। नूनमिति अनुमानेनार्थनिश्चये। नाथस्य प्रभोर्माधवस्य। दर्शितं भविष्यति इत्यनुमीयत इति भावः। किमिदानीं ते प्रियं, यत्, मन्दारिकया निवेदितमिति शेषः।

लव। **एदं क्खु संदाविदस्स सन्दावआरिणो दुल्लहमणोरहावेसदूसहाआसदज्झन्तचित्तस्स खणमेत्तणिव्वावअं तुह पड़िच्छन्दअं (अ)।** इति चित्रं दर्शयति।

माल। सहर्षोच्छ्वासं चिरं (१) निर्वर्ण्य। **अह्मो! (२) दाणिं वि हिअअस्स मे अणास्सासो (३) जेण एदं वि आस्सासणं विप्पलम्भोत्ति संभावेमि। कधं अक्खराइंपि (४)** "जगति जयिनस्ते भावा नवेन्दुकलादय" इत्यादि पूर्वोक्तं पठित्वा सानन्दम्। **महाभाओ! सरिसो क्खु दे णिम्माणस्स विरअणामहुरदा (५)। दंसणं उण तक्काल**

(अ) एतत् खलु सन्तापितस्य सन्तापकारिणो दुर्लभमनोरथावेशदुःसहाया-सदह्यमानचित्तस्य क्षणमात्रनिर्वापकं तव प्रतिच्छन्दकम्।

(अ) लवेति। सन्तापितस्य त्वदुद्देशजन्मनैव मदनानलेन उत्तापितस्य सन्तापकारिणः आत्मोद्देशजन्मना मदनानलेनैव तव सन्तापविधायिनः। दुर्लभो यो मनोरथः तव समागमाभिलाषः, तस्य आवेशेन उपस्थित्या यो दुःसहायासः, तेन दह्यमानं यत् चित्तं तस्य क्षणमात्रनिर्वापकं शीतलताजनकं तव प्रतिच्छन्दकं तव प्रतिमूर्त्तिः। यथा त्वया स्वोत्कण्ठानिवृत्तये माधवमूर्त्तिरालिखिता, तथा तेनापि तव मूर्त्तिरिति। उभयोः परस्परानुरागसूचकचित्रसमर्पणात्मकं प्रियं मन्दारिकया निवेदितमिति भावः।

(१) सहर्षं सोच्छ्वासं चित्रमिति पाठान्तरम्।
(२) अह्मो इति क्वचित् पाठः।
(३) अणासङ्गो इत्यपि पाठः पुस्तकान्तरे।
(४) इति वाचयति इत्यधिकः पाठः क्वचित्।
(५) सरिसं क्खु दे णिम्माणस्स वअणमहुरदाए इति पाठभेदः।

मणोहरं परिणामदीहसन्दावदारुणं । धण्णाओ क्खु ताओ इत्थिआओ (१) जाओ तुमं ण पेक्खन्ति, पेक्खिअ वा अत्तणो हिअअस्स पहवन्ति । (ष)

(ष) अहो ! इदानीमपि हृदयस्य मे अनाश्वासः । येन इदमप्याश्वासनं विप्रलम्भ इति सम्भावयामि । कथमक्षराण्यपि । महाभाग ! सदृशी खलु ते निर्म्माणस्य विरचनामधुरता । दर्शनं पुनस्तत्कालमनोहरं परिणामदीर्घसन्ताप-दारुणम् । धन्याः खलु ताः स्त्रियः, यास्त्वां न प्रेक्षन्ते, प्रेक्ष्य वा आत्मनो हृदयस्य प्रभवन्ति ।

(ष) मालतीति । अनाश्वासः अविश्वासः माधवोऽपि मय्यनुरक्त, इति विश्वासो न भवतीत्यर्थः । तत्र हेतुमाह येनेत्यादि । इदमप्याश्वासनं सम्मूर्च्छितचित्रणरूपो विश्वासकरव्यापारोऽपि विप्रलम्भः मम प्रतारणा इति सम्भावयामि मन्ये । तदनु-रागजननोपयोगिमद्गुणाभावात् तुच्छखेलावदयं व्यवहार इति भावः । अक्षराण्यपि दृश्यन्त इति शेषः । निर्म्माणस्य सदृशी, विरचनामधुरता, यथा तवाकृतिर्मनोहरा वाक्यरचनाऽपि तथैव मनोहरेत्यर्थः । दर्शनं तवावलोकनं तत्कालमनोहरं दर्शन-क्षणे प्रीतिप्रदं, परिणामे शेषे अदर्शनकाले दीर्घसन्तापेन विरहजनितचिरानुतापेन दारुणं भीषणम् ममैव तज्जातमिति भावः । हृदयस्य प्रभवन्ति हृदयं स्ववशे रक्षितुं शक्नुवन्तीत्यर्थः । अत्र यास्त्वां न पश्यन्ति ताः स्त्रियो नयनवैफल्यादधन्याः, याश्च दृष्ट्वा हृदयस्य प्रभवन्ति, ता अपि गुणानभिज्ञत्वात् पशुसमाना इति त्वमतीवा-नुपमरूपादिगुणवानसीति व्यज्यते ।

अत्र विलोभनं नाम मुखसन्धेरङ्गं "गुणाख्यानं विलोभन"मिति लक्षणात् ।

(१) कण्णआओ इति भिन्नः पाठः ।

लव। सहि! किं एव्वं पि दे णत्थि आस्सासो ?। (स)

माल। सहि! कधं (१)। (ह)

लव। जस्स कारणादो उक्खण्डिअबन्धणं कङ्केल्लिपल्लवं विअ हिअअं धारेन्दो किलम्मन्तणोमालिआकुसुमणिस्सहा परिखिज्जसि (२) सोवि जाणाविदो भअवदा मम्महेण सन्दावस्स दूस्सहत्तणंत्ति। (च)

(स) सखि! किमेवमपि ते नास्ति आश्वासः ?।

(ह) सखि! कथम्।

(च) यस्य कारणात् उत्खण्डितबन्धनं कङ्केल्लिपल्लवमिव हृदयं धारयन्ती, क्लाम्यन्नवमालिकाकुसुमनिःसहा परिखिद्यसे, सोऽपि ज्ञापितो भगवता मन्मथेन सन्तापस्य दुःसहत्वमिति।

(स) लवेति। एवमपि, आसक्तिवशात्तेनात्ममूर्त्तिपार्श्वे त्वन्मूर्त्तिचित्रणे कृतेऽपि ते तव आश्वासो नास्ति मय्यनुरक्त इति विश्वासो न भवति किमित्यर्थः।

(ह) मालेति। कथं विश्वासः स्यादित्यर्थः। मयि तादृशगुणाभावादिति भावः।

(च) लवेति। उत्खण्डितबन्धनं छिन्नमूलं कङ्केल्लिपल्लवं अशोककिसलयम्। क्लाम्यत् म्लानं भवत् यत् नवमालिकाकुसुमं नवमल्लिकापुष्पं तद्वत् निःसहा कोमला। सन्तापस्य दुःसहत्वं ज्ञापित इत्यन्वयः। इति हेतोरेव स्वोत्कण्ठानिहृत्यै त्वन्मूर्त्तिचित्रणात् तदनुरागे विश्वासस्त्वया करणीय एवेति भावः।

---

(१) कहं विस्स इति पाठोऽपि दृश्यते।

(२) कुसुमाउहेण पड़िहिज्जसि इत्यपि पाठः।

माल। सहि ! कुसलं दाणिं तस्स महाणुभावस्स (१) भोदु, मह उण सुदुल्लहो आस्सासो। सास्रम्। विसेसदो अज्ज पिअ-सहि ! (२)। संस्कृतमाश्रित्य। (क)

मनोरोगस्तीव्रो (३) विषमिव विसर्पत्यविरतं (४)
प्रमाथी निर्धूमो * ज्वलति विधुतः पावक इव।

(क) सखि ! कुशलमिदानीं तस्य महानुभावस्य भवतु, मम पुनः सुदुर्लभ आश्वासः। विशेषतोऽद्य प्रियसखि !

(क) मालेति। कुशलं भवतु, तादृशे मदनात्याचारे सत्यपि दैवताप्रसादादिति भावः। पुनः किन्तु मम आश्वासः तस्य समागमसम्भावनया चित्तसान्त्वना सुदुर्लभः तावन्मनोवेदनया मरणस्यासन्नत्वादिति भावः। अत एव सास्रमिति। अद्य इदानीम्। विपदागमे भावभाषादिवैषम्यस्य स्वाभाविकत्वात् मालती स्वभाषां शौरसेनीमपहाय संस्कृतमाश्रित्य ब्रवीति। कविना तु तत्प्रयोगात् वैदग्ध्यमप्यङ्गीकृतमस्या इति सङ्गतिः। तथा च साहित्यदर्पणः—

"योषित्-सखी-बाल-वेश्या-कितवाप्सरसां तथा।
वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा॥"

मन इति। तीव्रः सातिशयः अत एव प्रमाथी प्रमथनशीलः भृशास्वास्थ्यकरः मनोरोगः मदनकृतचित्तपीड़ा विषमिव अविरतं विसर्पति व्याप्नोति। तथा विधुतः

(१) महापह्यावस्स इत्यपि पाठः।

(२) विसेसदो अज्ज पिअसहि इति पाठः क्वचिन्नास्ति।

(३) मनोरोगस्तीव्रमिति पाठान्तरम्।

(४) विसर्पन्नविरतमिति पाठभेदः।

* निर्धूममिति क्वचित् पाठः।

छिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो-

न मां त्रातुं तातः प्रभवति, न चाम्बा न भवती ॥१॥

लव। एव्वं ज्जेव (१) पच्चक्खसोक्खदाइणो परोक्खदुक्ख-दुस्सहा (२) सज्जणसमागमा होन्ति। अविअ, पिअसहि! (३)

---

(ख) एवमेव, प्रत्यक्षसौख्यदायिनः परोक्षदुःसहाः सज्जनसमागमा भवन्ति। अपि च, प्रियसखि! यस्य वातायनान्तरमुहूर्त्तमात्रदर्शनेन सविशेषसमिद्धहुत-

---

वायुना चालितः सन्धुक्षित इत्यर्थः अतएव निर्धूमः पावको वह्निरिव ज्वलति ज्वालामाली भवति। तथा गरीयान् ज्वर इव इतः इतः अन्तर्बहिश्च प्रत्यङ्गं देहस्य सर्वावयवान् छिनत्ति निपीडयति। अत एव तातः पिता मां त्रातुं अस्या विपदो रक्षितुं न प्रभवति न शक्नोति, अम्बा माता न, भवती त्वञ्च न मां त्रातुं प्रभवसीत्यन्वयः। सर्वेषामेव मं हकारित्वेऽप्यसम्भवात्, किन्त्वेक एव स महानुभावः प्रभवति सर्वथा सम्भवादिति भावः।

अत्र विसर्पति ज्वलति छिनत्तीत्यनेकक्रियाणां मनोरोग इत्येककर्त्तकारकत्वात् दीपकमलङ्कारः, उपमा, चतुर्थचरणवाक्यार्थं प्रति पूर्ववाक्यत्रयार्थानां हेतुत्वात् काव्यलिङ्गं, तथा तातम्बाभवतीनां प्रभवतीत्येकक्रियासम्बन्धानुरूपयोगिता च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः। समुच्चयनायैनैव अम्बेत्यनेन चकारस्य समभिव्याहारात् भवतीत्यतः परं तस्य पाठाभावेऽपि न अक्रमतादोष इति सुधीभिर्विभावनीयम्। शिखरिणी वृत्तम् ॥१॥

(ख) लवेति। एवमेव त्वया यदुक्तं तत् सत्यमेव। प्रत्यक्षसौख्यदायिनः

(१) एव्वं एदं इति भिन्नः पाठः।

(२) परोक्खदुक्खदूसहाआसकारिणो इति पाठोऽपि दृश्यते।

(३) पिअसहि इति पाठः पुस्तकान्तरे नास्ति।

जस्स वादाअणन्तरमुहुत्तमेत्तदंसणेन सविसेससमिद्ध (१) हुदवहाअन्तपुस्सचन्दोदआ (२) णिक्करुणकामव्वावारसंसइद-जीविदा दे सरीरावत्था, तस्स ज्जेव सम्पत्तसविसेसदंसणा (३) अज्ज सन्तप्पसि त्ति किं एत्थ भणिदव्वं। ता (४) पिअसहि! सलाहणिज्जं दुल्लहमनोरहफलं जीअलोअस्स, जं गुरुआणुरा-असरिसो (५) महाभाअवल्लहसमाअमो त्ति एत्तिअं जाणीमो। (यव)

---

वह्नाग्रमानपूर्णचन्द्रोदया निष्करुणकामव्यापारसंशयितजीविता ते शरीरावस्था, तस्यैव सम्प्राप्तसविशेषदर्शना अद्य सन्तप्यस इति किमत्र भणितव्यम्। तत् प्रियसखि! श्लाघनीयं दुर्लभमनोरथफलं जीवलोकस्य, यद्गुरुकानुरागसदृशो महाभागवल्लभसमागम इत्ये-तावत् जानीमः।

सम्भ्रमदर्शनालापादिना, परोक्षदुःखदुःसहाः दारुणविरहेणेति भावः। सवि शे-सातिशयं यथा स्यात्तथा समिद्धः सन्दीप्तो यो हुतवहो वह्निः तद्वदाचरन् स इव सन्तापयन् पूर्णचन्द्रोदयो यस्यां सा। तथा निष्करुणो निर्दयो यः कामो मदनस्तस्य व्यापारेण सातिशयाविर्भावेण संशयितं तिष्ठति याति वेति संशयमापन्नं जीवितं जीवनं यस्यां सा, ते तव शरीरावस्था अभवदिति शेषः। तस्यैव माधवस्य अद्य संप्राप्तं सविशेषं परस्परा-सक्तिगुरुकबहुतरसात्त्विकभावाविर्भाववशात् सातिशयदर्शनं मदनोद्याने साक्षात्कारो यया सा तथोक्ता, त्वं सन्तप्यसे मदनानलेन दह्यसे इत्यत्र किं भणितव्यं अस्माकं किं

(१) सुसमिद्ध इति पाठान्तरम्।

(२) पुण्णिमाचन्दोदआ इति पाठभेदः।

(३) सम्पदं सविसेसदंसणादो इति भिन्नः पाठः

(४) ता एत्थ इति पाठोऽपि दृश्यते।

(५) गुरुआणुराअसरिसं इति क्वचित् पाठः।

माल। **सहि! दइदमालदीजीविदे! साहसोवरणासिणि! अवेहि।** सास्रम्। **अहवा अहं ज्जेव वारंवारं विलोअअन्ती पलाअन्तपड़िट्ठाविदधीरत्तणावट्टम्भेण अत्तणो हिअएण, दूरं विलोअन्तलज्जात्तेण दुव्विणअलहुआ (१) एत्थ अवरज्झह्मि, तधापि पिअसहि!।** भूयः संस्कृतमाश्रित्य। **(ग)**

(ग) सखि! दयितमालतीजीविते! साहसोपन्यासिनि! अपेहि। अथवा अहमेव वारंवारं विलोकयन्ती पलायमानप्रतिष्ठापितधीरत्वावष्टम्भेन आत्मना हृदयेन दूरं विलीयमानलज्जत्वेन दुर्विनयलघुः अपराध्यामि। तथापि प्रियसखि!

वक्तव्यमस्ति सर्व्वथैव सम्भवपरत्वात् किमपि वक्तव्यं नास्तीत्यर्थः। जीवलोकस्य प्राणि-वर्गस्य,श्लाघनीयम् आदरणीयम्, दुर्लभे विषये यो मनोरथस्तस्य फलं सिद्धिः तदेवेति शेषः। गुरुकानुरागसदृशः विशालासक्त्यनुरूपः। यं प्रति यावान् महाननुरागो भवति यदि तस्य वल्लभस्य तदनुरूपः समागमो लभ्येत, तदा तदेव श्लाघ्यं दुर्लभाभिलाषफलमिति सरलार्थः। यदि त्वमनुमन्यसे तदा तदहं घटयितुमर्हामीति भावः। एतेन साहस-निर्भरं विधाय स्वयमेव त्वया माधवेन सह युज्यतां, तथात्वे तु मदनात्याचारादस्मदाशङ्क-नीय-त्वदीयजीवनभयं न भविष्यतीति व्यज्यते।

(ग) मालेति। दयितं प्रियं मालत्या जीवितं यस्यास्तत्सम्बोधनम्। एतेन मालत्या जीवितमेव तव प्रियं न तु निर्म्मलकुलं तातादीनां गौरवरक्षादिकञ्चेति ध्वनितम्। साहसोपन्यासिनि! साहसकरणोपदेशिनि! अपेहि दूरं गच्छ। कुलनैर्म्मल्यादिरक्षानुरोधात् सावधानतातादिकर्त्तृकविघ्नसम्भावनावशाच्च साहस-विधानमसम्भवमेवेति भावः। विलोकयन्ती माधवमिति शेषः। पलायमानं नष्ट-

(१) दुव्विणअलहुई इति पाठः पुस्तकान्तरे।

ज्वलतु गगने रात्रौ रात्रावखण्डकल: शशी
दहतु मदन:, किंवा मृत्यो: परेण विधास्यत: (१) ।
मम तु दयित: श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं, न त्वेवायं जनो न च जीवितम् ॥ २ ॥

प्रायं प्रतिष्ठापितं पुनर्निरुध्य स्थापितं यत् धीरत्वं धैर्य्यं तस्यावष्टम्भ आश्रयभूतं तेन । हृदयेन द्वारा, दूरं विलीयमानलज्जत्वेन अत्यन्तनिर्लज्जत्वेन हेतुना दुर्विनया विनयविरुद्धा प्रगल्भता तेन लघ्वी गुरुत्वहीना अहमेव अपराध्यामीत्यन्वय: । यद्यहं तं तादृग् वारंवारं नालोकयिष्यं तदेतादृशी दशा नाभविष्यदेव, सुतरामपीहेत्यादिना तव तिरस्कारो नितरामन्याय्य एवेति भाव: ।

ज्वलत्विति । रात्रौ रात्रौ सर्व्वास्वेव रात्रिषु गगने अखण्डकल: पूर्णमण्डल: शशी ज्वलतु मादृशजनपक्षे वह्निरिव ज्वालावान् भवतु, तथा मदनोऽपि दहतु । ननु साहसमविधाय ईदृगभ्युपगमाद्यदि ते मरणं भवेदित्याह किं वेति । तौ शशिमदनौ मृत्यो: परेण वा मरणादतिरिक्तं वा किं विधास्यत: करिष्यत: । विरहिणो मरणविधानपर्य्यन्तैव तयोर्योग्यता, तच्च मरणमिदानीं मया प्रार्थ्यत एवेति भाव: । ननु ईदृशभावेन मरणमनङ्गीकृत्य साहसमेवावलम्ब्यतां तथात्वे सर्व्वथैव श्रेयो भवेदित्याह ममेत्यादि । पुनरर्थे तुशब्द: । मम श्लाघ्य: बहुतरसद्गुणशालितया सर्व्वजनप्रशंसनीय: तात: पिता दयित: प्रिय:, तथा अमलान्वया निर्द्दोषवंशोत्पन्ना जननी दयिता, तथा अमलिनं कलङ्कहीनं कुलञ्च दयितम् । यदि पुनस्तातादय: पूर्व्वत एव दूषिता अभविष्यन् तदा मम साहसविधानेन कृष्णपटे कृष्णचिह्नमिव तेषु न कश्चिन्नूतनो दोषोऽभविष्यत् । यदि वा मम ते अप्रिया: स्युस्तदापि साहस विधानेन शत्रुष्विव तेषु दोषारोपणं न तादृशदोषावहं; किन्तु नितान्तनिर्दोषेषु दयितेषु च तातादिषु साहसविधानेन कलङ्कारोपणं शुक्लपटे कृष्णचिह्नमिव नितान्त

(१) विधास्यति इति पाठान्तरम् ।

लव। स्वगतम्। एत्थ दाणिं को उवाओ। (घ)

अथ नेपथ्याद्दप्रविष्टा प्रतिहारी। एसा भअवदी कामन्दई। (ङ)

उभे। किं भअवदी। (च)

प्रति। भट्टिदारिअं दट्ठुकामा आअदा। (छ)

उभे। तदो किं विलम्बीअदि। (ज)

---

(घ) अवेदानीं क उपायः।

(ङ) एषा भगवती कामन्दकी।

(च) किं भगवती।

(छ) भर्त्तृदारिकां द्रष्टुकामा आगता।

(ज) ततः किं विलम्ब्यते।

दुःखावहमिति भावः। नन्वितोऽपि माधवो जीवितञ्च ते दयितौ तदर्थमपि साहसं युज्यत इत्याह न त्विति। तु किन्तु लक्ष्यीभूतो जनो माधवः नैव दयितः। येन हि दर्शनमात्रेणैव कष्टं ददातीति भावः। तथा जीवितं जीवनञ्च मम न दयितम्। येन न गच्छति, तद्गमने तु नेदृक् कष्टं स्यादिति भावः।

अत्र शीतरश्मितो ज्वलनरूपविरुद्धक्रियोत्पत्तेर्विषमालङ्कारः परार्द्धे परिकरश्च, इत्यनयोर्मिथो नैरपेक्ष्यात् संसृष्टिः।

"परेणेति विभक्तिप्रतिरूपकमव्ययम्" इति मल्लिनाथः (माघे १३ सर्गे १५ श्लोके) "परेणेत्यधिकार्थमव्ययम्" इति साहित्यदर्पणटीकायां रामचरणः। हरिणी वृत्तम्॥ २॥

(ङ) अथेति। एषा भगवती कामन्दकी भर्त्तृदारिकां द्रष्टुकामा आगता इत्येकमेव वाक्यम्। किन्तु उभाभ्यामुत्कण्ठया मध्ये किं भगवतीति पृष्टमिति बोध्यम्।

(ज) उभे इति। किं विलम्ब्यते त्वया सा प्रवेशयितुमिति शेषः।

प्रतीहारी निष्क्रान्ता। मालती चित्रफलकमाच्छादयति। (झ)

लव। स्वगतम्। सुसमोहिदं (१) क्खु जादं। (ञ)

ततः प्रविशति कामन्दकी अवलोकिता च।

काम। साधु सखे! भूरिवसो! साधु। "प्रभवति निजस्य कन्यकाजनस्य महाराज" इत्युभयलोकाविरुद्धं वचनमुपन्यस्तम्। (२) अपि च, अद्य मन्मथोद्यानवृत्तान्तेन भगवतो विधेरप्यनुकूलतामवगच्छामि। वकुलावलीचित्रफलकव्यति-

(ञ) सुसमीहितं खलु जातम्।

---

(झ) मालतीति। आच्छादयति वसनाञ्चलेनेति शेषः। लज्जानिवारणार्थमेतदिति बोध्यम्।

(ञ) लवेति। सुसमीहितं सम्यगभिलषितम्। इदानीमेव कामन्दक्यागमनमभिलषितं तत्तु जातम्, तथा चास्मिन् विपत्तिसमये यत् कर्त्तव्यं तदियमेव करिष्यतीति भावः।

(ट) कामेति। 'मन्त्रिवर! नन्दनाय मालती दीयताम्' इति यदा राज्ञा प्रार्थितं तदा मन्त्रिणा भूरिवसुनोक्तम् "प्रभवति निजस्य कन्यकाजनस्य महाराज" इति वचनमिति बोध्यम्। महाराजो भवान् निजस्य स्वकीयरूपस्य कन्यकाजनस्य मालत्याः प्रभवति दानादौ शक्नोति। भवान् अन्नदातृतया सर्वेषामेवास्मत्परिवाराणां पितृत्वात् मालतीमपि यस्मै कस्मैचिद्दातुमर्हति, सुतरां मन्त्रिणो नन्दनाय दातुं का नाम आपत्तिरिति भावः। अस्मिन्नर्थे नृपतेरनुरोधपालनात्

(१) सुसमाहिदं इति क्वचित् पाठः।

(२) उत्तरमुपन्यस्तमिति पाठान्तरम्।

करस्तु कमप्यद्भुततमं प्रमोद-(१) मुल्लासयति। इतरेतरानुरागो हि विवाहकर्म्मणि (२) परार्ध्यं मङ्गलम्। गीतश्चायमर्थोऽङ्गिरसा, यस्यां मनश्चक्षुषोर्निर्बन्ध-(३) स्तस्यामृद्धिरिति। (ट)

अव। एसा मालदी। (ठ)

(ठ) एषा मालती।

कोपाभावेन ऐहिकानिष्टसम्भावनाया अभावात् इह लोकेऽविरुद्धं वचनमिति कामन्दक्या आशयः। पक्षान्तरे तु 'महाराजो निजस्यैव कन्यकाजनस्य दानादौ धर्म्मतः प्रभवति, नतु परकीयस्येत्यर्थः'। तथा च मालत्याः परकीयकन्यात्वेन तस्या दानादौ धर्म्मतो न भवान् प्रभवति, किन्त्वहमेव प्रभवामि, सुतरामतीतयौवनाय नन्दनाय मालतीं न ददामीति भावः। अस्मिन्नर्थे तु माधवाय मालतीदानस्यावश्यं सम्भवात् देवरातेन सह अपत्यसम्बन्धप्रतिज्ञाभङ्गाभावेन पापाभावात् परलोकाविरुद्धं वचनमिति कामन्दक्या अभिप्रायः। अत्र शोभा नाम नाट्यलक्षणम्। यथा दर्पणे—

"सिद्धैरर्थैः समं तत्र असिद्धोऽर्थः प्रकाश्यते।
श्लिष्टलक्षणचित्रार्था सा शोभेत्यभिधीयते॥"

वकुलावली वकुलमाला। व्यतिकरो विनिमयः। मालत्या माधवग्रथितवकुलमालाप्राप्तिः, माधवस्य च मालतीचित्रितस्वचित्रप्राप्तिरित्थं परिवृत्तिरित्यर्थः।

(१) व्यतिकरसंविधानकौतुकमद्भुतं प्रमोदमुल्लासयतीति पाठभेदः।

(२) दारकर्म्मणीत्यपि पाठः।

(३) वाङ्मनश्चक्षुषोरनुबन्धः। इति पाठोऽपि दृश्यते।

काम। निर्वर्ण्य।

निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा,
कलाशेषा मूर्त्तिः शशिन इव नेत्रोत्सवकरी।
अवस्थामापन्ना मदनदहनोद्दाहविधुरा-
मियं नः कल्याणी रमयति मनः कम्पयति च॥ ३॥

उल्लासयति उत्पादयति हि यस्मात्। इतरेतरानुरागः परस्परासक्तिः। परार्ध्यं प्रधानं, मङ्गलं अभिप्रेतविवाहसिद्धिरूपमङ्गलजनकः। अतएव प्रमोदमुल्लासयतीति भावः। अङ्गिरसा तदाख्येन देवर्षिणा। यस्यां कन्यायाम्। निर्बन्धः शील-सौन्दर्य्यादिना अभिनिवेशः। तस्यां परिणीतायां ऋद्धिः तस्य पुरुषस्य समृद्धिर्भवतीत्यर्थः। तथाचाङ्गिराः—

"यस्यामालोकनादेव सज्जते चित्तचक्षुषी।
तस्यामुद्वाहितायान्तु नरस्य सुखमेधते॥"

बौद्धसन्न्यासिन्यपि कामन्दकी बौद्धधर्म्मावलम्बनात् प्रागध्ययनात् आर्य्यमन्तानयोः मालतीमाधवयोर्विषये आर्य्यशास्त्रोल्लेखस्यौचित्याच्च अङ्गिरोवचनप्रामाण्यमुपन्यस्तमिति बोध्यम्।

"पराध्योग्रप्राग्रहरे"त्यादमरः। "अभिप्रेतार्थसिद्धिर्मङ्गलम्" इति तिथितत्त्वे स्मार्त्तः। "निर्बन्धः (पुं) अभिनिवेशः" इति शब्दकल्पद्रुमः। स्वगतवदुक्तिरियम्।

निकाममिति। सरसः अपर्य्युषितत्वेनार्द्रः यः कदलीगर्भः कदलीस्तम्भ-मध्यवर्त्ती सारभागः (थोर इति ख्यातः) तद्वत् सुभगा विरहेण श्वेतसुन्दरी, तथा क्षामाङ्गी कृशाङ्गी, अतएव कलाशेषा षोड़शभागैकभागमात्रावशिष्टा शशिनः कृष्णचतुर्दशीचन्द्रस्य मूर्त्तिरिव नेत्रोत्सवकरी नयनानन्दकारिणी कल्याणी अस्म-दाशास्यमानमङ्गलास्पदीभूता इयं मालती नोऽस्माकं मनः निकामं सातिशयं रमयति अभिलष्यमाणस्य माधवं प्रत्यनुरागातिशयस्य व्यञ्जकतया आह्लादयति।

अपि च। परिपाण्डुपांसुलकपोलमाननं
दधती मनोहरतरत्वमागता।
रमणीयजन्मनि जने परिभ्रमन्
ललितो विधिर्विजयते हि मान्मथः॥ ४॥

तथा मदनदहनस्य कामाग्नेरुद्दाहेन उत्तापेन विधुरां विह्वलाम् अवस्थां दशाम् आपन्ना प्राप्तेति मनः कम्पयति जीवननाशाशङ्कया उद्वेजयति च।

अत्र उक्तरूपयथासंख्यनान्वयात् यथासंख्यमलङ्कारः, रमयति कम्पयतीत्यनेकक्रिययोरियमित्येवाकर्तृकारकत्वात् दीपकं, तथा आह्लादोद्वेगयोर्विरूपयोः सङ्घटनया विषमञ्च, इत्येतेषामेकाश्रयानुप्रवेशरूपः सङ्करः। सोऽपि पुनर्लुप्तोपमोपमा-पदार्थहेतुककाव्यलिङ्गैः सङ्कीर्य्यते।

शिखरिणी वृत्तम्॥ ३॥

परिपाण्डिति। परिपाण्डू नितान्तशुभ्रौ, पांसुलौ तैलादिव्यवहाराभावात् रूक्षौ कपोलौ गण्डौ यस्मिन् तत् तादृशम् आननं मुखं दधती धारयन्ती मालती, इयमनयोर्मनोहरेति मनोहरतरा, तत्त्वं, पूर्वावस्थातो विशेषसौन्दर्य्यमित्यर्थः आगता प्राप्ता। ननु तथात्वेऽपि कथं मनोहरतरत्वमित्याह रमणीयेति। हि यस्मात् रमणीयं भाग्यवशात् सुन्दरं जन्म यस्य तस्मिन् जने परिभ्रमन् प्रवर्त्तमानः ललितः सुन्दरः मान्मथो विधिः कामव्यापारः विजयते उत्कर्षेण वर्त्तते। इदानीं कामावेशवशादेव मालती श्वेतरूक्षा सत्यपि पूर्वावस्थातो मनोहरतरा जातेति भावः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः।

"परिपाण्डुदुर्ब्बलकपोलसुन्दरम्" इत्याद्युत्तररामचरितश्लोकस्मरणपूर्व्विकेयं रचनेति प्रतिभाति।

मञ्जुभाषिणी वृत्तम्॥ ४॥

अथवा, (१) नियतमनया सङ्कल्पनिर्म्मितः प्रियसमागमोऽनुभूयते । तथाह्यस्याः । (ङ)

नीवीबन्धोच्छ्वसनमधरस्पन्दनं दोर्विषादः,
　　स्वेदश्चक्षुर्मसृणमधुराकेकरस्निग्धतारम् (२) ।
गात्रस्तम्भः, स्तनमुकुलयोरुत्प्रबन्धः प्रकम्पो
　　गण्डाभोगे पुलकपटलं, मूर्च्छना चेतना च ॥५॥

(ङ) अथवेति । नियतं निश्चितम् । सङ्कल्पनिर्म्मितः चिन्तामात्रेण रचितः मनसा माधवसङ्गमसुखमास्वद्यत इत्यर्थः । तत्तदनुभावदर्शनादिदमनुमीयत इति भावः ।

के ते अनुभावा इत्याह नीवीति । अस्या मालत्याः नीवीबन्धोच्छ्वसनं कटीवस्त्रस्खलनम् । सुरतारम्भकालीनप्रियतमकराकर्षणभावनावशादिदमिति भावः । अधरस्पन्दनं ओष्ठस्फुरणम् । चुम्बनचिन्तयेदमिति भावः । दोर्विषादः भुजयोः शैथिल्यम् । अयं पुनःपरिरम्भभावनयेति भावः । स्वेदः घर्म्मः । अयमपि सुरतकालीनश्रमचिन्तावशादिति भावः । चक्षुर्नयनं मसृणं कोमलं, मधुरं सुन्दरं, आकेकरं ईषत्कुञ्चितं, स्निग्धं सस्नेहं स्नेहव्यञ्जकं च तारं कनीनिकाद्वयं यस्य तत् तथोक्तं जातम् । इमे च तत्कालीननिरतिशयसुखास्वादभावनावशादुपजायमाना दृष्टिविकारा इत्याशयः । गात्रस्तम्भः, देहस्य निश्चेष्टत्वम् । अयं पुनस्तदानीन्तनासीमहर्षचिन्तयेत्यभिप्रायः । उत्सृष्टः स्वयं परित्यक्तः प्रबन्धः वक्षसः स्थिरता यस्मात् स उत्प्रबन्धः वक्षसोऽपि स्पन्दनकारी, स्तनौ मुकुलाविव स्तोकत्वात् कुड्मलाविव स्तनाविव मुकुलाविति वा तयोः प्रकम्पो वेपथुः । अयमपि रतिश्रमभावनावशादिति भावः । गण्डाभोगे कपोलदेशे पुलकपटलं रोमाञ्चजालम् ।

(१) कुत्रचित् अथवेति पाठो नास्ति ।

(२) मसृणमुकुलाकेकरस्निग्धमुग्धमिति पाठान्तरम् ।

इत्युपसर्पति ।

लव । मालतीं चालयित्वा (१) । **मालदि ! इदो । (ढ)**

उभे । उत्तिष्ठतः । (ण)

माल । **भअवदि ! वन्दामि । (त)**

( ढ ) मालति ! इतः ।

( त ) भगवति ! वन्दे ।

---

चुम्बनानन्तर्य्यचिन्तया खल्विदमित्याशयः । मुर्च्छना नितान्ततन्मयतावशात् युगपत् सर्वेन्द्रियवृत्तिविश्रामः । चेतना पुनः कौतुकोदयात् चैतन्यञ्च वर्त्तते ।

अत्र स्तनमुकुलयोरिति साधकबाधकप्रमाणाभावादुपमारूपकयोः सन्देहसङ्करः, तथा मूर्च्छनाचेतनयोर्विरूपयोः सङ्घटनया विषमालङ्कारश्च, तत्कृतविच्छित्तिवशात् नीवीबन्धोच्छ्वसनादिलिङ्गक-मालतीगतमानसिकप्रियसमागमानुभवानुमानादनुमानालङ्कारः । तथा च मालती मनसा प्रियसमागमानुभववती तत्कृतनीवीबन्धोच्छ्वसनादित्यनुमानाकारः । तथा "स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च" इत्यमराद्युक्तेः नीवीशब्देनैव कटीवस्त्र-बन्धस्योक्तत्वेन पुनर्बन्धशब्दोपादानात् पुनरुक्तता दोषः, स च 'मध्याद्दासःखलनम्" इति पाठेन समाधेयः ।

"आकुञ्चितपुटापाङ्गसङ्गताऽर्द्धनिमेषिणी ।

मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा स्मृता ॥" इति त्रिपुरारिधृतम् ।

मन्दाक्रान्तावृत्तम् ॥ ५

( ढ ) लवेति । तन्मयतया बाह्यज्ञानरहितां निस्पन्दां मालतीं चालयित्वेत्यर्थः ।

(ण) उभे इति । उभे मालतीलवङ्गिके । उत्तिष्ठतः कामन्दक्याः सम्मान-प्रदर्शनार्थमिति बोध्यम् ।

---

(१) लवङ्गिका मालतीं चालयतीति पाठभेदः ।

काम। **महाभागे ! अभिमतफलभाजनं भूयाः (१)।**

लव। **एदं आसणं, एत्थ उवविसदु भअवदी। (द)**

सर्वा उपविशन्ति।

माल। **कुसलं भअवदीए ?। (ध)**

काम। निःश्वस्य। **कुशलमिव। (न)**

लव। स्वगतम्। **पत्थावणा क्खु एसा कवड़णाड़अस्स।** प्रकाशम् **गुरुअवाहभरत्थम्भमन्थरिदकण्टप्पड़िलग्गणीसासं (२) अस्सारिसं विअ (३) अज्ज भअवदाए वअणं। ता किं दाणिं उव्वेअकारणं हुविस्सदि। (प)**

(द) एतदासनं, अत्रोपविशतु भगवती।

(ध) कुशलं भगवत्याः ?।

(प) प्रस्तावना खल्वेषा कपटनाटकस्य। गुरुकवाष्पभरस्तम्भमन्थरितकण्ठप्रतिलग्ननिःश्वासमन्यादृशमिवाद्य भगवत्या वचनम्। तत् किमिदानीं मुद्वेगकारणं भविष्यति।

(ध) कामेति। अभिमतफलस्य अचिरेण माधवसमागमस्य भाजनं पात्रम्।

(न) कामेति। इवशब्दोपादानात् वस्तुतः कुशलं नास्तीति सूच्यते।

(प) लवेति। कपटं छलमेव नाटकं तस्य प्रस्तावना आमुखम् आरम्भ इत्यर्थः। मालत्या अननुरूपवरप्रदानवृत्तान्तोपन्यासच्छलेन यत् माधवं प्रति गुरुतरानुरागसाहसाध्यवसायजननं तस्यायमुपक्रम इति सरलार्थः। अहो ! धन्या खल्वियं बौद्धसन्न्यासिनी,

---

(१) महाभागधेयजन्मतायाः फलस्य भाजनं भूया इत्यपि पाठः।

(२) णिग्गमं इति पाठभेदः।

(३) जेव्व इति पाठान्तरम्।

काम। नन्वयमेव चीरचीवरविरुद्धः परिचयः। (फ)

लव। कथं विय। (व)

काम। अयि! त्वमपि किं न जानासि (१)। (भ)

---

(व) कथमिव।

या किल कुट्टिनीभावमवलम्ब्य साधारणतरुणीजनेन सार्द्धं समानं व्यवहरति। निःश्वासेव-शब्दद्योतितस्य व्याकुलीभावस्य कारणमवगन्तुमिच्छुश्चतुरा लवङ्गिका पृच्छति गुरुकेति। गुरुको महान् यो वाष्पभरः अश्रुसमूहः, तस्य स्तम्भेन अन्तर्निरोधेन मन्थरितः मन्दीकृतः, कण्ठः स्वरो यस्य तत् तथोक्तं, तथा प्रतिलग्नः निःसरद्वचनेन संसक्तः समं निर्गच्छन्निस्तार्थः निःश्वासो यत्र तत्, ततः परपदस्य विशेष्यत्वविवक्षया कर्म्मधारयः। अन्यादृश-मिव पूर्वतो विभिन्नप्रकारमिव।

(फ) कामेति। नन्विति लवङ्गिकासम्बोधने। चीरचीवरविरुद्धः वल्कलवसन-प्रतिकूलः। युष्माभिः प्रवृत्तसंसारिणीभिः सह योऽयमतीवसंसर्गः स एव सन्न्यासिन्या ममेदानीमुद्वेगहेतुरित्यर्थः। तथा चानेन सन्न्यासभङ्गप्रसङ्ग इति भावः। निषिद्धश्चायं वामनपुराणे। यथा—

"सर्वसङ्गपरित्यागी ब्रह्मचर्य्यसमन्वितः।

जितेन्द्रियत्वमावासे नैकस्मिन् वसतिश्चिरम्॥"

(व) लवेति। ननु तवास्माभिरेष संसर्गो बहुपूर्वादेव वर्त्तते किन्तु कदापीदृशो भावो नालक्षित इति जिज्ञासितमेवोद्वेगकारणं पुनः पृच्छति कथमिवेति।

(भ) कामेति। न जानासि इति। मालत्याः सततसहचारिण्या प्रियसख्या च त्वया सर्वमेवेष्टमनिष्टञ्च ज्ञातव्यं, किन्तु प्रायेण सर्वैर्विदितमप्येतन्न ज्ञायत इत्याश्चर्य्य-मेवेति भावः।

(१) अयि! त्वमपि न वेत्सि, इति पुस्तकान्तरे पाठः।

इदमिह मदनस्य जैत्रमस्त्रं
सहजविलासनिबन्धनं शरीरम्।
अनुचितवरसम्प्रदान (१) शोच्यं
विफलगुणातिशयं भविष्यतीति ॥ ६ ॥

मालती वैचित्त्यं नाटयति। (म)

लव। अत्थि एदं, जं णरेन्दवअणाणुरोहेण (२) अमच्चेण णन्दणस्स पडिवण्णा मालदीत्ति सअलो जणो अमच्चं जुउच्छेदि। (य)

---

(य) अस्त्येतत्, यत् नरेन्द्रवचनानुरोधेन अमात्येन नन्दनस्य प्रतिपन्ना मालतीति सकलो जनः अमात्यं जुगुप्सते।

---

स्वयमेवेदानीमुद्वेगकारणं विवृणोति इदमिति। इह अस्मिन् यौवनसमये जैत्रं जयशीलं मदनस्य मन्मथस्य अस्त्रं अस्त्रस्वरूपं तथा सहजविलासनिबन्धनं स्वाभाविकविभ्रमास्पदं, इदं मालत्याः शरीरं, अनुचितः सौन्दर्य्ययौवनादिना अननुरूपः यो वरः नन्दन इत्यर्थः तस्मै सम्प्रदानेन शोच्यं शोकार्हं, तथा विफलो निष्प्रयोजनः गुणातिशयः लावण्यसौन्दर्य्यादिगुणातिरेको यत्र तत् तादृशं भविष्यति। इति हेतोराशैशवात् कन्यावत्सलायां स्नेहशालिन्या मम महानुद्वेगो जात इति भावः।

अत्र मदनस्य जैत्रमस्त्रमिति निरङ्गं केवलरूपकमलङ्कारः।

पुष्पिताग्रा वृत्तम् "अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा।" इति लक्षणात् ॥ ६ ॥

(म) मालतीति। वैचित्त्यं नाटयति मुखवैवर्ण्यादिना चित्तवैलक्षण्यमभिनयति।

(य) लवेति। अस्त्येतत् मयैतत् ज्ञातमस्तीत्यर्थः। नन्दनस्य प्रतिपन्ना

(१) सम्प्रयोग इति विभिन्नः पाठः।

(२) णरेन्दवअणाणुरोधिणा इति पाठान्तरम्।

माल। स्वगतम्। कधं उवहारीकिदह्मि तादेण राइणो। (र)

काम। आश्चर्य्यम्।

गुणापेक्षाशून्यं कथमिदमुपक्रान्तमथवा
कुतोऽपत्यस्नेहः कुटिलनयनिष्णातमनसाम्।
इदं त्वैदम्पर्य्यं यदुत नृपतेर्नर्म्मसचिवः
सुतादानान्मित्रं भवतु स भवान् (१) नन्दन इति ॥७॥

(र) कथमुपहारीकृतास्मि तातेन राज्ञः।

नन्दनाय दातुमभिमता। नन्दनस्येति "चतुर्थ्यर्थे षष्ठीति" पिङ्गलसूत्रेण षष्ठी। जुगुप्सते निन्दति। अतएव मालत्या इष्टानुसन्धाने ममौदासीन्यं नास्तीति भावः।

(र) मालेति। राजानुरोधेनैव दानाङ्गीकारात् राज्ञ एवोपहारीकृतास्मीति भावः। एतेन इष्टसाधनाय रुद्राय पशूपहारवदिति ध्वन्यते।

गुणेति। गुणापेक्षाशून्यं वरकन्ययोर्गुणविचाररहितम् इदमतितर्य्यौवनाय दुर्द्दर्शनाय नन्दनाय तरुणीरत्नभूतमालतीदानं कथमुपक्रान्तम् आरब्धममात्येनेति शेषः। परमस्नेहपात्रमपत्यं प्रति पितुरीदृशव्यवहारो नितान्तनिष्ठुरतेति भावः। स्वयमेव सामान्यार्थान्तरन्यासेनेदं समर्थयितुमाह अथवेति। अथवा कुटिलनये कूटनीतौ निष्णातानि दक्षाणि मनांसि येषां तेषामपत्यस्नेहः कुतः अपि तु कुतोऽपि नास्तीत्यर्थः। कूटनीत्या किञ्चिदिष्टं साधयितुमयं व्यवहार इति भावः। त्वमपि नीतिज्ञेव तदभिधेहि तावत् काऽसौ कूटनीतिरित्याह इदमिति। तु किन्तु इदम् ऐदम्पर्य्यं तात्पर्य्यं, यत्। उतशब्दो वितर्के। नृपतेर्नर्म्मसचिवः विदूषकः स भवान् माननीयो नन्दनः सुतादानात् मित्रं समानेष्टानिष्टविवेकी सुहृत् भवतु।

(१) स हि मे, इति पाठभेदः।

माल। स्वगतम्। राआराहणं क्खु तादस्स गुरुअं न उण मालदी। (ल)

लव। जहा भअवदी आणवेदि तं तह ज्जेव (१) अस्सहा-

(ल) राजाराधनं खलु तातस्य गुरुकं, न पुनर्मालती।

(व) यथा भगवत्याज्ञापयति तत्तथैव। अन्यथा तस्मिन् वरे दुर्द्दर्शने अति-क्रान्तयौवने किमिति न विचारितममात्येन।

---

इति उक्तमेतत्, उत तर्कयामि। कन्यादानेन नन्दनो मित्रं भवन् राजन्यपि मम समधिकमाधिपत्यं घटयिष्यतीति कूटनीतिरिति भावः।

अत्र द्वितीयचरणगतसामान्येन प्रथमचरणगतविशेषसमर्थनादर्थान्तरन्यासोऽलङ्कारः न पुनर्द्वितीयचरणगतार्थोपपत्त्या मङ्गीर्येन: केनापि कविना तात्पर्य्यार्थे ऐदम्पर्य्य-शब्दस्याप्रयुक्तत्वादप्रयुक्तत्वदोषः, तथा यच्छब्दान्वितवाक्यस्य परपाठात् "न्यक्कारो ह्यय-मेव मे यदरयः" इत्यादिवत् वाक्यगतविधेयाविमर्शदोषश्च 'सुतादानान्मित्रं भवतु नर्तनर्म्मसचिवः, स, एतत्तात्पर्यं मम मनसि तर्कः पनरयम्' इति पाठेन तयोः समाधानं विधेयम्।

निशान्तेति "निनदीभ्यां स्नातेः कौशले" इति षत्वम्। अयमेव परः प्रधानो यस्य स इदम्परः, तस्य भाव ऐदम्पर्य्यम्। "उत नियतनर्कयो"रिति धरणिः।

शिखरिणी वृत्तम् ॥ ७ ॥

(ल) मालेति। राजाराधनं राज्ञः सन्तोषविधानम्। गुरुकं महत्। न पुनर्मालती गुरुकेत्यन्वयः। कथमन्यथा मालत्युपहारेण राजाराधनं क्रियेतेति भावः।

(व) लवेति। यथा भगवती आज्ञापयति नन्दनाय मालतीदाने यत् कारणमुपन्यस्यति तत्तथैव सत्यमित्यर्थः। दुर्द्दर्शने कुरूपे। विचारितं विवेचनं कृतम्।

(१) एव्वं जधा भअवदीए आणत्तं इति पाठान्तरम्।

तस्सिंव रे दुद्दंसणं अदिक्कन्दजोव्वणे किं त्ति ण विआरिदं अमच्चेण। (व)

माल। स्वगतम्। हा हदह्मि समुवत्थिदाणत्थवज्जपदणा मन्दभाइणी। (श)

लव। ता पसीद (१) भअवदि! परित्ताहि इमादो जीवन्त-(२)मरणादो पिअसहीं। तुह वि एसा दुहिदा ज्जेव। (ष)

काम। अयि सरले! किमत्रभवत्या मया शक्यं कर्त्तुम् (३) प्रभवति प्रायः कुमारीणां जनयिता दैवञ्च। यच्च किल

(श) हा हतास्मि समुपस्थितानर्थवज्रपतना मन्दभागिनी।

(ष) तत् प्रसीद! परित्रायस्व अस्मात् जीवन्मरणात् प्रियसखीम्। तवाऽप्येषा दुहितैव।

(श) मालेति। समुपस्थितम् अनर्थः अनिष्टं नन्दनेन पाणिग्रहणमेव वज्रपतनं यस्याः सा। हतास्मि दैवेनेति शेषः।

(ष) लवेति। जीवन्मरणात् जीवन्मरणतुल्यात् नन्दनेन पाणिग्रहणात्। दुहितैव आत्मजातुल्यैव। सुतरां यथेयं नन्दनहस्ते न निपतेत् कृपया स्नेहेन च तथा विधेहीति भाव.।

(स) कामेति। सरले! ऋजुबुद्धिके!। अस्य स्पष्टविषयस्याप्यनवगमादिति

(१) पसीददु भअवदी इत्यपि पाठः।

(२) जीविद इति पाठभेदः।

(३) किमत्र भगवत्या शक्यमितिमात्रः पाठः क्वचित्।

**कौशिकी शकुन्तला दुष्मन्तम्, अप्सराः पुरूरवसं चकमे उर्वशी-त्याख्यानविद आचक्षते, वासवदत्ता च पित्रा सञ्जयाय राज्ञे दत्तमात्मानमुदयनाय प्रायच्छदित्यादि, तदपि साहसिक-मित्यनुपदेष्टव्यकल्पं (१) सर्वथा (स)**

सख। अत्रभवत्या लोकोत्तरसौन्दर्यादिगुणशालितया माननीयाया मालत्याः कथं न भर्त्तारमित्याह प्रभवन्तीति। कुमारीणां कन्यानाम्। प्रभवति दानादिकं कर्त्तुं शक्नोति। गान्धर्वविवाहे तु कन्यावरावेव प्रभवत इति प्रदर्शनार्थं प्रायःपदमभिहितम्। कौशिकस्य विश्वामित्रस्यापत्यं स्त्रीति कौशिकी। पुरूरवसं पुरूरवोनामानं चन्द्रस्य पौत्रं राजानम्। चकमे जनयितारमनपेक्ष्य स्वयं स्वयमेव कामयते स्म। आख्यानविदः इतिहासज्ञाः। दत्तं दातुं प्रतिश्रुतम्। इत्यादि च इतिहासज्ञा आचक्षते इत्यन्वयः। साहसिकं साहसिकस्य कर्म्म इति ठक्। अनुपदेष्टव्यकल्पं त्वयि न उपदेश्यप्रायम्। लोकोपादानेन 'सामर्थ्यमस्ति चेत्तदा अस्मिन् मकरन्दे तादृशमेव साहसिकं त्वयाऽपि विधेयमिति ध्वन्यते। अत्र भर्त्तुर्विशेषेण साहसार्थोत्साहविधानात् भेदो नाम मुखाङ्गम् "भेदः प्रोत्साहना" इति दर्पणधृतप्राचीनलक्षणात्।

"स्त्रियां बहुष्वप्सरसः" इत्यमरः। "बहवश्च समाः सिकता वर्षाः सुमनसो जलौकसोऽप्सरसः" इति वामनः। "वार्योदशः अप्सरसो वर्षाः कृत्तिका मघाः। बहुत्वं चैकत्वभाजनतोऽथ विंशते"रिति चन्द्रगोमी च। एवं बहुत्वप्रमाणेषु सत्स्वपि "बहुल-च्छन्दसी"त्यादि सूत्रे "वा च जलौकसः समा अप्सरस" इति श्रीपतिना विकल्प-विधानात् "अप्सरा अप्सरसः" इत्युदाहृतत्वाच्च "अप्सरा व्यथित पार्श्वमगूर्य"मिति कल्पित्वाभ्युदयादौ प्रयोगदर्शनाच्च अत्र अप्सरा इत्येकवचनान्तप्रयोगेऽपि न च्युतसंस्कारता-दोष इति ध्येयम्।

(१) साहसकल्पमित्यनुपदेष्टव्यमेवेति भिन्नः पाठः।

राज्ञः प्रियाय सुहृदे सचिवाय कार्य्या-
द्दत्त्वात्मजं भवतु निर्वृतिमानमात्यः
दुर्द्दर्शनेन घटतामियमप्यनेन
धूमग्रहेण विमला शशिनः कलेव ॥ ८

मेनकायां विश्वामित्रेण जनिता कण्वेन प्रतिपालिता च शकुन्तला यौवने जनयितारं प्रतिपालकञ्चानपेक्ष्य दुष्मन्तायात्मानमर्पितवतीति महाभारतीयादिपर्ववार्त्ता । नर-नारायणोर्व्वेकदेशादुत्पन्ना उर्वशी तमनपेक्ष्य पुरूरवसं भेजे इति हरिवंशवार्त्ता ।

पुरा प्रद्योतनाम्नो राज्ञो वासवदत्ता नाम कन्या बभूव । तां च प्रद्योतः सञ्जयनाम्ने राज्ञे दातुं प्रतिश्रुतवान् । अत्रान्तरे वासवदत्ता स्वप्ने वत्सराजोदयनमात्मवल्लभत्वेनानुरक्ता तस्मै दूतमुखेन स्वाभिप्रायमाख्यातवती, ततः स उदयनस्तामपहृतवानिति कथासरित्सागरे द्रष्टव्यम् ।

राज्ञ इति । अमात्यो भूरिवसुः कार्य्यात् उद्देश्यविशेषसाधनानुरोधात् राज्ञः प्रियाय प्रीतिभाजनाय, सुहृदे सौहार्द्दशालिने, सचिवाय स्वसमानाय अमात्याय नन्दनाय आत्मजां तनयां मालतीं दत्त्वा निर्वृतिमान् वरविशेषार्पणोद्भवानन्दः सुस्थचित्तो भवतु । तथा इयमपि मालती दुर्दर्शनेन दुर्दर्शनादेवाशुभसूचकेन धूमग्रहेण धूमकेतुनाम्ना नक्षत्रविशेषेण सह विमला शशिनः कला इव दुर्द्दर्शनेन अतीतयौवनत्वात् कुत्सितत्वाच्च अप्रियदर्शनेन अनेन नन्दनेन सह घटतां संयुज्यताम् । दैववशादिति भावः ।

अत्र क्रियासमुच्चयोपमयोरङ्गाङ्गिभावेन सङ्करालङ्कारः । धूमकेतुसदृशेन नन्दनेन सह शशिकलातुल्याया मालत्या मेलनं सर्वेषामेवातीव दुःखकरमिति ध्वन्यते ।

प्रियसुहृदोर्यथाकथञ्चिद्भेदमाह भावप्रकाशे—

“सत्यवागार्जवरतिरुपकुर्वन् प्रियं वदन् ।
भजते यः स्वयं प्रीतिं प्रियः स परिकीर्त्तितः ॥

मालः । मासं स्वगतम् । हा ताद ! तुमं वि मम णाम एव्वं त्ति सव्वधा ( १ ) जिदं भोअतिह्णाए ( ह )

लव । चिराइदं भअवदोए । णं भणामि, अस्सत्थचित्तो ( २ ) महाभाओ माहवो त्ति । ( च )

काम । इदं (३) गम्यते । वत्से ! अनुजानीहि माम् । (क)

( ह ) हा तात ! त्वमपि मम नाम एवमिति, सर्वथा जितं भोगतृष्णया ।

( च ) चिरायितं भगवत्या । ननु भणामि, अस्वस्थचित्तो महाभागो माधव इति ।

---

दुःखे विपदि सम्मोहे कार्य्यकालात्ययेऽपि च ।

हितान्वेषी च हितकृद् यः, सुहृत् सोऽभिधीयते ॥"

धूमकेतोरशुभसूचकत्वमाह समयसंहितायां—"कम्पनतः प्रसन्नः केतुर्लोकस्याभावाय न शुभो विपरीतो विशेषतः शक्रचापसङ्काशः ।"

वसन्ततिलका वृत्तम् ॥ ८ ॥

( ह ) मालतीति । एवं भोषणजिष्णुरः । भोगतृष्णया, सुखलालसया जितं सर्वोत्कर्षेण स्थितं, तथा च येन हि भवान् केवलैहिकभोगतृष्णया परमस्नेहयोग्यामात्मजां नान्दनाय दत्त्वा हन्तुमर्हति, ततो मन्ये जगति भोगतृष्णैव सर्वेभ्यो बलवतीति भावः ।

( च ) अवेति । चिरायितम् एतदालोचनया विलम्बितम् । अस्वस्थचित्तः केनापि कारणेन अमुस्थमनाः । अतएव शीघ्रं तव गमनमुचितमिति भावः ।

( क ) कामेति । इदमिति गम्यतेक्रियाविशेषणम् । मालतीं प्रति 'वत्से'

---

( १ ) क्वचित् सर्वथेति पाठो नास्ति ।

( २ ) असुत्थसरीरो इति पाठान्तरम् ।

( ३ ) कुत्रचित् इदमिति पाठो न दृश्यते ।

लव। जनान्तिकम्। सहि! मालदि! संपदं भअवदीए सआसादो तस्स महानुभाअस्स उग्गमं जाणीमो। (ख)

माल। अपवार्य्य *। सहि! अत्थि मे कोदूहल्लं। (ग)

लव। प्रकाशम्। भअवदि! को एसो माहवो णाम, जस्सिं (१) भअवदी एव्वं सिणेहगुरुअं अत्ताणं धारेदि। (घ)

(ख) सखि! मालति! साम्प्रतं भगवत्याः सकाशात् तस्य महानुभावस्य उद्गमं जानीमः।

(ग) सखि! अस्ति मे कौतूहलम्।

(घ) भगवति! क एष माधवो नाम, यस्मिन् भगवती एवं स्नेहगुरुकमात्मानं धारयति।

इत्यायुक्तिः। अत्र साहित्यदर्पणमते भेदो नाम मुखसन्ध्यङ्गं "भेदः संहतिभेदन" मिति तल्लक्षणात्।

(ख) लवेति। तस्य माधवस्य। उद्गमम् उत्पत्तिं मालत्या आकाङ्क्षाजननाय उक्तिरियम्। जनान्तिकलक्षणमाह भरतः "उक्तस्याग्रवणं कार्य्यात् पार्श्वस्थैः स्याज्जनान्तिकम्।"

(ग) मालेति। कौतूहलमस्ति तत् श्रोतुमिति शेषः। अपवारितलक्षणं यथा दर्पणे "......तद्भवेदपवारितम्।

रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते।"

(घ) लवेति। एवम् ईदृशम्। स्नेहगुरुकं वात्सल्यभारवन्तम् आत्मानं मनः।

* जनान्तिकमिति पाठान्तरम्।

(१) जस्स इति पाठभेदः।

काम। अप्रस्ताविकी * महत्येषा कथा। (ङ)

लव। तधावि आचक्खदु(१) मे भअवदी पसादं करेदु। (च)

काम। श्रूयताम्। अस्ति विदर्भाधिपते-(२) रमात्यः समग्रधुर्य्य-(३) पुरुषप्रकाण्डचक्रचूडामणिर्देवरातो नाम। यमशेषभुवनमहनीयपुण्यमहिमानमात्मनः सातीर्थ्यात्(४) पितैव ते जानाति योऽसौ यादृशश्चेति। अपिच। (छ)

(च) तथापि आचष्टां मे भगवती, प्रसादं करोतु।

---

(ङ) कामेति। अप्रस्ताविकी अप्रासङ्गिकी महती च। सुतरां तदाख्यानस्यायमवसर इति भावः।

(च) लवेति। आचष्टां ब्रवीतु। तदाख्यानरूपमेव प्रसादमनुग्रहं करोत्वित्यर्थः।

(छ) कामेति। समग्राः समस्ताः, धुर्य्याः राजकार्य्यभारवाहिनो ये पुरुषाः, तेषां यत् प्रकाण्डचक्रं प्रशस्तसमूहः तस्य चूड़ामणिः सर्व्वश्रेष्ठ इत्यर्थः। अशेषभुवनेन भुवनस्थसर्व्वजनेनेत्यर्थः महनीयः पूजनीयः पुण्यमहिमा पवित्रमाहात्म्यं यस्य तम्। आत्मनः स्वस्य, सातीर्थ्यात् सतीर्थतया बहुदिनसंकृत वासात्, ते तव जानात्यात्या।

* अप्रस्ताविनी इत्यपि पाठः।

(१) आअक्खिअ इति भिन्नः पाठः।

(२) विदर्भराजस्य इति क्वचित् पाठः।

(३) क्वचित् धुर्य्यशब्दो नास्ति।

(४) सतीर्थ्यमिति पुस्तकान्तरे पाठः।

व्यतिकरितदिगन्ताः श्वेतमानैर्यशोभिः
सुकृतविलसितानां (१) स्थानमूर्जस्वलानाम् ।
अकलितमहिमानः * केतनं मङ्गलानां
कथमिव (२) भुवनेऽस्मिंस्तादृशा सम्भवन्ति ॥८॥

अहो त्वयाऽपि किञ्चित् विप्रियतामिति चेत्तवाह व्यतीति । श्वेतमानैः गुरुभूतैः यशोभिः व्यतिकरिताः सञ्जातव्यतिकराः परस्परं सम्मीलिता दिगन्ता येभ्यस्ते विभक्ता अपि दिगन्ता येषामविच्छिन्नशुक्लयशोभिः सम्मीलितीकृता इव वर्त्तन्ते इत्यर्थः । ऊर्जस्वलानां प्रबलानां सुकृतविलसितानां पुण्यविजृम्भणानां स्थानमास्पदम् अकलितमहिमानः सर्व्वैरेवापरिच्छिन्नप्रभावाः तथा मङ्गलानां समृद्धीनां केतनम् आश्रयः आधारीभूताः, तादृशाः देवरातसदृशाः पुरुषाः अस्मिन् भुवने मर्त्यलोके कथमिव सम्भवन्ति बहव उत्पद्यन्ते अपि तु कथमपि नेत्यर्थः । तथाच पुण्यवन्तो महापुरुषः स्वर्गात् प्रच्यवत इति श्रूयते, तथाच सति तादृशेको देवरातः द्वितीयो भूरिवसुः किन्त्वनयोस्तृतीयो नोपलभ्यते, तादृशा इति बहुवचनादयं भावः ।

अत्र देवरातस्य प्राधान्यप्रतिपादनकार्य्यं प्रति बहुकारणोपन्यासात् समुच्चयोऽलङ्कारः तथा व्यतिकरितदिगन्ता इत्यत्र इवाद्यभावात् भावाभिमानिनी प्रतीयमानाक्रियोत्प्रेक्षा च, अनयोरङ्गाङ्गिभावेन सङ्करः ।

व्यतिकर एषां सञ्जात इति व्यतिकरिताः तारकादित्वादितच् । श्वेतमानैरिति "श्वितावर्णे" इत्यस्य आनशि प्रयोगः । स्थानं केतनमिति "वेदाः प्रमाण"मित्यादिवत् विधेयत्वात् क्लीबत्वमेकत्वञ्चेति संक्षेपः । मालिनी वृत्तम् ॥ ८ ॥

(१) प्रकृतिविलसितानामयं पाठोऽपि दृश्यते ।

* अगणितमहिमान इति दाक्षिणात्यपुस्तके पाठः ।

(२) कथमपि इति पाठः क्वचित् ।

मालः। सहर्षम्। **सहि! तं क्खु भअवदीए गहीदणामहेअं सव्वदा तादो सुमरेदि। (ज)**

लव। **सहि! समं किल भअवदीए गुरुसआसादो (१) विज्जाहिगमो किदो त्ति तक्कालवेदिणो मन्तअन्ति। (झ)**

काम। **तत उदयगिरेरिवैक एव (२)**

**स्फुरितगुणद्युतिसुन्दरः कलावान्।**

(ज) सखि! तं खलु भगवत्या गृहीतनामधेयं सर्व्वदा तातः स्मरति।

(झ) सखि! समं किल भगवत्या गुरुसकाशाद्विद्याधिगमः कृत इति तत्कालवेदिनो मन्त्रयन्ते।

(ज) मालतीति। देवरातं भाविश्वशुरं मन्यमानया मालत्या गुरुत्वेन देवरातमित्यनुच्चार्य्य भगवत्या गृहीतनामधेयं तमित्युक्तमिति बोध्यम्। तथाच कर्म्मलोचनम्—

"आत्मनाम गुरोर्नाम नामातिकृपणस्य च।
प्राणान्तेऽपि न वक्तव्यं ज्येष्ठपत्नकलत्रयोः॥"

(झ) लवेति। समं ताभ्यां देवरातभूरिवसुभ्यां सह। गुरुसकाशात् एकस्यैव गुरोरन्तिकात्। मन्त्रयन्ते वदन्ति। अतएवामीषां परस्परं स्मरणं परस्परवृत्तान्तज्ञानञ्च सर्व्वथैव सम्भवपरमिति भावः।

प्रस्तुतामेव माधवोत्पत्तिमाह तत इति। उदयगिरेरिव ततो देवरातात् एक एव स्फुरिताः प्रकाशिता ये गुणा रूपादयस्तेषां द्युत्या कान्त्या सुन्दरः, कलावान् नृत्यगीतादिचतुःषष्टिकलाविद्याशाली। भविष्यत्यपि तादृशविद्याऽधिगमे अलौकिकरूपादिदर्शनेन महाभाग्यवत्तानुमानात् योग्यतया उत्पत्तिकाल एव कलावत्ताऽभिधानमिति

(१) भअवदीए गुरुसआसादो इति पाठः क्वचिन्नास्ति।

(२) एष इति पाठान्तरम्।

इह जगति महोत्सवस्य हेतु-
र्नयनवतामुदियाय बालचन्द्रः ॥ १० ॥

लव। जनान्तिकम् (१)। सहि! अवि णाम माहवो भवे?। (ञ)

काम। असौ विद्याधारः (२) शिशुरपि विनिर्गत्य भवनात्
इहायातः सम्प्रत्यविकलशरच्चन्द्रवदनः (३)।

---

(ञ) सखि! अपि नाम माधवो भवेत्।

बोध्यम्। पक्षे कलावान् सर्व्वाभिरेव षोड़शभिः कलाभिरन्वितः पूर्णः इत्यर्थः। तथा इह जगति नयनवतां चक्षुष्मतां प्राणिमात्रस्येति तात्पर्य्यम् महोत्सवस्य महतो नयनानन्दस्य हेतुः बालचन्द्र इवेति बालश्चन्द्रः चन्द्र इव कश्चित् शिशुः उदियाय उत्पन्नः।

अत्र पूर्णोपमाऽलङ्कारः। उदयगिरेरित्युपमाऽनुसारात् बालचन्द्र इवेत्युपमितसमास एव न्याय्यः, न तु बाल एव चन्द्र इति रूपकसमास इति तेन न रूपकम्. एक एवेत्यनेन स बालको मातापित्रोरात्मीयानाञ्चातीव प्रेमास्पदमिति ध्वनितम्।

पुष्पिताग्रा वृत्तम्॥ १०॥

(ञ) सखेति। माधवो भवेत्, भगवत्याऽभिधीयमानोऽसौ बालक इति शेषः।

असाविति। अविकलशरच्चन्द्रवदनः पूर्णशरच्चन्द्रतुल्यमुखः, शिशुरपि बालकोऽपि सन् विद्याधारः आन्वीक्षिकीभिन्नविद्यानामाश्रयः असौ देवरातनन्दनः भवनात् स्वगृहात् विनिर्गत्य सम्प्रति इह अस्मिन् नगरे आयातः आगतः। यस्य आलोकस्थाने दर्शन-

(१) अपवार्य्य इति पाठभेदः।

(२) विद्याशाली इति भिन्नः पाठः।

(३) शरच्चन्द्रमधुर इति पाठोऽपि दृश्यते।

यदालोकस्थाने भवति पुरमुन्मादतरलैः
कटाक्षैर्नारीणां कुवलयितवातायनमिव ॥ ११ ॥

तदत्र च बालसुहृदा मकरन्देन सह विद्यामान्वीक्षिकीमधीते। स एष माधवो नाम (१)। (ट)

प्रदेशे यत्र स्थित्वा सोऽवलोकयते तस्मिन् स्थाने इत्यर्थः पुरं नगरं कर्त्तृ उन्मादतरलैः मदवलोकनव्यग्रतावशात् चञ्चलैः नारीणां कटाक्षैः अपाङ्गदृष्टिपातैः कुवलयितानि जातकुवलयानि वातायनानि गवाक्षजालानि यत्र तत् तथोक्तमिव भवति। यस्यावलोकनाय गवाक्षद्वारि समागतानां विहितकटाक्षाणां रमणीनां नयनानि प्रस्फुटितकुवलयानीव प्रतीयन्त इति सरलार्थः।

अत्र शरच्चन्द्रवदन इति लुप्तोपमा, तथा कुवलयितवातायनमिवेति वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा, अनयोर्मिथो नैरपेक्ष्यात् संसृष्टिः। उत्प्रेक्षया च तस्य लोकोत्तरसौन्दर्यं व्यज्यते। कुवलयशब्देन नीलोत्पलस्याप्यभिधानान्न विशेषे अविशेषाख्यदोषः। तथा च शब्दकल्पद्रुमः "कुवलयं (क्ली)...नीलोत्पलम्।"

शिखरिणी वृत्तम् ॥ ११ ॥

(ट) तदत्रेति। "वेदार्थस्य अनु पश्चादीक्षणमन्वीक्षा, सा प्रयोजनमस्या इति ठक्" इति रघुनाथः। आन्वीक्षिकीं विद्यां न्यायवैशेषिकादितर्कशास्त्रम्। "आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयो"रित्यमरः। अत्र माधवं प्रति मालत्याः स्वाभिमतविशेषानुरागसाधनाय बहुविधकीर्त्तनात्। "अस्ति विदर्भाधिपते"रित्यादि "स एष माधवो नाम" इत्यन्तसन्दर्भे सिद्धिर्नाम नाट्यलक्षणम्। तथा च दर्पणे—

"बहूनां कीर्त्तनं सिद्धिरभिप्रेतार्थसिद्धये।"

(१) विद्यामान्वीक्षिकीमधिगच्छति, स एव माधवो नामेति, इति पाठान्तरम्।

माल। सानन्दं जनान्तिकम्। **सहि! लवङ्गिए! सुदं महाउलप्पसूदो महाभाओ त्ति (१)। (ठ)**

लव। जनान्तिकम्। **सहि! कुदो वा महोदहिं वज्जिय पारिजादस्स उग्गमो त्ति। (ड)**

नेपथ्ये शङ्खध्वनिः।

काम। **अहो! कालातिपातः। सम्प्रति हि। (ढ)**

**क्षिपन्निद्रामुद्रां मदनकलहच्छेदसुलभा-(२)**
**मवाप्तोत्कण्ठानां विहगमिथुनानां प्रथमतः।**

---

(ठ) सखि! लवङ्गिके! श्रुतं महाकुलप्रसूतो महाभाग इति।

(ड) सखि! कुतो वा महोदधिं वर्जयित्वा पारिजातस्य उद्गम इति।

---

(ठ) मालेति। महाभागो माधव इत्यर्थः। अत्र पुनर्माधवं प्रति विशेषानुरागोदयात् उद्भेदो नाम मुखसन्धेरङ्गम्। यथा दर्पणे—

"बीजार्थस्य प्ररोहः स्यादुद्भेदः।"

(ड) लवेति। महोदधिं वर्जयित्वा विद्यमानात् कुतोऽन्यस्मात् पदार्थादित्यर्थः, तेन नैककर्तृकत्वहानिरिति भाव्यम्। यथा महोदधेरन्यत्र पारिजातस्योत्पत्तिर्न सम्भवति तथा देवरातादन्यस्मान्माधवस्याप्युत्पत्तिर्न सम्भवतीति भावः। अतएवात्र समात् प्रस्तुतात् प्रस्तुतस्य समस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः।

(ढ) कामेति। कालातिपातः विशालकथाप्रसङ्गादतीतोऽपि कालो नावगत इत्यर्थः। नायमुचितः कृत इति भावः।

क्षिपन्निति। असौ श्रूयमाणः, अनिभृतः अगुप्तः विशालभावेन प्रकाशित

---

(१) सहि! सुदं तुए इतिमात्रः पाठः क्वचित्।

(२) सुभगामिति पाठभेदः।

दधानः सौधानामलघुषु निकुञ्जेषु घनता-
मसौ सन्ध्याशङ्खध्वनिरनिभृतः खे विचरति ॥ १२ ॥

वत्से ! सुखं स्थीयताम् (१)। इत्युत्तिष्ठति। (ग)

इत्यर्थः सन्ध्याशङ्खध्वनिः प्रतिदिननियतः सन्ध्यासूचकः शङ्खनिनादः प्रथमत आदौ अवाप्ता प्राप्ता उत्कण्ठा भाविविरहावधारणादौत्सुक्यं यैस्तेषां विहगमिथुनानां चक्रवाकदम्पतीनां मदनकलहच्छेदेन कन्दर्पजनितोद्दामव्यापारपरिसमाप्त्या सुरतपरिसमापनेनेत्यर्थः सुलभाम् अनायासलभ्यां निद्रामुद्रां स्वापसङ्कोचं निद्रया स्तब्धीभावमिति तात्पर्य्यं क्षिपन् रजनीसान्निध्यज्ञापनेन भाविदुःसहविरहसूचनात् अपसारयन्। तथा अलघुषु विशालेषु सौधानां राजसदनानां निकुञ्जेषु अभ्यन्तरेषु घनतां प्रतिध्वनिना गाढतां विशालतामित्यर्थः दधानो वहन् खे गगने विचरति प्रसरति। सुतरामिदानीमस्माकमितो गमनमावश्यकमिति भावः।

अत्रैकस्य शङ्खध्वनेः क्रमेण चक्रवाकदम्पतीकर्णेषु, सौधाभ्यन्तरेषु गगने च विचरणात् पर्य्यायनामाऽलङ्कारः। तथा चक्रवाकमिथुनानामिति विशेषे वक्तव्ये विहगमिथुनानामिति सामान्योक्तेः विशेषेऽविशेषाख्यदोषः, स च 'रथाङ्गद्वन्द्वानां प्रथमसमुदितोत्कण्ठमनसा'मिति पाठेन समाधेयः। निकुञ्जशब्देन लतादिपिहितोदराभिधानेऽपि तद्वत् सौधाभ्यन्तरस्य नानाविधवस्तुविन्यासेन निविड़ताप्रतिपादनप्रयोजनवशेन तत्र लक्षणाश्रयणात् न नेयार्थत्वदोषः।

विहगमिथुनानामिति व्यक्तिभेदाद्बहुवचनम्। शिखरिणीवृत्तम् ॥ १२ ॥

(१) तदुत्तिष्ठाम इति पाठान्तरम्।

माल। अपवार्य्य। कधं उवहारीकिदह्मि राइणो तादेण, राअाराहणं क्खु तादस्स गुरुअं ण उण मालदो। माधव हा ताद! तुमं वि णाम मम एव्वं त्ति सव्वधा जिदं भोअतिह्णाए। सानन्दम्। कधं महाउलप्पभवो वि (१) सो महाणुभाओ * सुट्ठु भणिदं (२) पिअसहीए "कुदो वा महोदहिं वज्जिअ पारिजादस्स उग्गमो"त्ति। अवि णाम तं पुणोवि पेक्खिस्सं। (त)

लव। अवलोइदे! इदो एहि, एदिणा सोवाणेण ओदरह्म (३)। (थ)

---

(त) कथमुपहारीकृतास्मि राजलोकेन, राजाराधनं खलु तातस्य गुरुकं न पुनर्मालती। हा तात! त्वमपि नाम ममेवमिति सर्वथा जितं भोगतृष्णया। कथं महाकुलप्रभवोऽपि स महानुभावः, सुष्ठु भणितं प्रियसख्या "कुतो वा महोदधिं वर्जयित्वा पारिजातस्य उद्गम" इति। अपि नाम तं पुनरपि प्रेक्षिष्ये।

(थ) अवलोकिते! इत एहि, एतेन सोपानेनावतराव:।

(त) मालेति। महाकुलप्रभवोऽपि न केवलमशेषविद्याकल्पलावण्यशालीत्यपिरर्थः। स महानुभावो माधवः। तं माधवम्।

(थ) लवेति। इतः अस्यां दिशि। अव केवलावलोकितायाः सम्बोधनेन तया सार्द्धं लवङ्गिकायाः कोऽपि निभृतालापो व्यज्यते।

(१) महाउलप्पसूदो सो इति पाठभेदः।

* महाभाओ इत्यपि पाठः।

(२) सुभणिदं इति कुत्रचित् पाठः।

(३) अवलोइदे! इदो एदिणा संजमणेण ओदरह्म इति पुस्तकान्तरे पाठः।

काम । अपवार्य्य । **अवलोकिते ! (१) साधु सम्प्रति मया तटस्थयैव मालतीं प्रति निसृष्टार्थदूतीकृत्यस्य (२) लघूकृतो भारः । तथाहि (३) । (ट)**

**वरेऽन्यस्मिन् द्वेषः (४) पितरि विचिकित्सा च जनिता**
**पुरावृत्तोद्गारैरपि च कथिता कार्य्यपदवी ।**

(ट) कामेति । तटस्थयैव उदासीनया सत्यैव उदासीनभावमवलम्ब्यैव न तु माधवपक्षपातलेशमपि प्रकाश्य इत्येवशब्दार्थः । अन्यथा यदि संशयीतेति भावः । निसृष्टार्थदूतीकृत्यस्य "निसृष्टार्थदूतीकल्पमलङ्घितव्य" इति यत् प्राक् प्रतिपादितं तादृशदूतीकार्य्यस्य । लघूकृतः माधवं प्रति मालत्या गाढानुरागोत्कर्षजननादल्पीकृतः बहुतर एव कर्त्तव्यांशः सुसम्पादितः, इदानीमल्पमात्रमवशिष्यत इति भावः । निसृष्टार्थदूतीत्वमनुक्तम् । आशङ्कितकर्त्तव्यांशसम्पादनमद्भुतनाभिधानपूर्वकमवशिष्टं कर्त्तव्यांशमभिधातुमाह तथाहीति ।

वर इति । अन्यस्मिन् वरे नन्दने द्वेषो जनितः मालत्या वैतृष्ण्यमुत्पादितं, तथा पितरि जनके भूरिवसौ विचिकित्सा च 'भो गतालसमायाः प्रबलतया मत्सुखशान्तिनैरपेक्ष्येण नन्दनाय मां प्रतिपादयेत्, किंवा तदयोचितवात्सल्यात् मम सुखशान्तिमपेक्षन्त्यैव माधवाय मां समर्पयेत्' इत्यं संशयश्च । जनिता मया कौशलेन उत्पादिता । अपि च तया, पुरावृत्तानां शकुन्तलोर्वश्यादिवृत्तान्तानाम् उद्गारैः प्रकाशैः कार्य्यपदवी कर्त्तव्यमार्गः पितृनैरपेक्ष्येणाभिमतवराय स्वयमात्मदानानुकूला रीतिरित्यर्थः कथिता

( १ ) क्वचित् 'अवलोकिते' इति सम्बोधनं नास्ति ।
( २ ) निसृष्टार्थदूत्यस्य, निसृष्टार्थदूतीवृत्तस्य, इति पाठभेदौ
( ३ ) कृत इति पाठान्तरम् ।
( ४ ) दोष इत्यपि पाठः ।



स्तुतं माहाभाग्यं (१) यदभिजनतो यच्च गुणतः
प्रसङ्गाद्वत्सस्येत्यथ खलु विधेयः (२) परिचयः ॥१३॥

मयेति शेषः । प्रसङ्गात् अन्यप्रसङ्गात् नवाङ्किकाया जिज्ञासाप्रसङ्गेनेत्यर्थः वत्सस्य माधवस्य माहाभाग्यं महाभाग्यवत्त्वं स्तुतं प्रशंसितम् । प्रसङ्गं विना अकस्मात्तन्महाभाग्यप्रशंसायां हृदि मम माधवपक्षपातमाशङ्केतेति भावः । किन्तन्माहाभाग्यमित्याह यदिति । अभिजनतो वंशतः महामात्यदेवरातादुत्पत्तेर्हेतोरित्यर्थः यन्माहाभाग्यं, तथा गुणतो रूपलावण्यविद्यादिगुणवशात् यच्च माहाभाग्यं वत्सस्य वर्त्तत इति शेषः ; कृतमभिधाय इदानीमवशिष्टं कर्त्तव्यांशमाह अथेति । अथ इति इतः परं, परिचयः समागमवशात उभयोरेव मालतीमाधवयोर्दृष्टगतया परस्परविशेषज्ञानं, विधेयः अस्माभिः कर्त्तव्यः । एतन्मात्रमवशिष्यत इति भावः ।

अत्र भारलघूकरणकार्य्यं प्रति बहुतरकारणोपन्यासात् समुच्चयोऽलङ्कारः । यच्छब्दद्वयस्योत्तरवाक्यगतत्वेन तच्छब्दैनैरपेक्ष्यात् 'स्तुतं माहाभाग्य'मिति वाक्यस्य प्रथममभिधानेऽपि न विधेयाविमर्शदोषः । अत्र प्रकृतसमागमाय उद्यमाभिधानात् करणं नाम मुखसन्धेरङ्गम् । तथा च साहित्यदर्पणे—

"...करणं पुनः । प्रकृतार्थसमारम्भः ।"

अनेन कामन्दक्या वात्स्यायनकामशास्त्राभिज्ञत्वं प्रतिपादितम् । तथाच वात्स्यायनकामशास्त्रे कन्यासम्प्रयुक्तकाधिकरणे निसृष्टार्थदूतीकर्त्तव्यनिरूपणप्रकरणे सूत्राणि—

"अन्यवरपितृणाञ्च दोषानभिप्रायविरुद्धान् प्रतिपादयेत् ।" "मातापित्रोश्च गुणानभिज्ञतामनपेक्षतां लुब्धतां शठतां चपलतां बान्धवानाम् ।" "याश्चान्या अपि समान-

( १ ) तन्माहात्म्यमिति पाठोऽपि दृश्यते ।

( २ ) विधिविधेय इति कुत्रचित् पाठः ।

इति निष्क्रान्ताः सर्वे । (ध)

# इति मालतीमाधवे (१) द्वितीयोऽङ्कः ॥

---

जातीयाः कन्याः शकुन्तलाद्याः स्वरुच्या भर्त्तारं प्राप्य मोदन्त स्म ताश्चास्याः प्रदर्श्ययत् ।"
शिखरिणी वृत्तम् ॥ १२ ॥

(ध) इतीति । जना इत्यध्याहार्य्यस्य विशेषणत्वात् सर्व्वे इति पुंस्त्वस्य नानुपपत्तिः ।

इति श्रीहरिदाससिद्धान्तवागीशविरचितायां मालतीमाधवटीकायां
भावमनोहरायां द्वितीयाङ्कविवरणं समाप्तम् ॥ ० ॥

---

(१) धवलगृहो नाम इत्यधिकः पाठः क्वचित् ।

# तृतीयोऽङ्कः ।



ततः प्रविशति बुद्धरक्षिता ।

बुद्ध । परिक्रम्य । आकाशे । **अवलोइदे ! अवि जाणासि कहिं भअवदोत्ति (१) । (क)**

---

(क) अवलोकिते ! अपि जानासि कस्मिन् भगवतीति ।

---

(क) बुद्धेति । परिक्रम्य कियन्तं पादक्षेपं कृत्वा । आकाशे शून्ये वदतीति शेषः । आकाशभाषितलक्षणं यथा त्रिपुरारिधृतम् ।

"अप्रविष्टैः सहालापो भवेदाकाशभाषितम् ।"

"इतःप्रभृति चतुर्थाङ्कसमाप्तिपर्य्यन्तः प्रतिमुखसन्धिः । यथा साहित्यदर्पणे—

फलप्रधानोपायस्य मुखसन्धिनिवेशिनः ।

लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तत् ॥"

तथाच "तत्सर्व्वथा सङ्गमनाय यत्नः प्राणव्ययेनापि मया विधेय" इत्यनेन प्रयत्नावस्था, "तदास्यतां, किञ्चिदाख्यातुकामास्मि" इत्यादिना "यदि तद्विषयोऽनुरागबन्ध" इत्यन्तेन लवङ्गिकया कामन्दक्या च मालतीमाधवयोर्मदनविकारवर्णनात् तयोः परस्परसमागमरूपफलविषयकप्रधानोपायभूतानुरागस्य लक्ष्यता, पुनश्च तस्य नन्दनविवाहनिश्चयेनालक्ष्यता, तथा "आविर्भवन्ती"त्यादिवक्ष्यमाणश्लोकेन विन्दुर्नामार्थप्रकृतिश्च निरूपितेति तत्र तत्रानुसन्धेयम् । प्रयत्नावस्थादीनां लक्षणानि तु तत्र तत्र वक्ष्यन्ते । एवमस्य विलासादीनि त्रयोदशाङ्गानि यथास्थानं सन्निवेश्य सलक्षणानि प्रदर्शयिष्यन्ते ।

---

(१) क्वचित् 'त्ति इति पाठो नास्ति ।'

प्रविश्य अवलोकिता। बुद्धरक्खिदे ! किं पमुज्झासि।* कोवि अ कालो भअवदीए पिण्डवादवेलं वज्जिअ (१) मालदीं अणुवत्तमाणाए। (ख)

बुद्ध। हुं, तुमं उण कहिं पत्थिदासि। (ग)

अव। अहं क्खु भअवदीए माहवसआसं अणुप्पेसिदा। सन्दिट्ठं अ तस्स, जधा सङ्करघरसम्बद्धं कुसुमाअरं णाम (२)

(ख) बुद्धरक्षिते ! किं प्रमुग्धासि। कोऽपि च कालो भगवत्याः पिण्डपातवेलां वर्ज्जयित्वा मालतीमनुवर्त्तमानायाः।

(ग) हुं, त्वं पुनः कुत्र प्रस्थितासि।

(घ) अहं खलु भगवत्या माधवसकाशमनुप्रेषिता। सन्दिष्टञ्च तस्य यथा शङ्करगृहसम्बद्धं कुसुमाकरं नाम उद्यानं गत्वा कुञ्जकनिकुञ्जपर्य्यन्त-रक्ताशोकगहने तिष्ठ इति। गतश्च तत्र माधवः।

(ख) प्रविश्येति। प्रमुग्धासि मोहं प्राप्तासि। कथमन्यथा सम्यगवगत-विषयेऽपि पुनर्जिज्ञासेति भावः। तथापि तत्रायहाद्व्रवीमीत्यभिप्रायेणाह कोऽपि चेति। पिण्डपातवेलां निर्द्दिष्टमाहारसमयं, वर्ज्जयित्वा अतिक्रम्य, मालतीमनुवर्त्त-मानायाः कौतस्त्य मालतीसेवानुसरन्त्याः। कोऽपि च अनिर्व्वचनीयः अतिदीर्घ-इत्यर्थः, कालः समयः। इदानीं गच्छतीति शेषः। इदानीमपि मालत्यर्थमेव गतेति भावः।

(घ) अवेति। शङ्करगृहसम्बद्धं प्रतिष्ठितशिववाटीसंलग्नम्। कुञ्जकः

* विस्मृतासीति पाठान्तरम्।

(१) जो कोवि कालो भअवदीए पिण्डपारणवेलं विसज्जिअ इति पाठभेदः।

(२) सङ्करउरसंवन्धि कुसुमाउरुज्जाणं इत्यति पाठः।

उज्जाणं गदुअ कुसुमअ-णिउञ्ज-(१) पेरन्तरत्तासोअगहणे चिट्ठन्ति । गदो अ तत्थ माहवो । (घ)

बुद्ध । (२) किंत्ति तहिं माहवो अनुप्पेसिदो ? । (ङ)

अव । अज्ज कसणचउद्दसीत्ति (३) भअवदीए (४) समं मालदी सङ्करघरं (५) गमिस्सदि । तदो एव्वं किल सोहग्गं वड्ढदित्ति देवदाराहणणिमित्तं सहत्थकुसुमावअअं उद्दिसिअ

---

(ङ) किमिति तस्मिन् माधवोऽनुप्रेषितः ?

(च) अद्य कृष्णचतुर्द्दशीति भगवत्या समं मालती शङ्करगृहं गमिष्यति । तत एवं किल सौभाग्यं वर्द्धत इति देवताराधननिमित्तं स्वहस्तकुसुमावचयमुद्दिश्य

---

(पुं) पुष्पवृक्षविशेषः । कुजा इति ख्यात" इति शब्दकल्पद्रुमः । तस्य यो निकुञ्जः लताद्यावृतस्थानं तस्य पर्य्यन्ते शेषभागे यत् रक्ताशोकानां गहनं वनं तत्र ।

(ङ) बुद्धेति । किमिति किमर्थं केन हेतुना । तस्मिन् कुसुमाकरोद्याने ।

(च) अद्येति । इति हेतोः । "शिवस्योक्ता चतुर्द्दशी"ति स्मृते श्चतुर्द्दश्यां शिवार्च्चनमतीवप्रशस्तमित्यभिप्रायः । भगवत्या कामन्दक्या । ततः परं ! एवं क्रियेत्यमनुष्ठिते खलु, स्वहस्तावचितैः कुसुमैः शिवार्च्चने कृते इत्यर्थः । इति

---

(१) कुञ्जणिउञ्ज इति पाठोऽपि दृश्यते ।

(२) अवलोइदे इत्यधिकः क्वचित् पाठः ।

(३) तत्थ इत्यपि क्वचिदधिकः पाठः ।

(४) अणणीए इति पाठभेदः ।

(५) सङ्करउरं इति पाठान्तरम् ।

लवङ्गिआदुदीआं मालदीं भअवदी ज्जेव (१) कुसुमाअरुज्जाणं आणइस्सदि। तदो अण्णोण्णदंसणं भविस्सदित्ति (२)। तुमं उण कहिं पत्थिदा ?। (च)

बुद्ध। अहं क्खु सङ्करघरं (३) ज्जेव पात्थिदाए पिअसहीए मदअन्तिआए आमन्तिदा। तदो भअवदीए पादवन्दणं कदुअ तहिं ज्जेव गच्छामि। (छ)

अव। तुमं क्खु भअवदीए जस्सिं पओअणे णिउत्ता, तत्थ को वुत्तन्दो ?। (ज)

---

लवङ्गिकाद्वितीयां मालतीं भगवत्येव कुसुमाकरोद्यानमानेष्यति। ततः अन्योन्य दर्शनं भविष्यतीति। त्वं पुनः कस्मिन् प्रस्थिता ?

(छ) अहं खलु शङ्करगृहमेव प्रस्थितया प्रियसख्या मदयन्तिकया आमन्त्रिता। ततो भगवत्याः पादवन्दनं कृत्वा तस्मिन्नेव गच्छामि।

(ज) त्वं खलु भगवत्या यस्मिन् प्रयोजने नियुक्ता, तत्र को वृत्तान्तः ?

---

हत्यं बोधयित्वेत्यर्थः। "कुशपुष्पसमिदादि ब्राह्मणः स्वयमाहरे" दिति शास्त्रात् ब्राह्मणपदस्य चोपलक्षणत्वादिति भावः। अन्योन्यदर्शनं मालतीमाधवयोः परस्पर-साक्षात्कारः भविष्यति, इति हेतो र्माधवस्त्वयानुप्रेषित इत्यर्थः।

(ज) अवेति। यस्मिन् प्रयोजने मदयन्तिकामकरन्दयोः संयोजनरूपे कार्य्ये।

(१) तं एव इति भिन्नः पाठः।

(२) भोदुत्ति इति पाठोपि दृश्यते।

(३) सङ्करउरं कुत्रचिदीदृशः पाठः।

बुद्ध। मए क्खु भअवदीए समादेसेण तासु तासु विस्सम्भकधासु ईरिसो तारिसो त्ति मअरन्दस्स उअरि पिअसहीए परोक्खाणुराओ तहा दूरं आरोविदो जहा से मणोरहो (१) अवि णाम तं पेक्खामि त्ति। (झ)

अव। साहु, बुद्धरक्खिदे! साहु (२)। (ञ)

(झ) मया खलु भगवत्याः समादेशेन तासु तासु विस्रम्भकथासु ईदृश-स्तादृश इति मकरन्दस्योपरि प्रियसख्याः परोक्षानुरागस्तथा दूरमारोपितः, यथाऽस्या मनोरथः, अपि नाम तं प्रेक्षे इति।

(ञ) साधु, बुद्धरक्षिते साधु।

(झ) बुद्धेति। विस्रम्भकथासु निभृतप्रणयालापेषु। ईदृशः शौर्य्यविद्यादि विशेषगुणवान्, तादृशः मदन इव रूपलावण्यवान् मकरन्दः। इति इत्थं वचनोपन्यासैरित्यर्थः। प्रियसख्याः मदयन्तिकायाः। दूरमारोपितः वृद्धिं नीतः। अस्याः मदयन्तिकायाः, मनोरथ इत्यनभिलाषः अभूदिति शेषः। कं इदृगसावित्याह अपीति तं मकरन्दं। प्रेक्षे साक्षादवलोकयामि। 'साक्षान्मकरन्दमवलोकयितुमर्हामि किं' इति मनोरथोऽभूदिति तात्पर्य्यम्। तस्मिन्न तावान् वृत्तान्तो जात इति भावः।

(ञ) अवेति। साधु अनुष्ठितमिति शेषः।

(१) पिअसहीए मदअन्तिआए दूरं आरोविदो परक्खाणुराओ एसो अ से मणोरहो इत्यपि पाठः।

(२) साहु, बुद्धरक्खिदे! साहु। एहि गच्छम्ह। इति पाठान्तरम्।

बुद्ध। एहि गच्छाम (१)। (ट)

इति निष्क्रान्ते (२)।

## प्रवेशकः (ठ)।

प्रविश्य कामन्दकी (३)।

तथा विनयनम्राऽपि मया मालत्युपायतः।
नीता कतिपयाहोभिः (४) सखीविस्रम्भसेव्यताम् ॥१॥

---

(ट) एहि गच्छावः।

---

(ठ) प्रवेशक इति। तल्लक्षणमुक्तम्। अत्र "गतश्च तव माधव" इत्यादिना वृत्तकथांशानां निदर्शनम्, मालती शङ्करगृहं गमिष्यती"त्यादिना च वर्त्तिष्यमाणकथांशानां निदर्शनं बोद्धव्यम्।

तथेति। मया, तथा तेन प्रकारेण सातिशयभावेनेत्यर्थः, विनयेन गुरुजनोचित-भक्तियुक्तेन कुलकन्यायोग्यस्वभावेन नम्राऽपि ममान्तिके अवनताऽपि मालती, उपायतः कैश्चिदुपायैः कतिपयाहोभिः अल्पैरेव दिवसैः सखीविस्रम्भसेव्यतां सखीवदात्मनि विश्वासव्यवहारयोग्यतां नीता प्रापिता।

तथाच मालती पूर्वं गुरुसमीप इव मम समीपे भक्तिश्रद्धातिशयेनापरकुलकन्ये-केव परमसवनतासीत्, इदानीन्तु मया कवरीबन्धन कुचद्वयपत्रलेखानिर्म्माण-रहस्याला-पादिभिरुपायैः लवङ्गिकाप्रभृत्यन्यतमसखीजन इव मयि विश्वासव्यवहारकारिणी विहितेति सरलार्थः। तदियमिदानीमवश्यमेव मदुपदिष्टपथं गमिष्यतीति भावः।

---

(१) कुत्रचिदयं पाठो नास्ति।

(२) इति परिक्रम्य निष्क्रान्ते इत्यपि पाठः।

(३) ततः प्रविशति कामन्दकी इतिमात्रः पाठः क्वचित्।

(४) कतिपयाहेन इति पुस्तकान्तरे पाठः।

सम्प्रति हि (१)।

व्रजति विरहे वैचित्त्यं नः, प्रसीदति सन्निधौ,
रहसि रमते, प्रीत्या देयं (२) ददात्यनुवर्त्तते।
गमनसमये कण्ठे लग्ना निरुध्य निरुध्य मां
सपदि शपथैः प्रत्यावृत्तिं प्रणम्य याचते॥ २॥

अत्र सखीविस्रम्भसत्यतामिति लुप्तोपमाऽलङ्कारः। कतिपयाहोभिरिति समासान्त-विधेरनित्यतया न अदन्तता॥ १॥

सख्यामिवात्मनि विश्वासव्यवहारमेव विवृणोति व्रजतीति। नोऽस्माकं विरहे वैचित्यं दौर्मनस्यं व्रजति, तथा सन्निधौ प्रसीदति निर्वृतचित्ता भवति, रहसि निर्जन-स्थाने, रमते मया सह नर्म्मालापादिना क्रीड़ति, तथा प्रीत्या देयं प्रणयेन दातव्यं कर्पूरादि वस्तु, ददाति मह्यमुपहरति, अनुवर्त्तते प्रियसम्भाषणासनदानादिना ममानु-गत्यं करोति। तथा गमनसमये ततः प्रस्थानकाले कण्ठे लग्ना भुजाभ्यां मम गल-देशमवलम्ब्य मां निरुध्य निरुध्य अतिशयेनानुरुध्य प्रणम्य च शपथैः 'यदि त्वमिदानीमेव नागच्छसि तदा मम मस्तकं खादसि' इत्यादिभिः शपथवाक्यैः सपदि तत्क्षणात् प्रत्या-वृत्तिं मम प्रत्यागमनं याचते प्रार्थयति।

अत्र व्रजतीत्यादीनामनेकक्रियाणां कण्ठे लग्नेत्यनेनोपस्थितमालतीरूपैक कर्त्तृकारक-त्वात् दीपकमलङ्कारः, तथा सख्यामिवात्मनि विश्वासव्यवहारप्रतिपादनकार्य्यं प्रति बहु-तरकारणोपन्यासात् समुच्चयश्च, अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

हरिणीवृत्तम्॥ २॥

---

(१) क्वचित् 'हि' शब्दोनास्ति।

(२) वाच्यमिति, दायमिति च पाठभेदौ।

इदञ्च तव साधीयः प्रत्याशानिबन्धनम् ( १ )।
शाकुन्तलादीनितिहासवादा न
प्रस्तावितानन्यपरैर्वचोभिः।
श्रुत्वा मदुत्सङ्गनिवेशिताङ्गी
चिराय चिन्तास्तिमितत्वमेति ॥ ३ ॥
तदद्य माधवसमक्षमुत्तरमुपक्रमिष्ये ( २ )। नेपथ्याभिमुख-मवलोक्य ( ३ )।

---

( ड ) इदञ्चेति। किञ्चेति चार्थः। इदं अनुपदमुच्यमानं, अत्र मालती-माधवयोः समागमविषये, साधीयो दृढतरं प्रत्याशायाः सत्यमेवासौ मदुपदिष्टमाच-रिष्यतीत्येवंरूपाया आशाया, निबन्धनं हेतुः।

किन्तदित्याह शाकुन्तलादीनिति। अन्यो मालतीभिन्नो जनः, परस्तात्पर्य्यविषयो येषां तैरन्यपरैः, मुखतोऽन्योद्देशेन प्रवृत्तवदवभासमानैः वास्तविकपक्षे तु स्वोद्देशेनैव प्रवृत्तैरित्यर्थः ; वचोभिर्वाक्यैः प्रस्तावितान् मया प्रसञ्जितान् शाकुन्तलादीन् शकुन्तला-वृत्तान्तादिकान् इतिहासवादान् पुरावृत्तवाक्यानि श्रुत्वा मदुत्सङ्गे ममाङ्के निवेशितानि स्थापितानि अङ्गानि भुजयुगलग्रीवामस्तकानि यया सा तथोक्ता मालती, चिराय बहु-कालं यावत्, चिन्तया 'कथं मया शकुन्तलादिवदाचरितव्यम्, कोवा तत्रोपायः' इत्यादि भावनया स्तिमितत्वं स्तब्धीभावं एति प्राप्नोति ! इदमेव लक्षणं मम प्रत्याशायाः साधीयो निबन्धनमिति भावः।

इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजातिर्वृत्तम्।
"अनन्तरोदीरित लक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः।
इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम॥" इति लक्षणात् ॥३॥

( १ ) सम्प्रत्याशानिबन्धनमिति पाठभेदः।
( २ ) उपक्रमिष्याम इति पाठान्तरम्।
( ३ ) नेपथ्याभिमुखमितिमात्रः पाठः क्वचित्।

**वत्से ! इत इतः ( ढ )**

ततः प्रविशति मालती लवङ्गिका च ।

माल । स्वगतम् : 'कधं उवहारीकिदह्मि' इत्यादि पूर्वोक्तं पठति ( १ ) ।

लव । **सहि ! एसो क्खु महुर-महुरसाद्द-(२) मञ्जरी-कवलण-केलि कल-कोइलउल कोलाहलाकुलिद-सहआर- सिहरुड्डोण-चडुल-चञ्चरीअ--णिअर व्वदिअरुद्दलिद-दल-कराल-चम्पआहि-**

( ण ) सखि ! एष खलु मधुर-मधुरसार्द्र-मञ्जरी-कवलन-केलिकल-कोकिल-कुल--कोलाहलाकुलित--सहकारशिखरोड्डीन--चटुल--चञ्चरीकनिकर--व्यतिकरोद्दलित-दल-कराल चम्पकाधिवास-मनोहरः, मराल-मांसल-जघन-परिणाहोद्वहन-मन्थरोरुभर

( ढ ) तदयेति । तत् तस्मात अनया मदुपदिष्टस्यावश्यकर्त्तव्यत्वावधारणात इतीतिरित्यर्थः । माधवस्य समक्षं प्रत्यक्षं उत्तरं परकर्त्तव्यं उपक्रमिष्यं आरप्सं । "प्रोपाभ्यामारम्भे" इत्यात्मनेपदम् । नेपथ्याभिमुखमवलोक्य नेपथ्याभिमुखाव-लोकनेन मालत्यागच्छतीति दृष्ट्वेत्यर्थः । वत्से ! मालति ! इत इत आगम्यता-मिति शेषः ।

( ण ) सखेति । मारुतस्य विशेषणद्वयम् । मधुरः सुखादः, यो मधुरसः पुष्पनिर्य्यासद्रवः, तेन आर्द्रा क्लिन्ना या मञ्जरी चूतवल्लरी तस्याः कवलनं ग्रसनं सुखार्पणमेव केलिः क्रीड़ा, तया कलो मधुरास्फुटः यः कोकिलकुलस्य पिकसमूहस्य कोलाहलः कलकलः, तेन आकुलितात् व्याप्तात् सहकारशिखरात् चूतपल्लवात् उड्डीनः तासेनोत्पतितः, चटुलः चञ्चलः, यश्चञ्चरीकनिकरः मधुकरसमूहः, तस्य व्यतिकरेण विमर्द्देन उद्दलितानि विकासितानि दलानि पत्राणि येषां तानि,

( १ ) 'कधं उवहारीकिदह्मि' इत्यादिः "अविणाम तं पुणोवि पेक्खिस्सं" इत्यन्तः सकल एव सन्दर्भः कस्मिंश्चित् पुस्तके लिखितः ।

( २ ) महुरसोल्लोल्ल...इति पाठभेदः ।

वास-मणोहरो, मराल-मंसल-जहण (१) परिणाहुव्वहण-मन्थरोरुभर-विसट्ठुल-क्खलिद-चलण-संचलणोवणोद (२) सेअ-सीअर-सुहाविन्दुज्जल-(३)मुद्ध मुह-चन्द चन्दणाअमाण-सीअल-प्फंसो, तुमं परिस्सअइ कुसुमाअरुज्जाणमारुदो। ता सहि! इदो परिक्कमाम्ह (४)। (ग) इति परिक्रम्य प्रविशतः।

विसंष्ठुल-स्खलित-चरण-सञ्चरणोपनीत-स्वेद-शीकर-सुधा-बिन्दूज्ज्वल-मुग्ध-मुखचन्द्र-चन्दनायमान-शीतलस्पर्शः, त्वां परिष्वजति कुसुमाकरोद्यानमारुतः। तत् सखि! इतः परिक्रमावः।

अपसारितकर्णिकाभावानीत्यर्थः अत एव करालानि दन्तुराणि असमानानि यानि चम्पकानि चाम्पेयकुसुमानि तेषामधिवासेन सौरभेण मनोहरः चित्ताह्लादकरः। तथा मरालो मसृणः, मांसलः स्थूलः, यो जघनपरिणाहः कट्या विस्तृतः पश्चाद्भागः, तस्य उद्वहनेन धारणेन मन्थरं मन्दं तथोरुभरेण विसंष्ठुलं विषमं तथा, स्खलितं इतः कम्प्यं ततः क्लान्तमित्यर्थः यत् चरणसञ्चरणं तत्र पादन्यासः, तेन उपनीता उपस्थापिता जनिताः स्वेदशीकराः घर्मबिन्दव एव सुधाबिन्दवः विशदतया अमृतकणाः तैरुज्ज्वलो मनोहरः यो मुखचन्द्रः तव वदनचन्द्रमाः, तत्र चन्दनायमानः चन्दनवदाचरन् चन्दनतुल्य इत्यर्थः। तथा शीतलस्पर्शो यस्य स तथोक्तः। एतेन शैत्यसौगन्ध्यमान्द्यरूप-गुणत्रयवैशिष्ट्यं वायोः सूचितम्। परिष्वजति आलिङ्गति स्पृशतीत्यर्थः। तत्तस्मात् इतः अस्मिन् प्रदेशे परिक्रमावः कियन्तं पादविक्षेपं कुर्वः। ईदृशसुशोभनवायुसेवनार्थमिति भावः।

(१) मरालजहण इति पाठान्तरम्।

(२) चलणसंचारसमिणममणोवणोद इति भिन्नः पाठः।

(३) बिन्दु इज्जल इति पुस्तकान्तरे पाठः।

(४) ता पविसह्म इत्यपि पाठः।

ततः प्रविशति माधवः।

माध। सहर्षम्। हन्त! परागता भगवती। इयं हि मम(त)

आविर्भवन्ती प्रथमं प्रियायाः
सोच्छ्वासमन्तःकरणं करोति।
सन्तापदग्धस्य शिखण्डियूनो (१)
वृष्टेः पुरस्तादचिरप्रभेव ॥४॥

"चटुलः (पुं) चञ्चलः"। "चञ्चरीकः (पुं) भ्रमरः।" "मरालः।—मयूरी त्रि"। "मांसलः (त्रि) स्थूलः।" इति च शब्दकल्पद्रुमः।

मन्ये, भवभूतिः किल दुरूहशब्दानामीदृशसमासराशिविन्यासेन सामाजिकानां मानसरसशोषणमेव निर्म्माणनैपुण्यं मन्यते स्म।

(त) माधेति। हन्त हर्षे। परागता उपस्थिता। भगवती कामन्दकी इयं कामन्दकी।

आविरिति। सन्तापदग्धस्य ग्रीष्मतापतप्तस्य शिखण्डियूनः तरुणमयूरस्य वृष्टेः पुरस्तात् अग्रतः आविर्भवन्ती अचिरप्रभा विद्युदिव इयं कामन्दकी-प्रियाया मालत्याः प्रथमं पूर्वं आविर्भवन्ती प्रादुर्भवन्ती सती सन्तापदग्धस्य विरहानलतापतप्तस्य मम अन्तःकरणं मनः पुनर्दर्शननैराश्यान्मृतप्रायमिति भावः, सोच्छ्वासं सजीवं प्रफुल्लमित्यर्थः करोति।

यथा वृष्ट्यागमं सूचयन्ती विद्युत् ग्रीष्मतापतप्तस्य मयूरस्य अन्तःकरणमुच्छ्वसितं करोति, तथा प्रादुर्भवन्ती खल्वियं कामन्दकी मालत्यागमनं सूचयन्ती तद्विरहानलतप्तस्य ममान्तःकरणमुच्छ्वसितं करोतीति सरलार्थः।

अत्रोपमाऽलङ्कारः। तेन च मयूरस्य वृष्टिरिव ममापि मालती तापानन्तरं नितान्तशान्तिदायिनीत्युपमा व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः। यौवनकाले

(१) निदाघसन्तप्तशिखण्डियून इति पाठान्तरम्।

दृष्ट्वा (१)। अये ! लवङ्गिकाद्वितीया मालत्यपि। (थ)

आश्चर्य्यमुत्पलदृशो वदनामलेन्दु-
सान्निध्यतो मम मुहुर्जड़िमानमेत्य।
जात्येन (२) चन्द्रमणिनेव महीधरस्य
सन्धार्य्यते द्रवमयो मनसा विकारः (३) ॥५॥

सर्वेषामेव विशेषोत्तापो भवतीति युवशब्देन विशेषोत्तापद्योतनात् न अपुष्टार्थत्व-दोषः। द्वितीयाङ्के नन्दनाय मालतीदान-वृत्तान्तेन प्रकृतकाव्यार्थविच्छेदे प्राप्ते अत्र पुनर्माधवस्य मालतीदर्शनाभिलाषस्तस्याविच्छेदहेतुरिति विन्दुर्नामार्थप्रकृतिः। तथा च साहित्यदर्पणे—

"अवान्तरार्थविच्छेदे विन्दुरच्छेदकारणम्।"

इन्द्रवज्रा वृत्तम् ॥ ४ ॥

(थ) दृष्ट्वेति। दृष्ट्वा लवङ्गिकया सह मालतीमागच्छन्तीमवलोक्य। अये इति वलवदानन्दजनितसम्भ्रमे। न केवलं कामन्दकी मालत्यपि आविर्भूता इत्यपेरर्थः। एतेनानन्दातिशयो व्यज्यते।

आश्चर्य्यमिति। महीधरस्य अचलस्येव धीरस्येत्यर्थः मम मनसा उत्पलदृशः पद्मलोचनाया मालत्याः, वदनं अमलेन्दुः निर्म्मलचन्द्र इव तस्य सान्निध्यतः सामीप्या-द्धेतोः मुहुः सातिशयं जड़िमानं जड़त्वं कर्त्तव्यविमूढत्वमिति यावत् जलप्रकृतिक-त्वञ्च एत्य प्राप्य, जातौ साधुरिति जात्यः, तेन उत्कृष्टेनेत्यर्थः चन्द्रमणिना चन्द्र-कान्तमणिनेव द्रवमयः तरलतारूपः आनन्देन विगलिततास्वरूप इत्यर्थः, पक्षे

(१) दिष्ट्या इति पाठभेदः।

(२) आद्येन इत्यपि पाठो दृश्यते।

(३) मनसो विकार इति भिन्नः पाठः।

सम्प्रति रमणीयतरा मालती। (८)

ज्वलयति मनोभवाग्निं मदयति हृदयं, कृतार्थयति चक्षुः।
परिमृदितचम्पकावलि विलासलुलितालसै (१) रङ्गैः॥ ६॥

जलमयः, विकारः अन्यथाभावः सम्भाव्यते अवलम्ब्यते इत्याश्चर्य्यम्। अचलवज्जीवस्यापि मम मनसो यत् द्रवीभावधारणं तदाश्चर्य्यमिवेति भावः।

अत्र उत्पलदृश इति लुप्तोपमा, तथा चन्द्रमणिनेव इत्युपमानुसारात् 'वदनामलेन्दु' इत्यत्रापि लुप्तोपमैव न तु रूपकमित्युपमावदं, तथा अन्यत् मनसो द्रवमयत्वं अन्यच्च चन्द्रकान्तमणेरिति भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः।

उत्कृष्टचन्द्रकान्तमणेः प्रचुरजलनिर्गमसूचनार्थं जात्येनेत्युक्तम्। काकाक्षिगोलकन्यायेन चन्द्रकान्तमणिनेवेति इवशब्दस्य उभयत्राप्यन्वयः प्रत्येतव्यः। वसन्ततिलका वृत्तम्॥ ५॥

(८) सम्प्रतीति। रमणीयतरा पूर्वावस्थातः समधिकसौन्दर्य्यशालिनी। मद्विरहेणैव ईषत्कृशत्वात् श्यामत्वाच्चेति भावः।

ज्वलयतीति। परिमृदिता मातिशयपवनान्दोलनादिना म्लाना, या चम्पकावलिः चाम्पेयकुसुममाला, तस्या विलास इव विलासो विभ्रमो येषां तानि, तथा लुलितानि मदनेनान्दोलितानि अलसानि कार्य्येष्वपटूनि च तै स्तथोक्तैः, अङ्गैः, मनोभवाग्निं मम मदनानलं ज्वलयति उद्दीपयति, हृदयं मम मनः, मदयति आनन्दपरवशं करोति, तथा चक्षुः मम नयनं कृतार्थयति द्रष्टव्यचरमसीमादर्शनेन चरितार्थं करोति। सर्वत्र मालतीति पूर्वगद्यस्थं कर्त्तृपदं बोध्यम्। इदानीमीदृशोऽस्याः सन्दर्शनेन नितरामाकुलोऽस्मीति भावः।

अत्र ज्वलयतीत्याद्यनेकक्रियाणामेककर्त्तृकारकत्वाद्दीपकमलङ्कारः, तथा

(१) ललितालसैरिति पाठान्तरम्।

माल। सहि! इमस्सिं कुज्जअणिउञ्जे (१) कुसुमाइं अवचिणुह्म। (ध)

माध। प्रथमप्रियावचनसंश्रवस्फुरत्- (२)
पुलकेन सम्प्रति मयाऽवलम्बाते (३)।
घनराजि-नूतनपयः-समुच्छ्रण-
क्षणबद्ध कुट्मल-कदम्बडम्बरः ॥७॥

---

(ध) सखि! अस्मिन् कुब्जकनिकुञ्जे कुसुमान्यवचिनुवः।

---

मनोभवाग्निमिति निरङ्गं केवलरूपकं द्वितीयार्द्धे लुप्तोपमार्चल्यं तेषामङ्गाङ्गिभावेन सङ्करः।

"प्रेङ्खोलितस्खलितौ लुलितान्दोलितावपि" इति शब्दकल्पद्रुमः।

ननु "अन्तर्निविष्टकर्म्मकधातोरकर्म्मकत्व"मिति नियमात् कथं कृतार्थयतीत्यस्य चक्षुरिति कर्म्मपदमिति चेत्, सत्यं, अकर्म्मकत्वमिति कर्म्मपदेन विधेयकर्म्मैव विवक्षितं, तेन हलयति हलिमिति विधेयकर्म्म न स्यात्। उद्देश्यं कर्म्म तु भवत्येव, तेन चक्षुरित्यस्य उद्देश्यीभूतकर्म्मत्वान्न दोषः। अन्यत्रापीदृशः प्रयोगो दृश्यते यथा शाकुन्तले "अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि।" "कथं न सा मद्गिरमाविलामपि स्वसेविनीमेव पवित्रयिष्यति!" इति नैषधेऽपि। आर्य्या जातिः ॥६॥

(ध) मालेति। कुब्जकः पुष्पवृक्षविशेषः 'कुजा' इति ख्यातः।

प्रथमेति। सम्प्रति, प्रथम आदिमः यः प्रियाया मालत्या वचनसंश्रवः 'सहि' इत्यादिवाक्यश्रवनं तेन स्फुरन्तः प्रकाशमानाः पुलका रोमाञ्चा यस्य तेन तथोक्तेन

(१) कुञ्जनिउञ्जे इति क्वचित् पाठः।

(२) संस्रवस्फुरत् इति पाठभेदः।

(३) विडम्ब्यते इति पाठोऽपि दृश्यते।

लव । सहि ! एव्वं करेह्म । (न)

पुष्पावचयं नाटयतः ।

माध । अपरिमियाश्चर्य्यमाचार्य्यकं भगवत्याः । (प)

---

(न) सखि ! एवं कुर्वः ।

मया घनराजे मेघमालाया यानि नूतनपयांसि नवजलानि तैः समुच्चयच्चगो सेचनसमये प्रथमवर्षाकाल इत्यर्थः बद्धानि धृतानि कुट्मलानि मुकुलानि येन तस्य तथोक्तस्य कदम्बस्य नीपवृक्षस्य डम्बरः सादृश्यं अवलम्बात आश्रीयते ।

अत्रार्थो उपमाऽलङ्कारः छेकानुप्रासश्चेत्यनयोः संसृष्टिः । आश्चर्यमित्यादिष्विषु श्लोकेषु माधवस्य रतिभोगार्थायाः समीहायाः प्रतीते विलासो नाम प्रतिमुखसन्धेरङ्गम् । तथाच दर्पणे—

"समीहा रतिभोगार्था विलास इति कथ्यते ।"

एतच्चतुर्थचरणमविकलमुत्तररामचरित-षष्ठाऽङ्केऽपि रामेण पठितम् ।

मञ्जुभाषिणी वृत्तम् ॥७॥

(प) माधेति । भगवत्याः कामन्दकायाः, आचार्य्यस्य शिक्षयितुर्भाव इत्याचार्य्यकं उपदेशकौशलमित्यर्थः अपरिमेयानि अस्माभिरियत्तया परिच्छेत्तुमशक्यानि आश्चर्य्याणि यत्र तादृशम् । तथा च येनाहं, नन्दनाय प्रदाने राज्ञ एवानुरोधात् पुनरसम्भवदर्शनामेवास्मिन्नेकाकिनीं कुसुमचयनाय समुन्नमितभुजयुगलतया स्खलितवसनत्वात् स्पष्टलक्ष्यमाणकुचयुगलां निःशङ्कमवलोकयितुमर्हामीति भावः ।

अत्र पूर्वं दृष्टाया पश्चाददर्शनं गताया मालत्याः पुनरनुसर्पणात् परिसर्पो नाम प्रतिमुखसन्धेरङ्गम् । तथा च दशरूपके—

"परिसर्पस्तु वीजस्य दृष्टनष्टानुसर्पणम् ।" "दृष्टनष्टानुसरणं परिसर्पश्च कथ्यते" इति साहित्यदर्पणलक्षणमपि सङ्गच्छत इति द्रष्टव्यम् ।

माल। **सहि ! इदो वि अस्सिं अवचिणुह्म (१)। (फ)**

काम। मालतीं परिष्वज्य। **अयि ! विरम,(२) निःसहासि जाता। तथाहि (३)। (व)**

**स्खलयति वचनं ते, स्रंसयत्यङ्गमङ्गं, (४)**
**जनयति मुखचन्द्रोद्भासिनः स्वेदविन्दून्।**
**मुकुलयति च नेत्रे सर्व्वथा सुभ्रु ! खेद-**
**स्त्वयि विलसति तुल्यं वल्लभालोकनेन॥ ८॥**

(फ) सखि ! इतोऽपि अन्यस्मिन् अवचिनुवः।

---

(फ) मालेति। इतोऽपि स्थानात्, अन्यस्मिन् स्थाने, अवचिनुवः कुसुमानीति शेषः।

(ब) कामेति। विरम पुष्पचयनादित्यर्थः, येन निःसहासि श्रमेण पुनरनुन्मत्तासि।

स्खलयतीति। हे सुभ्रु ! शोभनभ्रूयुगले ! खेदः कुसुमचयनजनितः परिश्रमः ते तव वचनं स्खलयति गद्गदं करोति, अङ्गमङ्गं सर्व्वानवयवान् हस्तादीन् स्रंसयति अवसादयति, मुखचन्द्रोद्भासिनः मुखचन्द्रस्य कान्तिविशेषजननशीलान् स्वेदविन्दून् घर्म्मलवान् जनयति, तथा नेत्रे चक्षुषी मुकुलयति निमीलयति च ; अत एव वल्लभस्य दयितस्य आलोकनेन दर्शनेन तुल्यं समानं वल्लभदर्शनमिवेत्यर्थः त्वयि सर्व्वथा विलसति प्रवर्त्तते प्रभावं प्रकटयतीत्यर्थः। तथा च वल्लभावलोकनमपि कर्त्तृ, युवत्या वचनं गद्गदं

(१) सहि ! जेण इदो वि अवरस्सिं अवचिणुह्म इति पाठोऽपि दृश्यते।

(२) विरम विरम इति द्विरुक्तिः क्वचित्।

(३) क्वचित् तथाहीति नास्ति।

(४) संश्रयत्यङ्गमङ्गमिति पाठान्तरम।

मालती लज्जां नाटयति। (१)

लव। सोहणं भअवदीए आणत्तं। (भ)

---

(भ) शोभनं भगवत्या आज्ञप्तम्।

करोति, अङ्गावसादं जनयति मुखचन्द्रे घर्म्मविन्दूनुत्पादयति, निरतिशयानन्दजननात् नेत्रे च निमीलयति। तवायं पुष्पचयनजनितः श्रमोऽपि तथैव दृश्यते, सुतरामितः पुष्पचयनात् विरमेति भावः।

अत्र आर्थी पूर्णोपमाऽलङ्कारः स्खलयतीत्यादीनामनेकक्रियाणां खेद इत्येककर्त्तृ-कारकत्वाद्दीपकं वाक्यार्थहेतुकं काव्यलिङ्गञ्च, इत्येतेषामेकाश्रयानुप्रवेशरूपः सङ्करः। लताकुञ्जान्तरितमाधवकर्त्तृकावलोकनं पुष्पचयनश्रमश्च, एतौ युगपत्त्वयि वर्त्तेते इति वस्तु व्यज्यते। सुभ्रु इत्यत्र भ्रूशब्दस्य उवङ्स्थानीयत्वेन "नेयङुवङ्स्थानावस्त्री"ति नदी-संज्ञाप्रतिषेधात् "अम्बार्थनद्योर्ह्रस्व" इति ह्रस्वत्वप्रसङ्गाभावेऽपि "अप्राणिजातेश्चारज्ज्वा-दीना"मित्यत्र भाष्यकारेण अलाबूः कर्कन्धूरित्युदाहरणात् "ऊकारादप्यूङ् प्रकृते-रि"ति वामनोक्तेश्च ऊकाराप्यूङन्तत्वाङ्गीकारात् नदीत्वेन ह्रस्वत्वम्। कलापमते तु नदीत्वादेव ह्रस्वत्वम्। तथा च "ह्रस्वश्च ङवति" इत्यत्र, टीकायां दुर्गः "स्त्रीवचने तु सर्व्वत्र नदीसंज्ञाऽस्त्येव"। कुमारसम्भवेऽपि, यथा—"विमानना सुभ्रु! कुतः पितुर्गृहे"। अन्यत्रापि "सुभ्रु! त्वं कुपितेत्यपास्तमशनं, त्यक्ता कथा योषिताम्" इत्यादि। "जाता सुभ्रु! मनोरमे। तदवशे"ति श्रीपतिनाऽपि लिखितम्। अत-एवात्र न च्युतसंस्कारतादोषः।

अत्र नर्म्म नाम सन्ध्यङ्गम् "परिहासवचो नर्म्म" इति दर्पणलक्षणात्।

मालिनी वृत्तम्॥ ८॥

(भ) लवेति। शोभनं साधु युक्तियुक्तम्। आज्ञप्तम्। उक्तम्। मयाऽपि श्रमस्य लक्ष्यमाणत्वादस्याः पुष्पचयनादिदानीं विराम एव सङ्कल्पित इति भावः। उक्त-मिति वक्तव्ये गौरवद्योतनाय आज्ञप्तमित्युक्तमिति बोध्यम्।

---

(१) लज्जते इत्यपि पाठः।

माध। हृदयङ्गमः परिहासः। (म)

काम। तदास्यताम्। किञ्चिदाख्येयमाख्यातुकामास्मि। (य)

सर्वा उपविशन्ति।

काम। मालत्याश्चिवुकमुन्नमय्य। शृणु विचित्रमिदं सुभगे!। (र)

माल। अवहितास्मि। (ल)

काम। अस्ति तावदेकदा प्रसङ्गतः कथित एव मया माधवाभिधानः कुमारः, यस्त्वमिव मामकीनस्य (१) मनसो द्वितीयं निबन्धनम् (२)। (व)

---

(ल) अवहितास्मि।

---

(म) माधेति। परिहासः स्वलयतीत्यादि परिहासवाक्यं हृदयङ्गमो मनोहरः। वल्लभावलोकन-परिश्रमयोः समानानुभावयोजनादिति भावः।

(य) कामेति। तत्तस्मात्, आस्यतां उपविश्यतां, आख्येयं वक्तव्यम् आख्यातुकामा वक्तुकामा।

(र) कामेति। विचित्रम् आश्चर्य्यम्। सुभगे सौभाग्यवति!।

(ल) मालेति। अवहितास्मि श्रोतुं दत्तावधानाऽस्मि। अत्र नर्म्मद्युतिर्नाम प्रतिमुखसन्धेरङ्गम्। यथा दर्पणे

"...द्युतिस्तु परिहासजा, नर्म्मद्युतिः॥"

(व) कामेति। माधवाभिधानः माधवनामा, कुमारः अविवाहितावस्थः कश्चित्। मामकीनस्य मदीयस्य। द्वितीयं त्वमेकं यो द्वितीयमित्यर्थः। निबध्यते स्नेहेनावरुध्यते यस्मिन्निति निबन्धनं आवद्धीकरणस्थानं परमस्नेहपात्रमित्यर्थः। "ममेदमित्यर्थे;—णीनेकौ लुकि अस्मद कत्वान्मदादेशे अस्य च ममकादेशे इड्डौ मामकीन"मिति दुर्गादासः।

(१) मामकीयस्येति पाठान्तरम्। (२) बन्धनमिति पाठभेदः।

लव। सुमरामो। (अ)

काम। स खलु मदनोद्यानयात्रादिवसात् प्रभृति दुर्म्मनायमानः परवानिव शरीरोपतापेन। (ब)

यदिन्दावानन्दं, प्रणयिनि जने वा न भजते,
व्यनक्त्यन्तस्तापं, तदयमतिधीरोऽपि विषमम्।
प्रियङ्गुश्यामाङ्गप्रकृतिरपि चापाण्डु मधुरं
वपुः क्षामं क्षामं वहति, रमणीयश्च भवति॥ ८॥

लव। एदं (१) वि तस्सिं अवसरे भअवदीं तुवराअन्तीए अवलोइदाए उदीरिदं आसि, जधा अस्सत्थसरीरो माहवोत्ति। (स)

(अ) स्मरामः।

(स) एतदपि तस्मिन्नवसरे भगवतीं त्वरयन्त्या अवलोकितया उदीरितमासीत्, यथा अस्वस्थशरीरो माधव इति।

---

(अ) लवेति। स्मरामः भवत्याभिहितं तं माधववृत्तान्तमिति शेषः।

(ब) कामेति। दुर्म्मनायमानः दुःखितमना इवाचरन्। शरीरोपतापेन करणेन परवानिव पराधीन इव संवृत्त इति शेषः। स्वभावानुसारेण किमपि कर्त्तुं न शक्नोतीति भावः।

विशेषयन्नाह यदिन्दाविति। यद् यस्मात् इन्दौ चन्द्रे प्रणयिनि जने वा सातिशयप्रेमभाजने जने वा विषये दृष्टे सति वा आनन्दं न भजते न प्राप्नोति, आनन्दानुभवलक्षणं न प्रकाशयतीत्यर्थः, तत्तस्मात् अतिधीरोऽपि सातिशयधैर्य्यशीलोऽपि, अयं माधवः, विषमं दुःसहं, अन्तस्तापं व्यनक्ति प्रकटयति। चन्द्रं प्रणयिजनं वा

(१) एवमिति क्वचित् पाठः।

काम। यावदहमशृणवं मालत्येवास्य मन्मथोन्मादहेतुरिति। ममापि स एव निश्चयः। कुतः (१)। (ह)

अनुभवं वदनेन्दुरुपागम-
न्नियत मेष (२) यदस्य महात्मनः।
क्षुभितमुत्कलिकातरलं मनः
पय इव स्तिमितस्य महोदधेः॥ १०॥

विलोक्य आनन्दाप्रकाश एव मनस्तापलक्षणमित्यर्थः। प्रियङ्गुवत् फलिनीफलवत् श्यामा श्यामवर्णा अङ्गप्रकृतिः देहाकृति र्यस्य सः, तथाविधोऽपि सन् आपाण्डु विरहेण ईषत्क्षुतवर्णं अतएव मधुरं मनोहरं चामं चामं अतीवक्षीणं वपुः शरीरं वहति बिभर्त्ति। नचेयं रोगजनिता पाण्डुता क्षीणता वेत्याह रमणीयश्चेति कान्तिमावावशेषेण सुन्दराकृति र्भवतीत्यर्थः।

अत्र इन्दुप्रणयिजनदर्शनरूपहेतौ सत्यपि आनन्दरूपतत्फलाभावात् विशेषोक्तिरलङ्कारः, तथा आपाततः प्रियङ्गु श्यामाशब्दयोः पुनरुक्तताप्रतीतावपि परत्र प्रियङ्गुवत् श्यामवर्णेतिपर्य्यवसानात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासः, तथा तत्रैव चरणे विरोधाभासश्चेति मिथोनैरपेक्ष्यादेषां संसृष्टिः।

"श्यामातु महिलाह्वया। लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली" त्यमरः। शिखरिणी वृत्तम्॥ ९॥

(ह) कामेति। अश्रृणवं श्रोतपरम्परया श्रुतवती। ननु जनरवः कदाचित् मिथ्यापि भवेदित्याह ममापीति। तादृशनिश्चये हेतुमभिधातुमाह कुत इति।

अनुभवमिति। एष इति मालत्याश्चिबुकं धृत्वा निर्द्दिशति। यद् यस्मात् एष वदनेन्दुः मालत्या मुखचन्द्रः अस्य महात्मनः धीरस्वभावस्य माधवस्य अनुभवं चाक्षुषप्रत्यक्षगोचरतां उपागमत् प्राप्तवान्। अतएव मनो माधवस्य चित्तं स्तिमितस्य निश्चलस्य

(१) कुत इति क्वचिन्नास्ति। (२) नियतमेवेति पाठान्तरम्।

माध । अहो ! उपन्यासशुद्धिः । अहो ! मम च महत्त्वारोपणे यत्नः । अथवा । (च)

शास्त्रेषु निष्ठा (१) सहजश्च बोधः
प्रागल्भ्यमभ्यस्तगुणा च वाणी ।
कालावबोधः (२) प्रतिभानवत्त्व-
मेते गुणाः कामदुघाः क्रियासु ॥ ११ ॥

---

महोदधेः समुद्रस्य पयो जलमिव, उत्कलिकातरलं उत्कण्ठया कल्लोलैश्च चञ्चलं तथा क्षुभितं अधीरं उद्वेलितञ्च अभूदिति शेषः । इति नियतं निश्चितम् । माधवसदृशधीरप्रकृतेः स्वसदृशतरुणीदर्शनमन्तरेणाधीरता न सम्भवति, विशेषतश्च 'मालतीमेवावलोक्य माधवोऽधीरो जात' इति जनरवश्च श्रुतः सुतरां तव मुखचन्द्रावलोकनमेव माधवस्योन्मादहेतुरित्यनुमानेन निश्चीयत इति भावः ।

अत एवात उपमाऽलङ्कारकृतविच्छित्तिवशात् माधवमनःक्षोभचञ्चलतारूपकार्य्येण मालतीमुखदर्शनरूपकारणानुमितेरनुमानाऽलङ्कारः । "जानीमहेऽस्या हृदि सारमात्या" इत्यादौ जानीमह इत्यादिवत् नियतमित्यनुमानद्योतकम् ।

द्रुतविलम्बितं वृत्तं "द्रुतविलम्बितमाह नभौ भरा"विति लक्षणात् ॥ १० ॥

(च) माधेति । उपन्यासस्य वाग्विन्यासस्य शुद्धिः पूर्वापरविरोधादिदोषराहित्यम् । महत्त्वारोपणे अस्य महात्मन इत्यनेन अवास्तविकप्राधान्यस्थापने ।

शास्त्रेष्विति । शास्त्रेषु निष्ठा स्थितिः नीत्यादिसकलशास्त्रपर्य्यालोचनमित्यर्थः, सहजः स्वाभाविको बोधः ज्ञानञ्च अनधिगतदुरूहविषयेष्वपि स्वभावत एव प्रवेशशालिनी सूक्ष्मबुद्धिः, प्रागल्भ्यं चातुर्य्यं, अभ्यस्ता असकृदुपात्ता गुणाः प्रसादमाधुर्य्यादयो यया सा

(१) शास्त्रे प्रतिष्ठा इत्यपि पाठः ।

(२) कालानुरोध इति पाठोऽपि दृश्यते ।

काम। अत (१) स्तेन जीवितादुद्विजमानेन दुष्करमपि न किञ्चिन्न क्रियते। असो हि, (२) (क)

धत्ते चक्षु र्मुकुलिनि रणत्कोकिले वालचूते
मार्गे गात्रं क्षिपति वकुलामोदगर्भस्य वायोः।

वाणी वाक्यञ्च। कालावबोधः समयज्ञानं अवसरप्रतीचेति यावत्, तथा प्रतिभानवत्त्वं प्रतिभाशालित्वं एते गुणा धर्म्माः क्रियासु कर्त्तुमभिलषितेषु कार्य्यमात्रेषु कामदुघाः अभिलाषपूरकाः। अतएव सततमेभिर्गुणैरन्विताया भगवत्या उपन्यासयुक्तिप्रभृतिकं नाश्चर्य्यमिति भावः।

अत्राप्रस्तुतात् क्रियासामान्यात् प्रस्तुतविशेषदूतीक्रियाप्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः, गुणसमुच्चयश्च, इत्यनयोरङ्गाङ्गिभावेन सङ्करः। तेन च मदभिलषितो मालतीसमागमोऽवश्यमेव सम्पत्स्यत इति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

कामं दुहन्तीति कामदुघाः "दुहेः को घश्चे"ति कप्रत्ययो घश्चान्तादेशः।

इन्द्रवज्रा वृत्तम् ॥ ११ ॥

(क) कामेति। अतः मनसोधीरत्वात्, तेन माधवेन जीवितात् जीवनात् उद्विजमानेन बिभ्यता। दुष्करमपि किञ्चित् कार्य्यं न क्रियत इति न अपि तु क्रियत एव। तथा च मम जीवनमेवेदानीमीदृशदुःसहदुःखकारणमिति मत्वा जीवनाद्विभ्यता तत् परित्यागेच्छया दुष्करमपि कार्य्यं क्रियत इति सरलार्थः। हि तथाहि, असौ माधवः।

धत्त इति। मुकुलिनि कोरकिते, रणन्तः शब्दायमानाः कोकिला यत्र तादृशे वालचूते वालत्वेन स्निग्धत्वान्मनोहरे सहकारतरौ चक्षुः सत्यवे बहुशो धत्ते स्थापयति। कोकिलरूपमदनसैन्यकोलाहलविशिष्टादस्मात् सहकारान्निर्गतेन कोरकरूपमदनवाणेन

(१) यत इति पाठभेदः।

(२) तथाहीति पाठान्तरम्।

दावप्रेम्णा (१) सरसविसिनीपत्रमात्रोत्तरीय ( २ )
स्ताम्यन्मूर्त्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान् ॥१२

माध । अन्य एवाश्रुतः कथाप्रकारो भगवत्याः (३) । ( ख )

माल । स्वगतम् । एव्वं दुक्करं करेदि सो ( ४ ) । ( ग )

काम । तदेवं प्रकृत्या सुकुमारः कुमारः कदाचिदप्यन्यत्र।

---

( ग ) एवं दुष्करं करोति सः ।

---

मम मृत्युर्भवतु इत्यभिप्रायेणेति भावः । वकुलामोदः वकुलकुसुमसौरभं गर्भे मध्ये यस्य तस्य वायो र्दक्षिणसमीरणस्य मार्गे सञ्चारपथे गात्रं देहं मृत्यवे बहुशः क्षिपति न्यस्यति । मदननाराचनिक्षेपवायुरयमिति मत्वेति भावः तथा सरस मार्द्रं यत् विसिनीपत्रं सन्ताप-शमनाय परिजनानीतं पद्मपत्रं तन्मात्रं उत्तरीयं प्रावरणं यस्य सः, ताम्यन्ती ग्लानिं प्राप्नुवती मूर्त्तिर्देहो यस्य सः, दावप्रेम्णा दावानलपक्षपातेन इमे चन्द्रपादा दावानला एव इति भ्रानेनेत्यर्थः मृत्यवे मरणाय बहुशो वारं वारं चन्द्रस्य पादान् किरणान् श्रयति अवलम्बते । एभि र्मम देहदाहो भवतु इत्याशयेनेति भावः ।

अत्र मुकुलिनीत्यादीनां विशेषणानां साभिप्रायत्वात् परिकराऽलङ्कारः, तथा मृत्यु-साधिकानां धत्त इत्यादिबहुक्रियाणामुपादानात् समुच्चयश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः ।

"दवो दाव इति ख्यातो वनाग्निवनयोरपि ।" इति विश्वः "पादा रश्म्यङ्घ्रितुर्य्यांशाः" इत्यमरः ।

मन्दाक्रान्ता वृत्तम् ॥ १२ ॥

( ख ) माधेति । अन्यएव साधारणेतरकथाप्रकाराद्भिन्न एव अलौकिक एवेत्यर्थः अश्रुतः अदृष्टः ।

( ग ) मालेति । स माधवः ।

---

( १ ) दाहप्रेम्णा इति क्वचित् पाठः । ( २ ) मात्रान्तराय इति पाठोऽपि ।
( ३ ) क्वचिदयं पाठो नास्ति । ( ४ ) अदिदुक्करं करेदि इति पाठान्तरम् ।

परिक्लिष्टपूर्वस्तपस्वी। यतोऽधुना ( १ ) शक्यमनेन मरणमप्यनुभवितुम् ( घ )

माल। जनान्तिकम्। सहि! अत्तणो कारणादो मच्चलोआलङ्कारभूदस्स तस्स किं वि आसङ्कमाणा भूदाविट्ठा विअ ण आणामि किं पड़िवज्जदि त्ति ( २ )। ( ङ )

माध। दिष्ट्या अनुकम्पितोऽस्मि भगवत्या। ( च )

---

( ङ ) सखि! आत्मनः कारणात् मर्त्यलोकालङ्कारभूतस्य तस्य किमपि आशङ्कमाना भूताविष्टेव न जानामि किं प्रतिपद्यत इति।

( घ ) कामेति। प्रकृत्या स्वभावेन सुकुमारः कोमलः कुमारो माधवः। अन्यत्र अन्यस्यां तरुण्यां विषये अपरिक्लिष्टपूर्वः ईदृशकामवेदनया पूर्वं क्लेशं न प्राप्तः। अतएव तपस्वी अनुकम्पनीयः। यतः सौकुमार्य्यात्। अनेन माधवेन। अत स्त्वमप्यनुरक्ता सती एनमासन्नविपत्तेः परित्रायस्वेति भावः। कुमार इत्यनेन जीवन्पितृकत्वं अविवाहितावस्थत्वञ्च व्यज्यते, अन्यत्रेत्यनेन च त्वमेव प्रथमानुरागविषय इति ध्वन्यते।

"तपस्वी तापसे चानुकम्प्ये त्रिष्वथ योषिति। मांसिकाकटुरोहिण्यो"रिति मेदिनी।

( ङ ) मालेति। आत्मनः स्वस्याः। किमपि मत्प्रपञ्चे विषमविपत्तिरूपत्वेन वक्तुमशक्यं मरणमित्यर्थः। भूतेन रुद्रानुचरदेवयोनिविशेषेण आविष्टा ग्रस्ता। प्रतिपद्यते अत्र किमुत्तरं दीयते, इति न जानामीत्यन्वयः। अतस्त्वमेवोत्तरं देहीति भावः।

( च ) माधेति। अनुकम्पितोऽस्मि, ईदृशोपन्यासेन मालत्या अप्यनुरागसम्भवादिति भावः।

---

( १ ) कुत्रचिदधुनाशब्दो नास्ति।

( २ ) भौदाविदाह्मि ताँ किं दाणिं एत्थ पड़िवज्जिअं इति पाठान्तरम्।

लव। भअवदी एव्वंवादिनी त्ति आअक्खीअदि। अह्माणं वि भट्टिदारिआ, भवणासण्णरच्छामुहमुहुत्तमण्डणस्स तस्स ज्जेव वहुसो अणुभूददंसणा भविअ रविकिरणासिलिट्ठ मुद्धकमलिणी-कन्दसुन्दरावअवसोहाविभाविदाणङ्गवेअणाधिअदर (१) रमणी आवि परिअणं दूणेदि। (क)

---

(क) भगवती एवंवादिनीति आख्यायते। अस्माकमपि भर्त्तृदारिका, भवनासन्नरथ्यामुखमुहूर्त्तमण्डनस्य तस्यैव बहुशोऽनुभूतदर्शना भूत्वा रविकिरणाश्लिष्टमुग्धकमलिनीकन्दसुन्दरावयवशोभाविभावितानङ्गवेदनाधिकतररमणीयापि परिजनं दुनोति।

(क) लवेति। एवं वादिनी माधवस्य मदनावस्थाप्रकाशिनी, इति हेतोः, आख्यायते मालत्या अप्यवस्था मयोच्यते। यथा शिष्यजनस्य गुरुजनान्तिके कस्यापि मदनावस्थावर्णनं लज्जावशादसम्भवं तथा शिष्यजनान्तिकेऽपि गुरुजनस्य, किन्तु, माधवस्य विपत्तिमाशङ्कमानैव भवती तं भावमपहाय माधवस्य मदनावस्थां वर्णितवती, सुतरां मयापि तथैव मालत्यवस्था समाख्यायते, इति न मे धृष्टतादोषो मन्तव्य इति भावः। भर्त्तृदारिका स्वामिकन्या मालती। तस्यैव माधवस्य। अनुभूतदर्शना प्राप्तदर्शना। रविकिरणैः आश्लिष्टं स्पृष्टं मुग्धं मनोहरं यत् कमलिनीकन्दं पद्मिनीमूलं मृणालमित्यर्थः तद्वत् सुन्दर्य्या श्वेतत्वेन मनोरमया अवयवशोभया देहकान्त्या विभाविता सूचिता या अनङ्गवेदना तया अधिकतरं यथा स्यात्तथा रमणीयाऽपि सती परिजनं मादृशं सेवकजनं दुनोति सन्तापयति। क्लेशदर्शनेऽपि सहसा तत्प्रतिकारोपायकरणासम्भवादिति भावः। "कन्दोऽस्त्री ग्रन्थौ मूले" इति विकाण्डशेषः।

---

(१) व्यदिअर इत्यपि पाठः।

णाभिणन्ददि कलाकीलाओ (१)। केवलं कमलाअमाण (२) कन्तहत्थपल्लत्थगण्डमण्डला दिअसाइं गमेदि। (ज)

अवि अ, विअसिदारविन्द मअरन्द णिस्सन्दसुन्दरेण दरद-लिअकुन्दमाअन्द महुविन्दुसन्दोहवाहिणा भवणुज्जाण (३)। पेरन्तमारुदेण उत्तम्मदि। (झ)

(ज) नाभिनन्दति कलाक्रीड़ाः। केवलं कमलायमान-कान्त-हस्त-पर्य्यस्त गण्डमण्डला दिवसानि गमयति।

(झ) अपि च, विकसितारविन्द मकरन्द-निष्यन्दसुन्दरेण दर-दलित-कुन्द-माकन्द-मधुविन्दु सन्दोहवाहिना भवनोद्यानपर्य्यन्तमारुतेन उत्ताम्यति।

---

(ज) नाभिनन्दतीति। कलाः नृत्यगीतादीः, क्रीड़ाः कन्दुकादिखेलाः, नाभिनन्दति न आद्रियते। एतेनारतिरुक्ता। कमलायमानः पद्मवदाचरन् कान्तः सुन्दरः यो हस्तः पद्ममिव सुन्दरं यत् पाणितलमित्यर्थः, तत्र पर्य्यस्तं न्यस्तं गण्डस्य मण्डलं यया सा। एतेन चिन्ताऽभिहिता।

(झ) अपि चेति। विकसितारविन्दस्य मकरन्दनिष्यन्देन रसस्रवेण तत्-सम्पर्केणेत्यर्थः सुन्दरः सौरभात्मनोहरः, तेन, तथा दरदलितौ ईषद्विकसितौ यौ कुन्दमाकन्दौ कुन्दकुसुमचूतकुसुमे तयो मधुविन्दुसन्दोहं रसविन्दुसमूहं वहतीति तेन तथोक्तेन, परमसौरभविशिष्टेनेत्यर्थः। भवनोद्यानस्य अमात्यपुरसंलग्नोपवनस्य पर्य्यन्तमारुतेन भवनासन्नसीमासञ्चारिणा वायुना, उत्ताम्यति अधीरा भवति। एतेनोद्दीपनविभावविहितवेदनाऽभिहिता।

"दरोऽस्त्रियं भयार्त्ते"। "माकन्दः सहकारेऽस्त्री धात्रीनगरभेदयोः। इति च मेदिनी।

---

(१) कैलिकलाओ इत्यपि पाठः।

(२) मिलाअन्त इति पाठोऽपि। (३) भअणुज्जाण इति पाठान्तरम्।

अस्स्ं अ, जदो प्पहुदि (१) तस्सिं जत्तादिअहे णिअ-मह्सव व्भुदअदंसणत्थं ( २ ) पड़िवस्सरूवस्स भअवदो कामस्स ( ३ ) विअ कामकाणणालङ्कारकारिणो तस्स विविहविव्भमाहिरामं अणुरूआणुराआणुबन्ध-महग्घोकिद जोव्वणारम्भं (४) अखोस्स दिट्ठिविणिवाद-वञ्चणावसर-जुवरिद(५) चित्त-तुवरन्तकोदूहलं, (६) समुल्लसिद सद्दस त्थम्भमन्थरावअवपड़िलग्ग-सेद-पुलअ उक्कम्प सुन्दरं ( ७ ) आनन्दिदसहीअणं पिअसहीए ( ८ ) परप्परावलोअणसुहं समासादिदं । ( अ

( अ ) अन्यच्च, यतः प्रभृति तस्मिन् यावादिवसे निजमहोत्सवाभ्युदयदर्शनार्थं प्रतिपन्नरूपस्य भगवतः कामस्येव, कामकाननालङ्कारकारिणः तस्य विविधविभ्रमाभिरामं, अनुरूपानुरागानुबन्धमहार्घीकृतयौवनारम्भं, अन्योन्यदृष्टिविनिपातवञ्चनाऽवसरज्वरित-चित्त-त्वरमाण कौतूहलं, समुल्लसित साध्वसस्तम्भ-मन्थरावयव-प्रतिलग्नस्वेद-पुलकोत्-कम्पसुन्दरं, आनन्दित-सखिजनं प्रियसख्या परस्परावलोकनसुखं समासादितम् ।

( अ ) अन्यच्चेति । निजः स्वकीयो महोत्सव एवाभ्युदय स्तस्य दर्शनार्थं प्रतिपन्नरूपस्य अनङ्गत्वे सत्यपि स्वकीयदेवप्रभावेण गृहीतमूर्त्तेः । कामकाननालङ्कार-

( १ ) जत्त्वेतिमात्रः पाठः पुस्तान्तरे ।

( २ ) ...दंसणपड़िवस्सरूवस्स इति कृतसमासः पाठभेदः ।

( ३ ) मम्महस्स इति भिन्नः पाठः ।

( ४ ) विविहविव्भमाणुराआणुबन्ध... इति पाठान्तरम् ।

( ५ ) खिज्जमाण इति पाठोऽपि दृश्यते । (६) कुत्रचि दत्रापि समासो न कृतः

( ७ ) ...कम्पाणन्दिअ सहीअणं इत्यपि पाठः पुस्तकान्तरे ।

( ८ ) कुत्रचित् पिअसहीए इति पाठो नास्ति ।

तदो प्पहुदि सविसेसदूसहाआस-विजिम्भमाणुद्दाम-देहदाह दारुणं (१) दसापरिणामं अणुभवन्तो, मुहुत्तमेत्तसंपत्तपुण्ण-चन्दोदआ बालकमलिणी विअ पम्मलाअदि (२)। (ट)

(ट) ततः प्रभृति सविशेषदुःसहायासविजृम्भमाणोद्दामदेहदाहदारुणं दशापरिणामं अनुभवन्ती, मुहूर्त्तमात्रसम्प्राप्तपूर्णचन्द्रोदया बालकमलिनीव प्रम्लायति।

कारिणः स्वसौन्दर्य्यप्रकाशेन तन्मदनोद्यानशोभाविधायिनः, तस्य माधवस्य, विविध-विभ्रमैर्नानाप्रकारविलासैः अभिरामं मनोरमं तथा अनुरूपो योग्यो योऽनुराग स्तस्य अनुबन्धेन अनुसरणेन द्वारा महार्घीकृतः दुर्लभीकृतः श्लाघनीयः कृतः यौवनारम्भो येन तत् तथोक्तम्। तथा अन्योन्यदृष्टिविनिपात एव वञ्चना परस्मिन् काले दुःख-कारत्वात् प्रतारणा तस्या अवसरे समये ज्वरितं कामावेशेन सन्तप्तं यच्चित्तं तस्मिन् त्वरमाणं सत्वरं जायमानं कौतूहलं दर्शनस्यैव कौतुकं यस्मिन् तत्। तथा समुल्लसितम् उत्पन्नं यत् साध्वसं भयं तेन यः स्तम्भो निश्चेष्टता, तेन मन्थरेषु मन्देषु कार्य्याक्षमेषु अवयवेषु हस्तपदाद्यङ्गेषु प्रतिलग्ना उत्पद्य स्थिताः, ये स्वेदपुलकोत्कम्पा घर्म्म-रोमाञ्चकम्पाख्याः, सात्विकभावाः, तैः सुन्दरम्, अतएव आनन्दिताः स्वयोग्यजनस्यैव दर्शनेनानुरागादियमवस्थेत्यामोदिताः सखीजना येन तत्। प्रियसख्या मालत्या। समासादितं प्राप्तम्।

(ट) तत इति। सविशेषः सातिशयः अतएव दुःसहो य आयासः कष्टं मदनवेदनेति यावत् तेन विजृम्भमाणो वर्द्धमान उद्दामो महान् यो देहदाहः शरीर-सन्तापः तेन दारुणं दशापरिणामम् अवस्थापरिणतिं कामविकारमित्यर्थः। मुहूर्त्त-मात्रम् अत्यल्पकालमात्रं सम्प्राप्तः चक्षुषालब्धः दृष्ट इत्यर्थः पूर्णचन्द्रोदय उदित-

(१) विअम्भमाणुद्दामदारुणं इति पाठान्तरम्।

(२) परिमिलाअदि इति पाठभेद.।

तह वि अ (१) मुहुत्तमेत्तहिअअ विणिहिद-वल्लहसमागमा, (२) णिव्भरसलिलासार-सिच्चमाणा विअ मेदिणी सोदलाअदि त्ति जाणामि । (ठ)

जेण पप्फुरिद-रदणच्छदुज्जलन्त-दन्तमोत्तिअ-पन्ति (३) कन्तिसविसेस सोहिदं, णिरन्तरुल्लसिद-पुलअ पह्मल कवोल-

---

(ठ) तथापि च, मुहूर्त्तमात्र-हृदयविनिहितवल्लभसमागमा, निर्भरसलिलासार-सिच्यमानेव मेदिनी शीतलायत इति जानामि ।

(ड) येन प्रस्फुरित रदनच्छदोज्ज्वलद्दन्तमौक्तिकजपङ्क्ति कान्ति सविशेषशोभितं, निरन्तरोल्लसित पुलक पक्ष्मल कपोल घूर्णमान सन्ततानन्दवाष्पस्तवकम्, ईषद्विकशित निस्पन्द-मन्दतारोत्ताण-मसृण मुकुलायमान नेत्रनीलोत्पलम्, अविरलोद्भिन्नस्वेदजल-विन्दु-सुन्दर-ललाटपट्टं, नवचन्द्रलेखामनोहरं, मुग्धमुखपुण्डरीकम् उद्वहन्ती, विदग्ध-सहचरीचित्तसंशयितकौमारभावा भवति ।

पूर्णचन्द्रो यया सा, विशेषणमेतत् कमलिनीपक्षेऽपि योज्यम् । बालकमलिनी बालत्वेन नितान्तकोमला पद्मिनीव प्रम्लायति ।विशेषकामावेशेन. अवसादति, पक्षे सङ्कुचिता भवति । अत्राप्युद्दीपनविभावजनितवेदना सूचिता ।

(ठ) नन्वीदृशवेदनानुभवे कथं जीवतीत्याह तथापि चेति । तादृशमदनवेदनाऽवसादे सत्यपीत्यर्थः । मुहूर्त्तमात्रं कियन्तं कालं हृदये विनिहितः स्थापितः केवलमनःसङ्कल्पेनानुभूत इत्यर्थः वल्लभस्य प्रियस्य माधवस्य समागमो यया सा, अतएव निर्भरेण अतिमात्रेण सलिलासारेण वृष्टिधारासम्पातेन सिच्यमाना आर्द्रो-

---

(१) तह वि इत्येतन्मात्रः पाठोऽपि ।

(२) विनिहिदणिम्माअन्तवल्लहसमागमा इति क्वचित् पाठः ।

(३) पप्फुरिद कन्त दसणच्छदुच्छलन्त मुत्तिआवलि इति पाठान्तरम् ।

घोलन्त-संददाणन्द-वाहत्थवअं, ईसि विअसिद-णिप्फन्द-मन्द तारत्ताग (१) मसिण-मउलाअन्त णेत्तणीलुप्पलं, अविरलुब्भि-ण्णसेअजलबिन्दु सुन्दर-ललाड़पट्टं (२) णवचन्दलेहामणोहरं, मुहमुहपुण्डरीअं उब्बहन्ती, विअड्ढसहचरीचित्त-संसइद कोमारभावा भोदि। (ड)

क्रियमाणा मेदिनीव शीतलायते उपरतमदनतापतया शीतलेवाचरति। इति जानामि अनुमिनोमि। अतएव जीवतीति भावः। एतेन सङ्कल्प उक्तः।

(ड) कथमीदृशमनुमानमित्याह येनेति। सङ्कल्पोपनीत प्रियचुम्बनानुभावमाह प्रस्फुरिनेत्यादि। प्रस्फुरिताभ्यां स्पन्दमानाभ्यां रदनच्छदाभ्यां ओष्ठाभ्यां उज्ज्वलन्ती दीप्यमाना या दन्तमौक्तिकपङ्क्तिः दन्तरूपमुक्तावली तस्याः कान्त्या शोभया सविशेषं सातिशयं शोभितं तथा निरन्तरोल्लसितैः अतिनिविड़भावेनोत्पन्नैः पुलकैः रोमाञ्चैः पक्ष्मलौ अमसृणौ यौ कपोलौ गण्डौ तयोरुपरि लुठन् घूर्णमानः पतित्वा इतस्ततो-ऽभिष्यन्दमानः सन्ततः अविच्छिन्नधारः आनन्दवाष्पस्तवकः चुम्बनानन्दानुभवादश्रुजलपुञ्जो यत्र तत् तथोक्तम्।

सङ्कल्पोपस्थापितवल्लभं प्रति दृष्टिप्रकारानाह ईषदित्यादि। ईषद्विकसिते लज्जादि-हावशात् कदाचित् किञ्चित् प्रकाशिते, निष्पन्दे परमसौन्दर्य्यात् क्वचित् निश्चले, मन्दतारे कौतुकोद्वीक्षणात् कदापि स्तोकविकसिततारकद्वये, उत्ताने उन्नतमुखदर्शनाय कदाचिदुन्नमिते, मसृणे अतुलनीयप्रेमानुभवात् कदापि कोमले, मुकुलायमाने च आलिङ्गनाद्यलौकिकसुखास्वादनात् कदापि मुद्रितप्राये च नेत्रनीलोत्पले नयनेन्दीवर-द्वयं यत्र तत्।

(१) ईसविसमनिप्पन्दमन्थरताकत्ताण इति पाठभेदः।

(२) ...सुन्दरणवउलचन्दलेहामणोहरं इत्यपि पाठः।

किं अ, उद्दाम-ससिमऊह निउरम्व चुम्बिद-पउत्तणिस्सन्द-चन्दमणिहारधारिणी, पउर-कप्पूर-सविसेस-सिसिर चन्दणरस-च्छड़ासारणिअर-दन्तुरिद वालकदलीपत्त-सअणा,(१)पादसंवाहणादिवावार-तुवरन्त सहअरीसत्थ-विरइदोवणीद-कमलिणीदल-जलद्द-तालवन्ता (२)उण्णिद्दा एव्व (३) रअणीओ गमेदि । (ढ)

(ढ) किञ्च, उद्दामशशिमयूख निकुरम्ब चुम्बित—प्रवृत्तनिष्यन्द चन्द्रमणिहार-धारिणी, प्रचुर-कर्पूर-सविशेष-शिशिर-चन्दनरस-च्छटासारनिकर दन्तुरित—वालकदलीपत्रशयना, पादसंवाहनादिव्यापार-त्वरमाण--सहचरीसार्थ--विरचितोपनीत--कमलिनीदल-जलार्द्र-तालवृन्ता, उन्निद्रैव रजनी र्गमयति ।

सङ्कल्पोपनीतदयितेन सह रतेःश्रमानुभावमाह अविरलोद्भिन्नेत्यादि। अविरलं घनं यथा स्यात्तथा उद्भिन्ना उत्पन्ना ये स्वेदजलविन्दवस्तैः सुन्दरं ललाटपट्टं भालदेशो यस्मिन् तत् ।

नवचन्द्रलेखामनोहरं नवोदितचन्द्रकलासुन्दरं मुग्धं मूढ़ं सङ्कल्पोपस्थापितप्रियतमान्तिके सरलताव्यञ्जक मित्यर्थः तत्मुखपुण्डरीकं वदनसिताम्भोजं तत् उद्वहन्ती धारयन्ती मालती, विदग्धाभिः सुचतुराभिः सहचरीभिः सखीभिः चित्ते स्वस्वमनसि संशयितः सन्देहविषयीकृतः कौमारभावः अविवाहिताऽवस्थत्वं यस्याः सा तथोक्ता भवति, यादृशी खल्वियमकस्मात् कामातुरा सञ्जाता, ततः किं स्वयमेव पतिं वृणुयात् नवेति सखीनां संशयविषयभूता भवतीत्यर्थः। एभिर्लक्षणैः स्पष्टाऽनुमानमिति भावः ।

(ढ) रजन्यवस्थामाह किञ्चेति। उद्दामेन महता सान्द्रेणेत्यर्थः शशिमयूखानां चन्द्रकिरणानां निकुरम्बेण समूहेन चुम्बितः स्पृष्टः, अतएव प्रवृत्तः

(१) सअणा, पाद, इति पदद्वयमपि कुत्रचि न्नास्ति। (२) जलद्दासअणीये इति कुत्रचित्पाठः। (३) कुत्रचित् एव्वशब्दो नास्ति।

कधं वि उवलद्धणिद्दासुहा, सेदप्पसिद (१) पादपल्लवुब्भन्त पिच्छालत्तअरसा, (२) थरथराअन्तपीवरोरुमूलपास (३) विसंवादि-णीविबन्धणा, उक्खुब्भन्त (४) हिअअन्तकन्तरङ्ग-णिस्सास-विसम-समुच्छुसन्त-पुलअ-(५) पह्मल-पओहरोवरि णिहिद-वेवन्त-भुअलदा वेट्ठनबन्धणा, (६) झत्ति पडिवोध-

---

(छा) कथमपि उपलब्धनिद्रासुखा, स्वेदप्रसृतपादपल्लवोद्भ्रान्त-पिच्छालक्तक रसा, थरथरायमाण-पीवरोरुमूलपार्श्व-विसंवादि-नीविबन्धना, उत्क्षुभ्यमानहृदयान्त-कान्तरङ्ग-निःश्वास--विषम--समुच्छ्वसतपुलक-पक्ष्मल-पयोधरोपरि-निहित--वेपमान--भुजलता--वेष्टन-

---

सञ्जातो निष्यन्दो जलस्रावो यस्मात् स प्रवृत्तनिष्यन्दः, यश्चन्द्रमणिहारः चन्द्रकान्त-मणिनिर्म्मितहारः तं धारयति कण्ठे दधातीति सा।

प्रचुरेण कर्पूरेण सविशेषशिशिरा सातिशयशीतला या चन्दनरसच्छटा चन्दनद्रव-समूहः, तस्या आसारनिकरेण धारासम्पातसमूहेन प्रवाहप्रदानेनेत्यर्थः दन्तुरितं असमीकृतं वालकदलीपत्रमेव शयनं शय्या यस्याः सा।

तथा पादसंवाहनादिव्यापारे त्वरमाणः सत्वराभूतः यः सहचरीसार्थः सखीसमूहः, तेन विरचितम् आदौ निर्म्मितम् उपनीतम् अनन्तरमानीतं कमलिनीदलमेव जलार्द्रं ताल-वृन्तं व्यजनं यस्याः सा। आदौ सखीजनाः पादसंवाहनगात्रस्फोठनादिकर्म्मणि व्याप्टता आसन्, परन्तु तापातिशयमवलोक्य झटिति जलार्द्रकमलिनीदलेन व्यजनं विरचय्य

---

(१) पक्खालिद पाद—, सेदपप्फुरिद पाद—इति पाठभेदौ।

(२)...पल्लवुब्भमन्त इति पाठान्तरम्। (३) वास इति भिन्नः पाठः।

(४) उक्खडन्त इति पाठोऽपि। (५) क्वचित् पुलअशब्दो न दृश्यते।

(६) वेट्ठबन्धणा। इति पाठभेदः।

बेला-विसज्जिदुव्विग्ग-दिट्ठिविणिवाद-विसाद- (१) सुस-मग्ग-णिज्ज-सच्चाद-मोहमीलन्तलोअणा, ससम्भम सहीअण--पअत्त-पडिवस-मुच्छाविच्छेअ-समम-संगलिद-दीह--णीसास--जणिद-जीविदासा, (२) किं कादव्वदामूढ़ (३) पढ़मपत्थिद-णिअ-

---

बन्धना, झटिति प्रतिबोधवेला-विसर्जितोद्विग्न-दृष्टिविनिपात-विषाद-शून्य-शयनीय शङ्कात-मोहमीलल्लोचना, ससम्भ्रम-सखीजन-प्रयत्न प्रतिपन्न-मूर्च्छाविच्छेदसमल-सङ्कलित-तेन वीच्यमानेत्यर्थ:। उन्निद्रेव उत्कृष्टनिद्रेव जागरितैव रजनीर्गमयति बहुतरा रात्रीरतिवाहयति। एतेन जागरावस्था प्रतिपादिता।

अत्र नित्यसमासवादिनां मते अवयवार्थाननुसन्धानात् समुदायेनैव विशेषार्थप्रत्याय-नात् तालवृन्तपदेन व्यजनमात्रमेवाभिधीयते, अतएव "व्यजनं तालवृन्तक" मित्यमरेण व्यजनमात्र एव तालवृन्तपदं पर्य्यायीकृतम्।

तथा च शाकुन्तलेऽपि "सञ्चालयामि नलिनीदलतालवृन्तम्।"

(ग) कथमिति। कथमपि अतिकष्टेनेत्यर्थ:, उपलब्धं निद्रासुखं निद्राकालीन स्वप्नजनितप्रियतमसम्भोगानन्दो यया सा, अतएव स्वेदप्रसृतेन स्वप्नज-सुरतश्रमजनित वास्तविक-घर्म्म जलस्रावेण पादपल्लवाभ्यां चरणकिसलयद्वयात् उद्वान्त उद्गीर्ण: विधौत इत्यर्थ: पिण्डालक्तकरस: कालान्तरे शुष्कत्वात् पिण्डीभूतो लाक्षाद्रवो यस्या: सा।

पुनश्च थरथरायमाणं स्वप्ने वल्लभस्योरुद्वयेनाक्रमणानुभवात् कम्पमानं यत् पीवरो रुमूलं तस्य पार्श्वात् समीपात् विसंवादि अवस्रंसि स्खलितमित्यर्थ: नीविबन्धनं यस्या: सा। एतेन पुन:सम्भोगानुभवो दर्शित:। थरथरायमाणमिति देशीयपदम्।

पुनरपि स्वप्नालिङ्गनानुभवमाह उत्क्षुभ्यमानेति। उत्क्षुभ्यमानं मदनवेदनया क्षुब्धीक्रियमाणं यत् हृदयं तस्य अन्तर्मध्ये उपरङ्गा निरोधवशात् उद्वेलिता ये नि:श्वासा:, तैर्विषमं सातिशयं यथा स्यात्तथा समुच्छ्वसद्भि: उत्पद्यमानै: पुलकै रोमाञ्चै:

---

(१)...विसज्जिआपङ्गदिट्ठि विणिवाद विसाण—इत्यपि पाठ:।

(२)...णीसास सेस जीविदा इति पाठान्तरम्। (३) मूढ़दाए इति क्वचित् पाठ:।

जीविदावसाणं दुव्वार-दैव्व-विलसिदोवालम्भमेत्तव्वावारं अम्हा-
रिसं जनं (१) करेदि। (ग)

दीर्घनिःश्वास-जनित-जीविताशा, किंकर्त्तव्यतामूढ़ं प्रथमप्रार्थित-निज-जीवितावसानं, दुर्वार दैव-विलसितो-पालम्भमात्रव्यापारम् अस्मादृशं जनं करोति।

पक्ष्मलयोः असमीकृतयोः पयोधरयोः स्वकुचयो रुपरि निहिताभ्यां वल्लभधारणेच्छया स्थापिताभ्यां भुजलताभ्यां स्वकीयबाहुलताभ्याम् आवेष्टनबन्धनं परिवेष्टनेन वल्लभस्यालिङ्गनं यस्याः सा।

जागरणकालीनावस्थामाह आटतीति। झटिति शीघ्रं, प्रतिबोधवेलायां जागरण-समये विसर्जिता त्यक्ता उद्विग्ना वल्लभस्याविद्यमानत्वशङ्कया सभया या दृष्टिः, तस्या विनिपातेन सम्पर्केण विज्ञातम् अवगतं शून्यं वल्लभरहितं यत् शयनीयं शय्या, तस्मिन् सञ्जातः वल्लभशून्यतादर्शनात् तत्रैव शयनीये उत्पन्नो यो मोहो मूर्च्छा तेन मीलती मुद्रिते लोचने यस्याः सा।

ससम्भ्रमा मूर्च्छापनोदनाय सत्वरा ये सखीजनाः तेषां प्रयत्नेन शीतलजल-सेकादिना व्यापारेण प्रतिपन्नः, सम्पन्नः, यो मूर्च्छाविच्छेदः तस्य समये सङ्कलितेन निःसृतेन दीर्घनिःश्वासेन जनिता सखीजनानामुत्पादिता जीविताशा जीवनमस्तीत्याशा यस्यां सा तथोक्ता मालती, अस्मादृशं जनं सखीजनमित्यर्थः किंकर्त्तव्यतामूढ़ं प्रथम-प्रार्थितं निजजीवितस्य, स्व-स्व-जीवनस्य अवसानं विनाशो येन तं, तथा दुर्वारं मनुष्यैर-शक्यबाधं यत् दैवं नियतिः तस्य यत् विलसितं कार्य्यं तस्य उपालम्भमात्रः निन्दामात्रः व्यापारः कार्य्यं यस्य तं तथोक्तं करोति। मालत्या स्तादृशीं दशामवलोक्य वयं सर्वाः किंकर्त्तव्यतामूढ़ा भवामः, तथा मालत्या अचिरेण विषमां विपत्तिं विभाव्य तद्दुःखस्य सोढुमशक्यत्वात् तत्पूर्वं स्वस्वमरणमेव प्रार्थयामः, तथा अनन्योपायवशात् तद्दुःखजनकी-भूत दुर्निवारदैवचरितमेव केवलं निन्दाम इति सरलार्थः।

(१) सहीजनं इति पाठोऽपि।

ता पेक्खदु भअवदो, इमेसु दाव लावस्रभूइट्ठणिम्माण-परिपेसलेसु (१०) अङ्गेसु दारुणविइम्भिदस्स किअच्चिरं कुस-लावसाणदा मम्महस्स भविस्सदि (२)। (त)

कधंअ, इमाइं रमणकेलि-कलह-कोवोवराअ-पल्लविद-केरलीकवोल कोमलुव्वेल्लन्त-बिमल-चन्दिओद्दाम (३) दलिद-तिमिरावरणाइं विहावरीमुखाइं, इमे अ, उल्लसिद-दुद्ध सिन्धु-

(त) तत् प्रेक्षतां भगवती, एषु तावल्लावण्यभूयिष्ठनिर्म्माण-परिपेशलेषु अङ्गेषु दारुणविजृम्भितस्य कियच्चिरं कुशलावसानता मन्मथस्य भविष्यति।

(थ) कथञ्च, इमानि रमणकेलि-कलह-कोपोपराग-पल्लवित-केरली-कपोल-कोमलोद्वेल्लद्विमलचन्द्रिकोद्दाम-दलित तिमिरावरणानि विभावरीमुखानि, इमे च उल्लसित दुग्धसिन्धु-पूरधवलोज्ज्वल ज्योत्स्ना-प्रक्षालित-नभोऽङ्गनाः, परिमलित-पाटला वकुल-निर्म्मथन वहुल-परिमलोद्गार-संवलन-मसृण-मांसलायमान-मलयमारुतोद्भमा-

(त) तदिति। तत्तस्मात्, प्रेक्षतां योगलब्धस्वकीयज्ञाननयनेन निरूपयतु। लावण्यमेव भूयिष्ठं वहुलं येषु तानि, तथा निर्म्माणेनैव सृष्टिमात्रेणैव परिपेशलानि सर्व्वतः शोभनानि च तेषु, अङ्गेषु मालत्या देहावयवेषु दारुणविजृम्भितस्य भयङ्करभावेन वृद्धिं गतस्य मन्मथस्य कियच्चिरं कियन्तं कालमतीत्येत्यर्थः कुशलेन मालतीजीवनसत्तारूप मङ्गलेन अवसानं यस्य तस्य भावः सा। मालत्या जीवने तिष्ठति सति अयं मदना-ऽङ्गो निवृत्तिं यास्यति नवेति ज्ञाननयनेन निरूप्य अस्मान् ब्रवीत्विति सरलार्थः।

(१)...परिवेलवेसु इति भिन्नः पाठः। (२) कुत्रचित् भविस्सदि इति पाठोनास्ति।
(३) चन्दचन्दिओ द्दाम इति पाठोऽपि दृश्यते।

(१) पूरधवलुज्जल-(२) जोण्हा-पक्खालिअ पण्होङ्गणा, (३) परिमलिद-पाडला-बउल-(४) गिम्भहण वडुल (५) परिमलुग्गार सम्बलण-मसिण-मंसलाअन्त (६) मलअमारुदुम्माविद-दसदिसामहा, वसन्तरअणीपरिणाहा अणत्थकारिणो भविस्सन्ति पिअसहीएत्ति (७)। (घ)

यित-दशदिशामुखाः, वसन्तरजनीपरिणाहाः, अनर्थकारिणो भविष्यन्ति प्रियसख्या इति।

(घ) कथञ्चेति। इमानि आसन्नप्रायाणि, रमणकेलिकलहेन रतिक्रीड़ाविषयक-विवादेन यः कोप स्तेन य उपरागो रक्तिमा तेन पल्लवितौ पल्लववदारक्तीकृतौ यौ केरलीकपोलौ केरलदेशीयस्त्रिया गण्डद्वयं तद्वत् कोमला मृदुला उद्वेल्लन्ती उल्लसन्ती विमला च या चन्द्रिका ज्योत्स्ना, तया उद्दामं सातिशयं यथा स्यात्तथा दलितानि नाशितानि तिमिरावरणानि अन्धकाररूपावरणानि येषां, तानि तथोक्तानि, विभावरीमुखानि प्रदोषकालाः, कथं कीदृशानीत्यर्थः अनर्थकारीणि भविष्यन्तीति परेणान्वयः! तदपि प्रेच्यतां भगवतीति भावः। अनिर्वचनीयदुःखदायीन्येव भविष्यन्तीति व्यज्यते।

रजनीपरिणाहा इति सामान्यत उक्तोऽपि प्रदोषे विशेषकामोद्दीपनासूचनार्थं विभावरीमुखानीति विशेषेणोक्तम्। केरलदेशीयस्त्रीकपोलस्यातिकोमलत्वात्तदुपादानं, तत्-सादृश्यञ्च कोमलत्वांश एवेति च बोध्यम्।

(१) दुद्धधारा इति पाठोऽपि। (२) धवलुज्जलन्त इत्यपि पाठः।
(३) गअणाङ्गणा इति पाठान्तरम्। (४) सुउल इति क्वचित् पाठः।
(५) वहल इति पाठभेदः। (६) मंसल इतिमात्रः पाठः क्वचित्।
(७) अणत्थआरिणो होन्ति रअणीपरिणामा अ पिअसहीए इति भिन्नः पाठः।

काम। लवङ्गिके ! ।

यदि तद्विषयोऽनुरागबन्धः—

स्फुटमेतद्धि फलं गुणज्ञतायाः

---

इमे च अदूरवर्त्तिनः, उल्लसिता उद्दीप्ता दुग्धसिन्धुपूरवत् चीरोदसागरप्रवाहवत् धवला उज्ज्वला च या ज्योत्स्ना, तया प्रचालितं विधौतं तिमिरापसारणेन परिष्कृतमित्यर्थः नभोऽङ्गनं गगनप्रदेशो येषु ते। तथा परिमलितानि सञ्जातपरिमलानि यानि पाटलाबकुलानि पुष्पविशेषाः तेषां निर्म्मथनेन विमर्द्दनेन ये बहुलपरिमलोद्गाराः प्रभूतसौरभनिर्गमाः तैः संवलनेन मिश्रणेन मसृणः कोमलः मांसलायमानः बलवानिवाचरन् प्रबलो यो मलयमारुतः दक्षिणसमीरणः, तेन धूमायितानि उद्गतधूमायमानानि कृतानि दशदिशामुखानि सकलदिङ्मुखानि येषु ते तथोक्ताः। वसन्तरजनीपरिणाहाः वसन्तरात्रिविशालताः विरहिणातिदीर्घवत् प्रतीयमाना वसन्तकालरजन्य इत्यर्थः प्रियसख्या मालत्याः कथं कीदृशा अनर्थकारिणः विपत्तिविधायिनो भविष्यन्ति। इति च भगवती प्रेचतामिति भावः।

कथंवि उवलद्धनिद्दासुहा इत्याद्येतदन्तवाक्येषु मालत्या स्वाङ्गमदारुणक्लेश निवारणस्योपायादर्शनात् तापनं नाम प्रतिमुखसन्धेरङ्गम्। तथा च दर्पणे—

"उपायादर्शनं यत्तु तापनं नाम तद्भवेत्।"

परिमलितेति—तारकादित्वादितच्। उद्गता धूमा येषु तानि उद्धूमानि, तानीव आचरन्तीति उद्धूमायानि आय्यन्तात् कर्त्तरि पचादित्वादच्, तानि कृतानीति पुनः करोत्यर्थेनन्तात् कर्म्मणि क्त इति उद्धूमायितानि। दिशा इति चुधाशब्दवत् ठावन्तः।

अहो ! सौभाग्यात्भवभूतिरिदानीं किञ्चिद्विरतः, यावत् समासराश्यन्तरं नारभते, तावद्भवन्तः खल्वध्यापयितारोऽध्येतारः श्रोतारश्च निःश्वासमुन्मुच्य किञ्चिज्जीवन्तु।

यदीति। अनुरागबन्धः मालत्या गाढ़ानुरागः यदि तद्विषयः माधवालम्बनः अभवदिति शेषः। तदा एतद्धि एतदेव गुणज्ञतायाः स्फुटं स्पष्टं फलं। माधवोऽ-

इति नन्दितमप्यवस्थयाऽस्या
हृदयं दारुणया विदार्य्यते मे ॥ १२ ॥

माध। अहो! स्थान एवाभ्युल्लासो (१) भगवत्याः। (द)

काम। अहो! प्रमादः। (ध)

प्रकृतिललितमेतत् सौकुमार्य्यैकसारं
वपुरयमपि सत्यं दारुणः पञ्चबाणः।

---

तीव्रगुणवानिति तत्रानुरागः सर्व्वेषामेवानन्दकरत्वादभिमत इति भावः। इति हेतोः नन्दितमपि आह्लादितमपि मे मम हृदयं दारुणया अस्या मालत्या अवस्थया मदनात्यावार पीड़ितदशया विदार्य्यते।

अत्र भङ्गीविशेषेण माधवस्य गुणवत्ताऽभिधानात् पर्य्यायोक्तमलङ्कारः, तथा कारण-भूताऽवस्था मालतीगता, तत्कार्य्यभूतं विदारणन्तु कामन्दकी-हृदयगतमिति कार्य्यकार-णयो र्वैयधिकरण्यादसङ्गतिर्नामाऽलङ्कारः त्वनयोर्मिथोनैरपेक्ष्यात् संसृष्टिः।

माल्यभारिणी नाम वृत्तम्। "विषमे ससजा यदा गुरू चेत् सभरा येन तु माल्य-भारिणीयम्।" इति लक्षणात् ॥ १२ ॥

(द) माधेति। अभ्युल्लासः दारुणोद्वेगः। स्थान एव युक्त एव। अस्याः शरीरस्य कृशतादिदर्शनेनाचिरेणैवानिष्टसम्भावनादिति भावः। उल्लासस्य आनन्दस्य अभि धर्षणं विमर्द्दं क इत्यभ्युल्लास। "अभि (व्य)—धर्षणमिति शब्दकल्पद्रुमः।"

(ध) कामेति। प्रमादः अस्याकामनवधानता। इतोऽपि यत्नविशेषेणानयोः समागमस्याविहितत्वादिति भावः।

प्रमादेन सम्भावनीयं दोषमुपपादयितु माह प्रकृतीति। एतत् वपुः मालत्याः शरीरं प्रकृतिललितं स्वभावसुन्दरं, तथा सौकुमार्य्यं कोमलत्वेव एक अद्वितीयः सारः स्थिरांश

(१) उल्लास इति पाठान्तरम्।

चलितमलयवातोद्भूतचूतप्रसून:
कथमयमपि काल स्चारुचन्द्रावतंस: ॥१४॥

लव। अस्सञ्च जाणिदं भोदु भअवदीए। एदं माहव-पड़िच्छन्दअसणाहं चित्तफलअं। मालत्या: स्तनांशुकमपनीय। एसावि

(न) अन्यच्च ज्ञातं भवतु भगवत्या। एतन्माधवप्रतिच्छन्दकसनाथं चित्र-

उत्‌कृष्टांशो यस्मिन् तत्, अतीवकोमलमित्यर्थ:। तथा अयं पञ्चवाण: कामोऽपि दारुण:। एकवाणत्वेऽपि नास्त्यव्याहति:, अयन्तु पञ्चवाण इति भाव:। ईदृश-कोमलशरीरे दारुणपञ्चवाणस्याक्रमणमतीवदु:सहमिति भाव:। इत्यवधारणं सत्यमित्यर्थ:। विशेषतश्च चलितेति। चलितेन प्रवहता मलयवातेन चन्दनस्पर्शि-वायुनेत्याशय: उद्भूतानि कम्पितानि चूतप्रसूनानि सहकारकुसुमानि यस्मिन् स तथोक्त:, तथा चारु: तुषारमेघाभ्यामावरणाभावात् कालान्तरीयापेक्षया सुन्दर: चन्द्र: अवतंसो भूषणं यस्य स तादृश:, अयं काल: वसन्तसमयोऽपि वर्त्तत इति शेष:। विषादे कथं शब्द:। सुतरामस्माकमीदृशप्रमादेन विलम्बनं मालत्या अनिर्वचनीयानर्थकारण-मिति भाव:।

अत्र स्वभावसुन्दरं नितान्तकोमलञ्च वपु:, दारुण: पञ्चवाणश्च इत्यनयोर्विरूपयो: सङ्घटनया विषमालङ्कार:, तथा अप्रस्तुतात् दारुणपञ्चवाणतादृशवसन्तकालरूप-कारणात् मालत्या अनिर्वचनीयदु:खरूपप्रस्तुतकार्य्यप्रतीतेरप्रस्तुतप्रशंसा च, अनयो रङ्गाङ्गिभावेन सङ्कर:।

मालिनी वृत्तम् ॥ १४ ॥

(न) लवेति। माधवस्य प्रतिच्छन्दकेन चित्रितप्रतिकृत्या सनाथं सहितम्। वकुलमालाप्रदर्शनार्थं स्तनांशुकापनयनमिति बोध्यम्। तस्यैव माधवस्यैव, स्वहस्ताभ्यां रचिता निर्म्मितेति हेतो: आदरप्रदर्शनार्थमिति शेष:। जीवनं जीवनस्वरूपा। एतेन

तस्स ज्जेव सहत्थविरइदेत्ति कण्ठावलम्बिदा बउलमाला जीवणं पिअसहीए त्ति। इति वकुलमालां दर्शयति (१)। (न)

माध। सस्पृहम्। (२)

जितमिह (३) भुवने त्वया यदस्याः
सखि! वकुलावलि! वल्लभासि जाता।
परिणतविसकान्तपाण्डुमुग्ध (४)
स्तनपरिणाहविलासवैजयन्ती ॥ १५ ॥

नेपथ्ये कलकलः। सर्व्वे आकर्णयन्ति।

---

फलकं एषाऽपि तस्यैव स्वहस्तविरचितेति कण्ठावलम्बिता वकुलमाला जीवनं प्रियसख्या इति।

---

माधवं प्रति मालत्या अपि सुमहाननुरागो जात इत्यवधार्य्य भवत्या यत्नातिशयेन सत्वरं कर्त्तव्यं क्रियतामिति भावः।

जितमिति। हे सखि! वयस्याभूते! मालत्याहृतत्वादनुरागजनकत्वेनानुकूल्यकरणात् तत्कुचमण्डलगतत्वेन मत्स्थानपातित्वाच्चेति भावः। वकुलावलि! वकुलमाले! त्वया इह भुवने जितं उत्कर्षेण वृत्तं सर्वेभ्य एवोत्कर्षो लब्ध इत्यर्थः यत् यस्मात् त्वं, परिणतः परिपूर्णावयवः, यो विसकाण्डः मृणालदण्डः तद्वत् पाण्डुः श्वेतः मुग्धः सुन्दरश्च यः स्तनयोः परिणाहो विशालता विशालौ स्तनावित्यर्थः, तस्य विलासस्य सौन्दर्य्यस्य वैजयन्ती पताकारूपा सती संसूचिका सतीत्यर्थः अस्या मालत्या वल्लभा वक्षसि स्थापनरूपेणादरातिशयेन प्रिया जाता असि, 'अहं कथमस्याः सस्पृहलोचनगोचरीभवेयं, कथं वा कुचमण्डलाश्रयचरितार्थो भूयास' मित्यादिना सर्वदा मया

(१) अयं पाठः कुत्रचिन्नास्ति। (२) अयमपि पाठः कुत्रचिन्न दृश्यते।
(३) जितमिवेति पाठान्तरम्। (४) विसदण्डकाण्ड पाण्डु इति पाठभेदः

पुनर्नेपथ्ये। (१)। रे रे सङ्करपुरवासिजाणवदा! (२) एसो क्खु जोव्वणारम्भ-गव्व-सम्भरिद-(३) दुव्विसहामरिस-रोस व्वदिअर-वलामोड़ि--विहड़िदुग्घाड़ि--लोहपञ्जर -पड़िलग्ग-

---

(प) रे रे शङ्करपुरवासिजानपदाः! एष खलु यौवनारम्भ-गर्व्व-सम्भृत-दुर्विषहामर्ष-रोष व्यतिकर-वलात्कार-विघटितोद्घाटित-लौहपञ्जर-प्रतिलग्न-सङ्कलितनिगलः, निजलीला-विलासोद्वेल्लितवल्लभ तुङ्ग-लाङ्गुल-विकट-वैजयन्तिका-विषम-डामरोद्दाम-शरीर-

---

यदाश्रास्यते; तदेतत् सर्वदा कुचमण्डलस्थितया सततसमाहृतया त्वया अनायासेनैव लब्धमित्यहो सौभाग्यं तवेति भावः।

अत्र त्वयैव जितं न तु मया इति प्रतीतेरार्थी परिसंख्याऽलङ्कारः, विलासवैजयन्तीति निरङ्गं केवलरूपकं, तृतीयचरणे छेकानुप्रासश्च इत्येतेषां मिथोनैरपेक्ष्यात् संसृष्टिः। यच्छब्दस्योत्तरवाक्यगतत्वेन तच्छब्दानपेक्षणात् न विधेयाविमर्शदोषः।

अत्र पुष्पं नाम प्रतिमुखसन्धेरङ्गम्। तथा च साहित्यदर्पणे।

"पुष्पं विशेषवचनं मतम्।"

तथा रमणीयत्वेन मालतीकुचमण्डलस्याश्रयाकाङ्क्षाप्रतीतेः स्पृहा नाम नाट्यालङ्कारश्च। यथा तत्रैव।

"आकाङ्क्षा रमणीयत्वात् वस्तुनो या स्पृहा तु सा।"

"चलापाङ्गां दृष्टिमित्यादि, वयं तत्त्वान्वेषान्मधुकर! हता स्त्वं खलु कृती" इत्यन्तं शाकुन्तलीयपद्यं स्मरतेव भवभूतिना पद्यमिदं रचितमितीव प्रतीयते।

पुष्पिताग्रा वृत्तम्॥ १५॥

---

(१) अयं पाठः कुत्रचिन्नास्ति।

(२) सङ्करघराधिवासिणो आणवदा इति पाठभेदः।

(३) जोव्वणारम्भभरिददुव्विसहा इति पाठः कुत्रचित्।

संगलिअ-णिअलो, (१) णिअलीला-बिलासुब्बेलिअ-बल्लह-तुङ्ग-लङ्गूल-(२) बिअड़-बेजअन्तिआ-बिसम-डामरुद्दाम (३) सरीर सण्णिबेसो, मड़ादो अवक्कमिअ, तक्खण-सतिस कबलिदाणेअ देहिदेहाबअब-मज्भ-णिठ्ठरत्थिखण्ड--खण्डण-टङ्कार--कड़कड़ाअन्त-करवत्त-कठिणदाढ़ा-कराल-मुहकन्दरो, पअण्डबज्ज णिग्घाद ४) दारुण-चबेढ़ामोड़िद कबलिदाणेअ-(५) णरतुरङ्ग जंगलुग्गार भरिद गलगुहागब्भ-गम्भीर घग्घरो, रङ्गिगल्लूरण सद्द संदब्भ परिपूरिदणहत्थलो, णिहद णिप्पेसिद णट्ठ णिट्ठाविदासेस-जण-णिबहो, कठोर-णाहर-कप्परा-क्कमण णिद्दअ-

सन्निवेशः मउादपक्रम्य, तत्क्षण सतृष्ण कवलितानेक देहि-देहावयव-मध्य निष्ठुरास्थिखण्ड खण्डन-टङ्कार-कटकटायमान-करपत्र-कठिन-दंष्ट्राकराल--मुखकन्दरः, प्रचण्डवज्र-निर्घात-दारुण-चपेटामोटित--कवलितानेक-नरतुरङ्ग-जाङ्गलोद्गार--भरित-गल-गुहागर्भ--गम्भीरघर्घरः रङ्गिगल्लूरणशब्दसन्दर्भ-परिपूरित-नभस्तलः, निहत-निष्पेषित-नष्ट-निष्ठापिताशेषजन

(प) रे रे शङ्करेति। यौवनारम्भेण यो गर्व्वः कन्दर्पः तेन सम्भृतौ पूर्णौ दुर्विषह्यौ अन्यैरसह्यौ यौ अमर्षरोषौ अक्षमाकोपौ तयो र्व्यतिकरेण संमिश्रणेन यो बलात्कारः बलप्रवृत्तिः, तेन विघटितम् आदौ भग्नम् उद्घाटितं पश्चादपसारितं यत्

---

(१) पड़िवड्ढ सिङ्खला-णिरोह-पड़िभङ्ग-सङ्कलिद इति पाठान्तरम्।

(२)...विलासपेरन्तुव्वेल्लन्त-वहलुतुङ्ग इत्यपि पाठः।

(३) डम्बरुद्दाम इति भिन्नपाठः।

(४) विअड़-विअम्भणुद्दामदारुण इति पाठोऽपि।

(५) परिमिलिअ। पुस्तकान्तरे पाठोऽयम्।

दारिद- (१) जन्तु-गत्तावअव प्पउत्त-रत्त-कद्दमिद-गइअहो, दुट्ठ-सद्दूलो कुविअ-किअन्त-लोलाइदं करेदि। ता पडिरक्खध जधासत्ति अत्तणो जीविदं त्ति (२)। (प)

---

विवरः, कठोर-नखर-कर्पराक्रमण-निर्द्दय दारित-जन्तु-गात्रावयव-प्रवृत्त रक्त-कर्द्दमित-गतिपथः, दुष्टशार्दूलः, कुपित-कृतान्त-लीलायितं करोति। तत् परिरक्षत यथाशक्ति आत्मनो जीवितमिति।

लौहपञ्जरं तत्र प्रतिलग्नः संसक्तः, सङ्कलितः स्वपादद्वयात् स्खलितः निगलः शृङ्खला यस्य सः।

निजः स्वकीयो यो लीलाविलासः स्वच्छन्दतया विहारः चिरात्परं पञ्जरशृङ्खलाबन्धापगमात् इच्छानुरूपं विचरणं तेन उद्वेलितं ऊर्द्ध्वं सञ्चालितं वल्लभं प्रियं, तुङ्गं उच्चं लाङ्गूलमेव विकटा भीषणा वैजयन्तिका पताका, तया विषमो दुर्दर्शः, डामरो भीषणः, उद्दामो विशालः, शरीरसन्निवेशो देहसंस्थानं यस्य सः।

मठादपक्रम्य स्वकीयबन्धनमन्दिरान्निर्गत्य। तत्क्षणे अपक्रमणस्यैव समये सत्वरं यथास्यात्तथा कवलितानां ग्रस्तानां मुखमध्ये प्रवेशितानां अनेकेषां देहि-देहावयवानां प्राणिशरीरस्थहस्तपदाद्यङ्गानां मध्ये निष्ठुराः कठिना ये अस्थिखण्डाः तेषां खण्डनस्य दन्तैश्चर्व्वणस्य यष्टङ्कारः शब्दविशेषः, तेन कटकटायमानाः कटकटशब्दं कुर्वाणाः याः करपत्रवत् क्रकचवत् ) करात् इति यस्य वङ्गभाषा ) कठिनाः दंष्ट्रा दन्ताः ताभिः करालो भयङ्करः मुखकन्दरः वदनविवरं यस्य सः।

तथा प्रचण्डवज्रनिर्घातवत् दारुणो यश्चपेटः चपेटाघातः तेन आमोटितानि आदौ मर्द्दितानि पश्चात् कवलितानि ग्रस्तानि गलाधःकृतानीत्यर्थः यानि अनेकनरतुरङ्ग

(१) दलिआकइ इति पाठभेदः।

(२) ता रक्खध, जधासत्ति पिअसहीए मदअन्तिआए जीविदं त्ति इति पाठान्तरम्।

प्रविश्य सम्भ्रान्ता बुद्धरक्षिता (१)। **परित्ताअध, एसा णो पिअसही**

(फ) परित्रायध्वम्। एषा नः प्रियसखी, अमात्यनन्दनस्य भगिनी मदयन्तिका एतेन दुष्ट-शार्दूलेन विनिहत-विद्रावितारोष परिजना अभिभूयते।

जाङ्गलानि बहुतरमनुष्यघोटकमांसानि, तेषां उद्गारेण उदरात् पुनरुत्थापनेन भरितः परिपूर्णः यो गलगुहागर्भः गलविवरमध्यः तत्र गम्भीरः घर्घरः तद्रूपः शब्दो यस्य सः।

"जाङ्गलं (क्ली) मांसम्"। "घर्घरः (पुं)...ध्वनिः"। इति च शब्दकल्पद्रुमः। रल्लीति देशीयपदं दीर्घमधुरवाचि। गल्लूरणशब्दो मांसभक्षणसमय-कुपित-शार्दूल-जातिप्रयुक्तं कण्ठगर्जित"मिति त्रिपुरारिः। तेन रल्लिदीर्घमधुरः गल्लूरणशब्दः मांस-भक्षणकालीनध्वनिविशेषः तस्य सन्दर्भेण परम्परया परिपूरितं नभस्तलं गगनदेशो येन सः।

केचित् निहता व्यापादिताः, केचित् निष्पिष्टा चूर्णिताः, केचित् नष्टाः अदर्शनं प्रापिताः सकर्म्मकत्वमत्र नशधातोर्विवक्षितं, केचित् निष्ठापिताः भयविवशतया तत्र तत्रैव स्थापिताः अशेषाः समस्ता जननिवहा येन सः।

तथा कठोरा नखरा नखाः कर्पराः शिरोऽस्थीनीव तेषामाक्रमणेन प्रहारैरित्यर्थः निर्द्दयं निष्ठुरं यथा तथा दारिता विदारिता ये जन्तुगात्रावयवाः प्राणिनां हस्तपदादीनि शरीराङ्गानि तेभ्यः प्रवृत्तैः वहिर्भूतैः रक्तैः शोणितैः कर्द्दमितः पङ्कीकृतः गतिपथो येन सः। दुष्टो हिंसावृत्तिः शार्दूलः व्याघ्रः।

कुपितकृतान्तलीलायितं क्रुद्धयमलीलाचरणम्।

अत खल्वस्माद् व्याघ्रादपि भीषणतरोऽयं समासराशिरिति मन्यन्ते काव्यरसिकाः।

चूलिकाख्योऽयमर्थोपक्षेपकः "अन्तर्यवनिकासंस्थैः सूचनाऽर्थस्य चूलिका।" इति लक्षणात्।

(१) प्रविश्य बुद्धरक्षिता। ससासम् इति कुत्रचित् पाठः।

अमच्चणन्दणस्स वहिणिआ सदअन्तिआ एदिणा दुट्ठसद्दलेण विणिहद विद्दाविआसेसपरिअणा अहिभवीअदि । ( फ )

माल । लवङ्गिए ! अहो प्पमादो ( १ ) ( ब )

माध । ससम्भ्रमसुत्थाय । बुद्धरक्खिते ! क्वासौ ।

माल । दृष्टा सहर्षसाध्वसमात्मगतम् । अम्महे ! एसो वि एत्थ ( २ ) एव्व । ( भ )

( ब ) लवङ्गिके ! अहो प्रमादः ।

( भ ) एषोऽपि अत्रैव ।

( फ ) प्रविश्येति । सम्भ्रान्ता त्वरान्विता । विनिहताः व्यापादिताः विद्राविताः प्रमर्द्दिताश्च अशेषाः सकलाः परिजना यस्याः सा । अतएव स्वपरिजनोऽपि रक्षको न सम्भवतीति भावः । अभिभूयते आक्रम्य व्यापाद्यते ।

( ब ) मालेति । अहो इति विषादार्थे । प्रमादः अनवधानता नगररक्षिवर्गस्येति शेषः । अथवा प्रमादो विपत् । भवभूतिरयं प्रायेण विपदर्थ एव प्रमादशब्दं प्रयुङ्क्ते ।

( भ ) मालेति । दृष्टा माधवमिति शेषः । सहसा सतताभिलषितप्रियतमदर्शनात् हर्षः, निर्जने मामनुस्य दृष्टा यदि कश्चित् पितरं निवेदयेदित्याशङ्कया साध्वसं भयं ताभ्यां सहेति सहर्षसाध्वसम । अम्महे इति शौरसेन्यादिभाषायां सप्रमादचिन्ताद्योतकमव्ययम् । तथाचोक्तम् ।

"चिन्तायां सप्रमादायां अम्महे इति कल्पितम् ।
शब्दरूपं विशेषेण प्रयोक्तव्यं प्रयोक्तृभिः ॥"

संस्कृते तु तादृशशब्दाभावात् यथाकथञ्चिदहोशब्देनानुवादः कृतः । एष माधवः ।

( १ ) सहि लवङ्गिए ! अहो महन्तो पमादो इति पाठोऽपि दृश्यते ।

( १ ) इहत्थो इति पाठान्तरम् ।

माध । स्वगतम् । हन्त ! पुण्यवानस्मि, यदहमतर्कितोपनत-दर्शनोल्लसितलोचनया ( १ ) अनया—( म )

अविरलमिव दाम्ना पौण्डरीकेण नद्धः

स्नपित इव च दुग्धस्रोतसा निर्भरेण * ।

कवलित इव कृत्स्नश्चक्षुषा स्फारितेन

प्रसभममृतवर्षेणेव (२) सान्द्रेण सिक्तः ॥१६॥

( म ) माधवेति । हन्त हर्षे । अतर्कितं पूर्वमचिन्तितं अथ च उपनतं उपस्थितं यत् दर्शनं समावलोकनं तेन उल्लसिते उत्फुल्ले लोचने यस्याः तया, अनया मालत्या नद्ध इत्यादिश्लोकस्थक्रियाणां कर्त्तृपदसंगत् । अहमिति तु तत्कर्मपदम् ।

अविरलमिति । अनया मालत्या, कर्त्र्या स्फारितेन प्रीतिप्रफुल्लेन चक्षुषा करणेन पुण्डरीकाणां सिताम्भोजानामिदमिति पौण्डरीकं तेन, दाम्ना माल्येन अविरलं घनं सर्वाङ्गेषु निविडं यथा स्यात्तथा नद्धो बद्ध इव । निर्भरेण अतिमात्रेण दुग्धस्रोतसा च स्नपित इव । कृत्स्नः सकलोऽहं सर्वाणि ममाङ्गानीत्यर्थः कवलित इव चिरस्यानन्तर-लाभात् सतृष्णतया ग्रस्त इव । तथा सान्द्रेण घनेन अमृतवर्षेण सुधावृष्ट्या प्रसभं बलेन सिक्त इव । सर्वत्र स्मितसमेतत्वात् प्रीतिनिर्मलधवलत्वाच्चेति भावः ।

अत्र भावाभिमानि-वाच्य-क्रियोत्प्रेक्षाचतुष्टयस्य परस्परनिरपेक्षतया संसृष्टिरल-ङ्कारः । समुच्चयनीयेन दुग्धस्रोतसेत्यनेनैव समभिव्याहारात् चकारस्य तत्पूर्व-पाठेऽपि न अक्रमतादोष इति वदन्ति ।

मालिनी वृत्तम् ॥ १६ ॥

( १ )—दर्शनोल्लसितया इति पाठभेदः ।

* दुग्धस्रोतसां निर्भरेण इति पाठोऽपि ।

( २ ) प्रसभममृतमेघेनैव इत्यपि पाठः ।

बुद्ध। महाभाअ! (१) उज्जाणवाहिरत्थामुहे। (य)

माधवः। साटोपं परिक्रामति (२)। (र)

काम। वत्स! अप्रमत्तो भूत्वा विक्रमस्व (३)। (ल)

माल। जनान्तिकम्। लवङ्गिए! हद्धी हद्धी! (४) संसओ क्खु जादो। (व)

सर्व्वाः। त्वरितं परिक्रामन्ति (५)। (श)

---

(य) महाभाग! उद्यानवाह्यरथ्यामुखे।

(व) लवङ्गिके! हा धिक् हा धिक्! संशयः खलु जातः।

(य) बुद्धेति। मालतीमाधवयो रुक्तिद्वयस्य स्वगतत्वात् 'क्वासौ' इति माधवेन पूर्वपृष्टस्यैवोत्तरमाह महाभागेति। उद्यानवाह्यरथ्यामुखे शार्दूलेनाभिभूयमाना मदयन्तिका वर्त्तत इत्यर्थः।

(र) माधव इति। साटोपं सदर्पं, परिक्रामति तत्र गन्तुं पदक्षेपं करोति।

(ल) कामेति। अप्रमत्तः सावधानः सन्। विक्रमस्व मदयन्तिकोद्धाराय उत्साहस्व शक्तिं प्रकाशयेत्यर्थः। "वृत्त्युत्साहतायनेषु क्रम" इति वचादित्वादात्मनेपदम्।

(व) मालेति। संशयः, मदयन्तिका शार्दूलाक्रमणात् मुक्तिं प्राप्स्यति नवेति सन्देहः।

(श) सर्वा इति। परिक्रामन्ति मदयन्तिकाया अवस्थामवलोकयितुमित्यर्थः।

(१) एसो क्खु इत्यधिकः पाठः कुत्रचित्।

(२) माधवः। (साटोपं) अप्रमत्तोऽस्मि इति भिन्नः पाठः।

(३) अयं पाठः कुत्रचिन्नास्ति।

(४) कुत्रचित् 'हद्धी हद्धी' इति पाठो नास्ति।

(५) अयं पाठोऽपि कुत्रचित् नास्ति।

माध । अयं हृश (१) सबीभत्सम् । **अहह ! । (ष)**

**संसक्तत्रुटितविवर्त्तितान्त्रजाल-**
**व्याकीर्णस्फुरदपवृत्तरुण्डखण्डः ।**
**कीलालव्यतिकरगुल्फदघ्नपङ्कः**
**प्राचण्ड्यं वहति नखायुधस्य मार्गः ॥ १७ ॥**

**अहो ! प्रमादः । ( स )**

---

( ष ) माधेति । सबीभत्सं सघृणम् । अहहेत्यद्भुते खेदे वा ।

संसक्तेति । संसक्तानि पथिपार्श्वस्थस्तम्भादौ प्रथमं संलग्नानि, पश्चात् त्रुटितानि महाकर्षणेन छिन्नानि, विवर्त्तितानि तत्क्षणात् रुण्डैरेव सशब्दं परावर्त्तितानि पथिपार्श्वस्थस्तम्भादौ दृढलग्नांशानपहाय आनीतानीत्यर्थः यानि अन्त्रजालानि नाडी-विशेषसमूहाः ( अन्त्र आंतुरी, आंत् इति यस्य वङ्गभाषा ) तैर्व्याकीर्णा व्याप्ताः, स्फुरतां सद्योव्यापादितत्वात् स्पन्दमानानाम् अपवृत्तानां विपर्य्यस्तानां रुण्डानां कबन्धानां खण्डा यस्मिन् सः । तथा कीलालानां शोणितानां व्यतिकरेण सम्मिश्रणेन गुल्फदघ्नः गुल्फपरिमाणः पङ्कः कर्द्दमो यत्र स तथोक्तः, नखा एवायुधानि यस्य तस्य शार्दूलस्य मार्गः तत्क्षणातिक्रान्तपथः प्राचण्ड्यम् प्रतिभयङ्करतां वहति धारयति ।

अत्र स्वभावोक्तिरलङ्कारः, तथा प्राचण्ड्यवहनं प्रति प्रथमोक्तपदद्वयार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गञ्च, अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः ।

"रुण्डः ( पुं ) कबन्धः" । "कीलालं ( क्री )...रक्तम्" इति च शब्दकल्पद्रुमः ।

गुल्फदघ्नेति "प्रमाणे मात्रट्द्वयसट्दघ्नट्" इति दघ्नट्प्रत्ययः ।

प्रहर्षिणी वृत्तम् ॥ १७ ॥

( स ) अहो इति । प्रमादोऽनवधानता रक्षिवर्गस्येति शेषः । यदस्यां विपदि कोऽपि रक्षिपुरुषो नास्तीति भावः । अथवा प्रमादो विपत् ।

( १ ) एष पाठोऽपि क्वचित् न दृश्यते ।

**वयं बत विदूरतः क्रमगता पशोः कन्यका ।**

सर्वाः । **हा मदअन्तिए ! । (ह)**

कामन्दकीमाधवौ । सहर्षाकूतम् । (च)

**कथं तदवपातिता-(१)दधिगतायुधः पूरुषात् (२)**

**कुतोऽपि मकरन्द एत्य सहसैव मध्ये स्थितः ।**

इतराः । **साहु, महाभाअ ! साहु । (क)**

(ह) हा मदयन्तिके ! ।

(क) साधु, महाभाग ! साधु ।

---

विपदमेवाह वयमिति । बत खेदे । वयं विदूरतः विशेषदूरे तिष्ठाम इति शेषः, कन्यका मदयन्तिका न पशोः शार्दूलस्य क्रमम् एकमेव पादक्षेपं गता एकेनैव पादक्षेपेण लभ्यं स्थानं वर्त्तते इत्यर्थः । अत एवास्माभिरस्या रक्षणस्यासम्भवात् अप्रतिकार्य्या विपदिति भावः ।

(च) कामेति । विपन्नाया उपयुक्तरक्षकोपगमादुभयोरेव हर्षः । अनेन रक्षार्थमागमनेन मङ्गलसं न् तदा मदयन्तिकामकरन्दयोर्जातानुरागः सहसधा वृद्धिमुपयास्यतीति कामन्दक्या आकूतमभिप्रायः, एतेन शरम्मन्यस्य मकरन्दस्य पूर्णपरीक्षा भवेदिति माधवस्याकूतम्, ताभ्यां सहेति सहर्षाकूतम् ।

कथमिति । हर्षे कथंशब्दः । तेन शार्दूलेन अवपातितात् निहतात् पूरुषात् कस्माच्चित् नरात् अधिगतं लब्धम् आयुधम् असिर्येन सः अधिगतायुधः मकरन्दः कुतोऽपि अस्माभिरज्ञातदेशात् एत्य आगत्य सहसैव कियन्तमपि विवेचन-विलम्बमकृत्वैव मध्ये मदयन्तिकाशार्दूलयोरन्तराले स्थितः, मदयन्तिकारक्षणाय शार्दूलं निहन्तुमिति भावः ।

(क) इतरा इति । साधु महापौरुषं कृतमिति शेषः । हर्षे साधुशब्दस्य द्विरुक्तिः ।

(१) तदभिपातितादिति पाठान्तरम् । (२) सम्भ्रमादिति पाठभेदः

कामन्दकीमाधवौ। सभयम्। **दृढञ्च पशुना हतो—**

इतरा। **अत्याहितं अत्याहितं (१)। (ख)**

कामन्दकीमाधवौ। सहर्षम्। **—व्यसुरसौ कृतश्चामुना (२)॥ १८॥**

(ख। अत्याहितम् अत्याहितम्।

---

दृढमिति। किञ्चेति चार्थः। पशुना शार्दूलेन दृढं तीव्रम् आहतः नखैर्वज्रोपम प्रहृतः मकरन्द इत्यर्थः। अत एवोक्तं सभयमिति।

(ख) इतरा इति। अत्याहितं महाभयमुपस्थितम्। अमुना व्याघ्रकृतप्रहारेणेति भावः।

व्यसुरिति। अमुना मकरन्देन असौ शार्दूलः विगता असवः प्राणा यस्येति व्यसुः सः कृतश्च। प्रहारानन्तरमेव असिप्रहारेण शार्दूलो व्यापादितश्चेत्यर्थः। अत एवोक्तं सहर्षमिति। चकारोऽयं तात्कालिकत्वसूचनाय। धन्योऽयं महावीरो मकरन्द इति भावः।

अत्र रौद्ररसस्य त्रासहर्षाख्यभावयोरङ्गत्वेन रसवदलङ्कारः। तथाऽत्र पृथ्वीवृत्ते अष्टमाक्षरे यतेर्नियमात् 'कृतोऽपि मकरन्द एव' इत्यत्र तदभावात् काव्यादर्श-सरस्वती-कण्ठाभरणयोर्मते यतिभङ्गदोषः। तथाच—

काव्यादर्शे—"श्लोकेषु नियतस्थानं पदच्छेदं यतिं विदुः।
तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं यथा॥"

सरस्वतीकण्ठाभरणे—"अस्थाने विरतिर्यस्य तत्तु भग्नयतीष्यते।"

किन्तूपजीव्यसाहित्यदर्पणकारमते तद्दोषानुक्तत्वेनानङ्गीकारात् पुरुषोत्तमादिमते यतेरस्वीकारात् भगवच्छङ्कर-कालिदास-मुरारि-जयदेव-प्रभृतिभिर्बहुतर-ग्रन्थभाव-

(१) कुत्रचित् पाठोऽयं नास्ति।

(२) प्रमथितश्च दंष्ट्रायुध इति भिन्नः पाठः।

इतरा: । सानन्दम् । **दिट्ठिआ पडिहदं दुज्जादं (१) । (ग)**

(ग) दिष्ट्या प्रतिहतं दुर्जातम् ।

व्यवहाराच्च, नोक्तदोषः । किन्तु प्रथमे पादे शार्दूलरूपपशुविशेषे मदयन्तिकारूपे कन्याविशेषे च वक्तव्ये 'पशोरिति कन्यकेति च सामान्यद्वयमुक्तं' द्वितीये असिरूपायुधविशेषे वाच्ये 'अधिगतायुध' इति सामान्यं, तथा चतुर्थेऽपि शार्दूलरूपपशुविशेषे वक्तव्ये 'पशुने'ति सामान्यमुक्तमिति चत्वार एव विशेषे अविशेषाख्यदोषाः, किञ्च प्रथमे पादे भेदबोधकः किन्तु-शब्द स्तु-शब्दो वा वक्तव्यः किन्तु नोक्त इति वाच्याऽनभिधानतादोषश्च । तेन श्लोकोऽयमेवं पठनीयः, यथा—

अमुष्य मदयन्तिका क्रमगता, त्वहं दूरतः
कथं तदभिपातितादधिगतासिकः पूरुषात् ।
कुतोऽपि सहसाऽन्तरेऽस्त्र मकरन्द एव स्थितः
हृदश्च प्रहतोऽमुना, व्यसुरमौ च सख्या कृतः ॥

इति पाठे तु यतिभङ्गदोषोऽप्यपास्तः । तथाच अमुष्येति शार्दूलस्यैव निर्देशः । किन्तु शब्दार्थे तुशब्दः । वयमिति प्रकृतपाठे "वास्मदो"ति बहुवचनमासीत्, एतत्पाठे तु अहमिति तद्वैकल्पिकमेवपदम् । अधिगतः असिर्येनेति अधिगतासिकः बहुव्रीहौ कप्रत्ययः । सहसैवेति प्रकृतपाठे एवशब्दस्य न तादृश्यावश्यकता, सुतरां सहसेतिमात्रोक्तावपि न पुनर्नियमेऽनियमाख्यदोषप्रसङ्गः । अत, दृश्यमाने अन्तरे इत्यर्थः । प्रहत इत्यत्र प्रशब्दस्य संयुक्तत्वेऽपि तत्पूर्वस्य "प्रह्रे वे"ति विकल्पेन दीर्घत्वाङ्गीकारात "झटिति प्रविश गेह" मित्यादिवत् न छन्दोभङ्गः । अमुनेति पुनः शार्दूलस्यैव निर्देशः । सख्येति स्वसखित्वेनैवोपस्थितेः स्ववयस्येन मकरन्देनेत्यर्थः । इति सर्वमवदातमिति सुधीभिर्विवेचनीयम् ।

"कथं हर्षे च गर्हायां प्रकारार्थे च सम्भ्रमे । प्रश्ने सम्भावनायाञ्चे"ति मेदिनी ।

(१) इतरा: । अम्माहिदं इति पाठान्तरम् ।

काम। साकूतम्! **कथं व्यालनखरप्रहारनिःसृतरक्तप्रवाहः (१) क्षितितलनिषण्ण-(२) खड्गलताऽवष्टम्भनिश्चलः, सम्भ्रान्त-मदयन्तिकावलम्बितस्ताम्यतीव वत्सो मे मकरन्दः (३)।** (घ)

इतरः। **हद्धी हद्धी! गाढ़प्पहारदाए किलम्मदि महा-भाओ।** (ङ)

---

(ङ) हा धिक् हा धिक्! गाढ़प्रहारतया क्लाम्यति महाभागः।

---

एकस्यैव पद्यस्य अन्तराऽन्तरा जनान्तरवाक्यान्तरवती भवभूतेरियमनीदृक्चमत्-कारिणी रचनाचातुरीति काव्यरसिकाः परिमोदन्ते।

पृथ्वीवृत्तम्॥ १८॥

(ग) इतरा इति। दुर्जातं व्यसनं विपदिति यावत् प्रतिहतं मकरन्देन नाशितं शार्दूलवधादिति भावः। "दुर्जातं व्यसनं क्लीवमसम्यग्जातवस्तुनि" इति केशवः।

(घ) कामेति। अयं मदयन्तिकामकरन्दयोः परस्परसंस्पर्श एव भाविमहान्-रागनिदानमित्यभिप्राय आकूतं तेन सहेति साकूतम्। सम्भ्रमे कथंशब्दः। व्यालस्य हिंस्रपशोः शार्दूलस्य, नखरप्रहारेण निःसृतो रक्तप्रवाहो यस्य सः। क्षितितले निषण्णः लग्ना या खड्गलता तस्याः अवष्टम्भेन आश्रयेण निश्चलो निस्पन्दः। सम्भ्रान्तया त्वरान्वितया मदयन्तिकया अवलम्बितो धृतः। ताम्यति ग्लायति मुह्यतीति यावत्।

"अथ श्वापदे व्यालस्तथा हिंस्रपशुः स्मृत" इति हलायुधः।

(ङ) इतरा इति। गाढ़स्तीव्रः प्रहारो यस्य तस्य भावः, तया। क्लाम्यति मुह्यति।

(१) ...रक्तनिवह इति क्वचित् पाठः।

(२) विषक्त इत्यपि पाठः।

(३) ताम्यति वत्सो मकरन्द इति पाठभेदः।

माध। **कथं प्रमुग्ध एव।** कामन्दकीं प्रति (१)। **भगवति! परित्रायस्व माम्। (च)**

काम। **वत्स! अतिकातरोऽसि। नन्वेहि पश्यावस्तावत् (२)। (छ)**

इति निष्क्रान्ताः सर्वे (३)

---

# इति मालतीमाधवे शार्दूलविद्रावणो नाम (४) तृतीयोऽङ्कः ॥३॥

(च) माधेति! कथंशब्दः सम्भावनायाम्। प्रमुग्धो मूर्च्छितः। मां मित्रविपत्तेर्विपन्नमिति भावः। अत्र विरोधो नाम प्रतिमुखसन्ध्यङ्गम्। तथाच साहित्यदर्पणे—

"विरोधो व्यसनप्राप्तिः।"

(छ) कामेति। आमन्त्रणे ननुशब्दः। अस्य हि तृतीयाङ्कान्ते बुद्धरक्षितादिभिः पात्रैस्तु तृतीयाङ्कस्याविच्छेदेन सूचितत्वात्, चतुर्थाङ्कस्य च एतदङ्कस्याङ्गविशेषवदवतीर्णत्वाच्च 'प्रविश्य सम्भ्रान्ता बुद्धरक्षिता। परित्तायध, एसा णो पिअसही' इत्यादि नन्वेहि पश्यावस्तावदित्यन्तः अङ्कावतारो नामार्थोपक्षेपकविशेषः तथाच साहित्यदर्पणे—

"अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः।
यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः॥"

इति श्रीहरिदाससिद्धान्तवागीश-विरचितायां मालतीमाधवटीकायां भावमनोहरायां तृतीयाङ्कविवरणं समाप्तम्॥ ३॥

(१) क्वचिदयं पाठो नास्ति। (२) तदेहि तावत् पश्याव इति भिन्न पाठः।
(३) परिक्रम्य निष्क्रान्ताः सर्वे इति पाठः क्वचित्। (४) क्वचिदेष पाठो नास्ति।

# चतुर्थोऽङ्कः



ततः प्रविशतो मदयन्तिकामालतीभ्यामवलम्ब्यमानौ मुग्धौ मकरन्दमाधवौ, सम्भ्रान्ता कामन्दकी बुद्धरक्षिता लवङ्गिका च (१)। (क)

मद०। **पसीद भअवदि! परित्ताहि (२) मदअन्तिआणिमित्तं संसइदजीविदं विवण्णाणुकम्पिणं (३) महाभाअं। (ख)**

इतराः। **हद्धी हद्धी! किं दाणिं अम्हेहिं एत्थ पेक्खिदव्वं। (ग)**

---

(ख) प्रसीद भगवति! परित्रायस्व मदयन्तिकानिमित्तं संशयितजीवितं विपन्नानुकम्पिनं महाभागम्।

(ग) हा धिक् हा धिक्, किमिदानीमस्माभिरत्र प्रेक्षितव्यम्।

---

(क) तत इति। मदयन्तिकया अवलम्ब्यमानो मकरन्दः, मालत्या च माधव इति यथासंख्येनान्वयः। नचानयोरेतेन प्रागल्भ्यमाशङ्कनीयं कस्यचिदपि विपदागमे तत्प्रतिकारचेष्टाया दयाप्रणोदितोपकाररूपत्वात् सहृदयमात्रस्यैव तत्सम्भवात्।

(ख) मदेति। महाभागं मकरन्दम्। सर्वेषामेव जीवनदानहननयोः कामन्दक्याः सामर्थ्यमस्तीति मन्यमानाया इयमनुनयोक्तिरिति ज्ञेयम्।

(ग) इतरा इति। माधवमकरन्दयोर्जीवनापायमाशङ्क्य शोककातर्यादिय-

---

(१) ततः प्रविशतो मदयन्तिकालवङ्गिकाभ्यामवलम्बितौ प्रमुग्धौ माधवमकरन्दौ सम्भ्रान्ता कामन्दकी मालती बुद्धरक्षिता च। इति पाठान्तरम्।

(२) परित्ताहि परित्ताहि इति द्विरुक्तिः क्वचित्।

(३) आवण्णजणाणुकम्पिणं इति पाठभेदः।

काम । उभौ कमण्डलूदकेन सिञ्चति । ननु भवत्यः ! पटाञ्चलैर्वीजयध्वम् ( १ ) ।

मालत्यादयस्तथा कुर्वन्ति ।

मक । समाश्वस्यावलोक्य च । वयस्य ! अतिकातरोऽसि, किमेतत्, ननु स्वस्थ एवास्मि । ( घ )

मद । सहर्षम् । अम्महे ! पड़िबुद्धं दाणिं मअरन्दपुण्णिमाचन्देण ( २ ) । ( ङ )

माल । माधवस्य ललाटे हस्तं दत्त्वा । महाभाअ ! दिट्ठिआ वड्ढसि, णं भणामि पड़िवसचेदणो महाभाओ त्ति ( ३ ) । ( च )

( ङ ) अहो ! प्रतिबुद्धमिदानीं मकरन्दपूर्णिमाचन्द्रेण ।

( च ) महाभाग ! दिष्ट्या वर्द्धसे, ननु भणामि प्रतिपन्नचेतनो महाभाग इति ।

---

मुक्ति: । अत्र कामन्दक्याः कृतेऽप्यनुनये माधवमकरन्दयोर्मूर्च्छापगोदनोपायानवलम्बनदर्शनेन तदनुनयस्यापरिग्रहसम्भावनात् विधूतं नाम प्रतिमुखसन्धेरङ्गम् ।

"कृतस्यानुनयस्यादौ विधूतं त्वपरिग्रहः ।" इति साहित्यदर्पणलक्षणात् ।

( घ ) मकेति । स्वस्मिन् स्वभावे तिष्ठतीति स्वस्थः प्रकृतिस्थः ।

( ङ ) मदेति । प्रतिबुद्धं चैतन्यं लब्धम् । मकरन्दपूर्णिमाचन्द्रेणेत्यनेन नयनाह्लादकत्वसूचनात् महाननुरागो व्यज्यते ।

( च ) मालेति । मूर्च्छायाः शीतक्रियाऽपनेयत्वात् तदर्थमेव माधवललाटे

( १ ) पटाञ्चलेन वत्सा वीजयन्तु इत्यपि पाठः ।

( २ )...पूर्णचन्द्रेण इति भिन्नः पाठः ।

( ३ ) सहि लवङ्गिए ! दिट्ठिआ वड्ढसि,णं भणामि पड़िबुद्धो ज्जेवदे पिअवअस्सं पड़िवसचेअणो महाभाओ मअरन्दो त्ति, कुत्रचिदीदृशः पाठो दृश्यते ।

माध । आश्वस्य । वयस्य ! साहसिक ! एह्येहि । इत्यालिङ्गति । *

काम । उभौ शिरस्याघ्राय । दिट्ठिआ जीविदवच्छाऽम्हि (१) । (क)

इतरा । पिअं पिअं (२) णो संवुत्तं । (ज)

सर्वाः । हर्षं नाटयन्ति ।

बुद्ध । जनान्तिकम् । हला (३) मदअन्तिए ! एसो ज्जेब सो । (झ)

(ज) प्रियं प्रियं नः संवृत्तम् ।

(झ) हला मदयन्तिके ! एषः एव सः ।

हस्तार्पणम् । अवधारणे ननुशब्दः । प्रतिपन्नचेतनः लब्धसंज्ञः, महाभागो मकरन्दः । यस्य मच्छोदर्शनात् वात्सल्येन त्वं मच्छितोऽसि, स मकरन्दो लब्धसंज्ञो जातः, सुतरामिदानीमाश्वसिहीति भावः । पूर्वोक्तहेतोरजातापि प्रागल्भ्यं नाशङ्कनीयम् ।

* माधेति । आश्वस्य लब्धसंज्ञो भूत्वा ।

(क) कामेति । शिरस्याघ्राणमतीवस्नेहद्योतकम् । जीवितौ वत्सौ वत्सकल्पौ पुत्रतुल्यौ माधवमकरन्दौ यस्याः सा । अद्य युवयोर्जीवनं सौभाग्यादेव मया लब्धमिति भावः । "वत्सस्तर्णकपुत्रादिवर्षे वत्सन्तु वक्षसि ।" इति विश्वः ।

(ज) इतरा इति । प्रियं प्रियमित्यतिशये द्विरुक्तिः । उभयोर्जीवनमिति शेषः ।

(झ) बुद्धेति । एष एव दृश्यमानो मकरन्द एव सः । यस्तवान्तिके रूपौदार्य्य शौर्य्यादिगुणवत्तया बहुशो मया कथित इति शेषवाक्यं बोद्धव्यम् ।

(१) जीवद्वत्साऽस्मि इति पाठान्तरम् ।

(२) क्वचित् द्विरुक्तिर्नास्ति ।

(३) सहि ! इति क्वचित् पाठः ।

मद। तदा ज्जेव जाणिदं मए, (१) जह एसो माहवो, अग्रं वि सो जणो त्ति। (ञ)

बुद्ध। अवि सच्चवादिनी अहं ?। (ट)

मद। ण क्खु अह्मारिसेसु(२) तुह्मारिसोओ पक्खवादिणीओ होन्ति। माधवमवलोक्य। सहि! मालदीए वि रमणिज्जो इमस्सिं महाणुहावे अनुराअप्पवादो। इति (३) मकरन्दमेव सस्पृहमवलोकयति। (ठ)

---

(ञ) तदैव ज्ञातं मया, यथा एष माधवः, अयमपि स जन इति।

(ट) अपि सत्यवादिनी अहम् ?।

(ठ) न खलु अस्मादृशेषु युष्मादृश्यः पक्षपातिन्यो भवन्ति। सखि! मालत्या अपि रमणीयः अस्मिन् महानुभावे अनुरागप्रवादः।

(ञ) मदेति। यदैव शार्दूलप्रहारेण मूर्च्छितमेनमवलोक्य 'हा वयस्य, इत्यादि विलपन् माधवोऽस्यान्तिकमुपगतः तदैवेत्यर्थः। असकृद्दर्शनान्माधवस्तु परिचित एव, श्रुतश्च एष एव तस्यैकमात्रो वयस्य इति, सुतरां माधवस्यान्योद्देशे वयस्येत्यादिविलापासम्भवात् मत्परित्राणाय शार्दूलप्रहारविकलोऽयमपि स जन इति ज्ञातमिति भावः। मकरन्द इति नामाग्रहणात् मनसा मकरन्दः पतित्वेनावधृत इति व्यज्यते।

(ट) बुद्धेति। अपि प्रश्ने। मदुक्तं रूपौदार्य्यशौर्य्यादिगुणवत्त्वमस्य प्रत्यक्षीकृतं नवेत्यर्थः।

(ठ) मदेति। अस्मादृशेषु सरलस्निग्धसखीजनेषु, युष्मादृश्यः कामन्दकीसहचारिण्यः, पक्षपातिन्यः—कस्यापि जनस्य असत्यपि गुणे पक्षपातेन तत्सत्ताप्रतिपादिन्यः

(१) सहि! जाणीदं एव्व मए इति पाठभेदः।

(२) अह्मारिसेसु इति भिन्नः पाठः। (३) पुनर्मकरन्दमेवेति पाठोऽपि।

काम। स्वगतम्। **रमणीयोर्जितं हि मदयन्तिकामकरन्दयोर्दैवादद्य दर्शनम्।** प्रकाशम्। **वत्स! मकरन्द! कथं पुनरायुष्मानस्मिन्नवसरे मदयन्तिकाजीवितपरित्राणहेतोर्भगवता दैवेन सन्निधापितः।** ( ड )

मक। **अद्याहमन्तर्नगर एव (१) काञ्चिद्वार्त्तामुपश्रुत्य माधवस्य चित्तोद्वेगमधिकमाशङ्कमानस्त्वरितमवलोकितानिवेदितकुसुमाकरोद्यानवृत्तान्तः परापतन्नेव शार्दूलावस्कन्दगोचरगतामेता-( २ ) मभिजातकन्यकामभ्युपपन्नवानस्मि।** ( ढ )

न भवन्ति। अनृतवादित्वेन कामन्दकीप्रियत्वानुपपत्तेः सुतरां त्वदुक्तमत्र्यंगगवानयमिति भावः।

अस्मिन् महानुभावे माधवे। रमणीयो मनोहरः, परस्परमपर्याप्यत्वेन सर्वेषामेव मनोमतत्वादिति भावः। अनुरागप्रवादस्यापि रमणीयत्वं अनुरागस्यातिरमणीयत्वमर्थादायातम्। एतेन नन्दनस्य मालतीप्राप्तिरसम्भवैवेति व्यज्यते।

( ड ) कामेति दर्शनं साक्षात्कारः। रमणीयं मनोहरम्। उद्दंग्यविशेषाभावेन निर्दोषत्वात् दैवोपनतत्वेन केनाप्यनाशङ्कनीयत्वाच्चेति भावः। ऊर्जितं शार्दूलव्यापादनेन बलप्रकाशसहितम्। अनयोः कर्म्मधारयः। आयुष्मान् दीर्घायुर्विशिष्टस्त्वम्। मदयन्तिकाया जीवितपरित्राणहेतोः जीवनरक्षार्थम्। सन्निधापितः आसन्नीकृतः। "आयुष्मानिति वृद्धेन वाच्यो बालः शुभाशयः।" इति भरतोक्तेरायुष्मानित्युक्तम्।

( ढ ) मकेति। अन्तर्नगर एव नगरमध्य एव माधवस्य चित्तोद्वेगं लोकपरम्परया तद्वार्त्ताश्रवणेनेति भावः। अवलोकितया निवेदितः कुसुमाकरोद्यानस्य वृत्तान्तो मालतीमाधवसन्निधानादिवार्त्ता यस्मै सः। त्वरितं परापतन्नेव सत्वरमवागच्छन्नेव। शार्दूलस्य

( १ ) अन्तर्नगरमेव इति पाठान्तरम्।

( २ ) शार्दूलावस्कन्दगोचरामिमामिति पाठभेदः।

मालतीमाधवौ विमृशतः। (ण)

काम। स्वगतम्। वृत्तान्तेन (१) खलु मालतीप्रदानेन भवितव्यम्। प्रकाशम्। वत्स! माधव! दिष्ट्या सुहृद्बुद्ध्या (२) वर्द्धितोऽसि मालत्या, तदयमवसरः प्रीतिदानस्य (३)। (त)

माध। भगवति! इयं हि (४)

यद्व्यालव्रणितसुहृत्प्रमोहमुग्धं
कारुण्याद्-(५) विहितवती गतव्यथं माम्।

अवस्कन्दगोचरगताम् आक्रमणविषयताप्राप्ताम् आक्रमणयोग्यामिति यावत्। अभिजातकन्यकां कुलीनकुमारीम्। अस्याः सौन्दर्य्यादिदर्शनेन कौलीन्यं, सोमन्तसिन्दूरादिदर्शनाभावेन च कौमार्य्यमनुमितमिति भावः। अभ्युपपन्नवान् प्राप्तवान्।

"अभिजातः कुलीने स्यात् न्याय्यपण्डितयोस्त्रिषु।" इति मेदिनी।

(ण) मालतीति। विमृशतः 'का नाम सा वार्त्तेति विचिन्तयतः ऊर्द्धनयनभ्रूसङ्कोचनादिना तच्चिन्तामभिनयत इत्यर्थः।

(त) कामेति। मालतीप्रदानेन नन्दनाय मालतीदानविषयकेण। सा खलु वार्त्ता नन्दनाय मालतीदानविषयिका भवेदित्यनुमीयत इत्यर्थः। अस्माभिरपि यथाकथञ्चित्तथैव श्रुतत्वात् तथैव च माधवस्योद्वेगसम्भवादिति भावः। सुहृद्बुद्ध्या बन्धुज्ञानेन. वर्द्धितोऽसि, ललाटे हस्तस्पर्शादिना सचैतन्यीकृतोऽसि।

यदिति। इयं हि एषैव मालती, यत् यस्माद्धेतोः, व्यालेन हिंस्रजन्तुना शार्दूलेन व्रणितस्य नखरप्रहारेण वक्षसि विक्षतस्य सुहृदः सख्युर्मकरन्दस्य

---

(१) वृत्तेन इत्यपि पाठः। (२) क्वचिदेष पाठो नास्ति।

(३) प्रीतिदायस्य इति भिन्नः पाठः। (४) इयं मालती इति पाठोऽपि।

(५) सौजन्यादिति पाठोऽपि दृश्यते।

तत् कामं प्रभवति पूर्णपात्रवृत्त्या
स्वीकर्त्तुं मम हृदयञ्च जीवितञ्च ॥१॥

लव। पड़िच्छिदो क्खु, णो पिअसहीए अअं पसादो। (थ)

(थ) प्रतीष्टः खलु नः प्रियसख्या अयं प्रसादः।

प्रमोहेण मूर्च्छया मूर्च्छादर्शनजनित-निरतिशयदुःखेनेत्यर्थः मुग्धं मूर्च्छितं मां कारुण्यात् सदयत्वात् गतव्यथं मोहजनकीभूत-सहचरीशोकरहितं विहितवती कृतवती। "पड़िवण्ण-चेदणो महाभाओ" इत्युक्ति-हस्तस्पर्शादिनेत्यर्थः। तत् तस्मात् कामं यथेष्टं पूर्णपात्र-वृत्त्या उत्सवकाले प्रियनिवेदकजनेन बलादाकृष्य गृह्यमाणमाभरणवसनादिकं पूर्णपात्रं तस्य वृत्त्या प्रकारेण पूर्णपात्रमिवेत्यर्थः, मम हृदयञ्च जीवितञ्च स्वीकर्त्तुं प्रतिग्रहीतुं प्रभवति शक्नोति। यतः खल्वियं मालती शुश्रूषापरिश्रमेण मूर्च्छितं मां सचेतनमकरोत्, अतः पूर्णपात्रमिव मया दीयमानं मम हृदयं जीवितञ्च यथेष्टविनियोगयोग्यं कर्त्तुमर्हतीति सरलार्थः।

अत्र आर्या उपमाऽलङ्कारः। हिंस्रविशेषे शार्दूले वक्तव्ये सामान्य-हिंस्रवाचकव्याल-पदाभिधानात् विशेषेऽविशेषाख्यदोषः 'यदव्याघ्रव्रणितसुहृत्प्रमोहमुग्ध'मिति पाठे तु तत्समाधानम्।

इदञ्च उत्कृष्टतरोत्तररूपत्वात् प्रगमनं नाम प्रतिमुखसन्ध्यङ्गम्। तथाच—

"प्रगमनं वाक्यं स्यादुत्तरोत्तरम्।"

"हर्षादुत्सवकाले यदलङ्कारांशुकादिकम्।
आकृष्य गृह्यते पूर्णपात्रं पूर्णानकञ्च तत्॥" इति जटाधरः।

व्रणः सञ्जातोऽस्येति व्रणितः तारकादित्वादितच्। प्रहर्षिणी वृत्तम्॥१॥

(थ) लवेति। प्रियसख्या मालत्या। अयं प्रसादः तवानुग्रहदानम्। प्रतीष्टः प्रतिगृहीतः। मालत्या एतदुक्तौ धृष्टता स्यादिति लवङ्गिकयैदमुक्तमिति बोध्यम्।

मद। स्वगतम्। जाणादि महाभाअधेओ जणो अवसरे गुरुअ-रमणिज्जं मन्तिदुं (१)। (द)

माल। स्वगतम्। किं णाम मअरन्देण उव्वेअकारणं सुदं भविस्सदि। (ध)

माध। वयस्य! का पुनर्ममाधिकोद्वेगहेतुर्वार्त्ता?। (न)

प्रविश्य पुरुषः। वत्से! मदयन्तिके! भ्राता ते ज्यायान-मात्यनन्दनः समादिशति, "अद्य परमेश्वरेणास्मद्भवनमागत्य भूरिवसोरुपरि परं विश्वासमस्मासु च प्रसादमाविष्कुर्वता स्वयमेव मालती प्रतिपादिता। तदेहि, सम्भावयामः प्रसाद"-मिति (२)। (प)

(द) जानाति महाभागधेयो जनः अवसरे गुरुकरमणीयं मन्त्रयितुम्।

(ध) किं नाम मकरन्देन उद्वेगकारणं श्रुतं भविष्यति।

(द) मदेति। महाभागधेयो जनः महाभागो माधवः। अवसरे उपयुक्तसमये गुरुकरमणीयम् अतीवमनोज्ञं मन्त्रयितुं वक्तुम्। उपयुक्तसमये उपयुक्तमिदमुक्तं कृतमित्यर्थः।

(न) माधेति। यामुपश्रुत्य त्वं त्वरितमवागत इति शेषवाक्यं बोद्धव्यम्।

(प) प्रविश्येति। पुरुषः कश्चिदिति शेषः। ज्यायान् अग्रजः। परमेश्वरेण स्वयं महाराजेन। एतेनानतिक्रमणीयवचनत्वं तस्य सूचितम्। परम् अत्यन्तं, विश्वासं 'भूरिवसुर्न मे वचनमुल्लङ्घये' दिति विस्रम्भम्। कथमन्यथा अन्यस्य कन्यामन्यः प्रति-पादयितुमर्हतीति भावः। प्रसादमनुग्रहम्। प्रतिपादिता मह्यं दत्ता। प्रसादं राज्ञ-स्समनुग्रहं, सम्भावयाम उत्सवेन बहुमन्यामहे।

(१) जाणादि महाणुहावो अअं जणो रमणिज्जं मन्तेदुं इति पाठान्तरम्।

(२) सम्भावयावः, प्रमोदमिति च पाठभेदः।

मक। वयस्य! इयं सा वार्त्ता (फ)

मालतीमाधवौ वैवर्ण्यं नाटयतः। (ब)

मद। मालतीं सहर्षमालिङ्ग्य (१) सहि मालदि! तुमं क्खु एक्कणअरणिवासेण सहपंसुकीलणादो पहुदि (२) मे पिअसही आसि (३) बहिणिआ अ, संपदं उण णो घरस्स मण्डणं जादासि। (भ)

काम। वत्से! मदयन्तिके! दिष्ट्या (४) वर्द्धसे भ्रातुर्मालतीलाभेन। (म)

---

(भ) सखि! मालति! त्वं खलु एकनगरनिवासेन सहपांशुक्रीड़नात् प्रभृति मे प्रियसखी आसीर्भगिनिका च, साम्प्रतं पुनर्नो गृहस्य मण्डनं जातासि।

---

(फ) मकेति। यामुपश्रुत्य त्वरितमहमत्रागतः, सा इत्यर्थः। सुतरां मम पुनः कथनं निष्प्रयोजनमिति भावः।

(ब) मालतीति। वैवर्ण्यम् उक्तवार्त्ताश्रवणेन दारुणसन्तापात् मुखमालिन्यादिकम्।

(भ) मदेति। सहपांशुक्रीड़नात् प्रभृति, शैशवे मिलित्वा धूलिखेलनात आरभ्य। नोऽस्माकम्। मण्डनं भूषणम्। राज्ञोऽनुग्रहेण मदयन्तिनन्दनस्य भार्य्यात्वादिति भावः।

(म) कामेति। भ्रातुरग्रजस्य नन्दनस्य। सोल्लुण्ठनेयमुक्तिः।

(१) सहर्षं मालतीमाश्लिष्य इति क्वचित् पाठः

(२) पंसुकीलणादो पहुदि इति पाठोऽपि।

(३) क्वचित् 'आसि' इति पाठो नास्ति।

(४) कुत्रचित् दिष्ट्या इत्यपि नास्ति।

मद। भअवदि ! तुह्माणं आसिसां पहाविण (१)। सहि ! लवङ्गिए ! फलिदा (२) णो मणोरहा तुह्माणं लाहेण। (य)

लव। सहि ! किं अह्माणं वि अत्थि मन्तिदव्वं ? (३)। (र)

(य) भगवति ! युष्माकमाशिषां प्रभावेण। सखि ! लवङ्गिके ! फलिता नो मनोरथा युष्माकं लाभेन।

(र) सखि ! किमस्माकमप्यस्ति मन्त्रयितव्यम् ?

(य) मदेति। प्रभावेण माहात्म्येन। मालत्या लाभो जात इति भावः। अत्र प्रियोक्तिर्नाम नाट्यलक्षणम्। तथाच साहित्यदर्पणे—

"स्यात् प्रमाणयितुं पूज्यं प्रियोक्तिर्हर्षभाषणम्।"

तथा, नोऽस्माकं, पक्षान्तरे तु नो इत्येव निषेधार्थे, तेन कामन्दक्यादीनां चान्वयात् युष्माकं लाभेन मनोरथा नो फलिताः अस्माकमभिलाषा न सफला जाताः नन्दयन्त्याः नन्दनस्य लाभाभावेन माधवस्य च लाभेन विफलीभूता इति भविष्यत् प्रधानार्थान्तर-सूचनादिदमेकं पताकास्थानम्, यथा दर्पणे—

"द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।
प्रधानार्थान्तरापेक्षी पताकास्थानकं परम्॥"

मालतीलाभेन तत्परिजनानामपि लाभावश्यम्भावात् युष्माकमिति बहुवचनम्।

(र) लवेति। अस्माकमपि मन्त्रयितव्यम् अस्मिन् विषये किञ्चित् वक्तव्यमस्ति किम्, अपि तु किमपि नेत्यर्थः। युष्माभिर्लब्धत्वात् वयमपि चिरात्पूर्णमनोरथा जाता इति भावः। इयमपि सोल्लुण्ठनोक्तिः। तथाच युष्माकं मालतीलाभोऽसम्भव एवेति व्यज्यते।

(१) पसादेण इति पाठान्तरम्। (२) भरिदा इति पाठभेदः।
(३) अह्माणं वि एदं मन्तिदव्वं इति भिन्नः पाठः।

मद। सहि! बुद्धरक्खिदे! दाणिं विवाहमहुसवं (१) सम्भावेह्म। (ल)

बुद्ध। सहि! एहि गच्छह्म (२)। इत्युत्तिष्ठतः। (व)

लव। जनान्तिकम्। भअवदि! जह एदे (३) हिअअभरिदुव्वित्त (४) विह्मआणन्द-सुन्दरान्दोलिद-धीरत्तण-मणोहरा पहुत्थन्ति (५) मदयन्तिआमअरन्दाणं दरदलिद-नीलप्पल-दाम-सरिच्छा कड़क्खविक्खेवा; (६) तह तक्केमि (७) मणोरह-णिव्वत्तसम्बन्धा (८) एदे त्ति। (श)

(ल) सखि! बुद्धरक्षिते! इदानीं विवाहमहोत्सवं सम्भावयामः।

(व) सखि! एहि गच्छावः।

(श) भगवति! यथैते हृदयभरितोद्वृत्तविस्मयानन्दसुन्दरान्दोलितधीरत्वमनोहराः,

(ल) सहीति। विवाहमहोत्सवं मालतीमाधवयोरिति शेषः। सम्भावयामः, तत् यौतकदानेन सम्पादयामः। अत्र उद्यमो नाम नाट्यालङ्कारः। यथा दर्पणे "कार्य्यस्यारम्भ उद्यमः।"

(व) बुद्धेति। उत्तिष्ठतः मदयन्तिका-बुद्धरक्षिते इति शेषः।

(श) लवेति। हृदये भरितौ आर्द्रौ चिरं पूर्णौ, परञ्च उद्वृत्तौ तत्र स्थानाऽभावात् बहिर्भूतौ यौ विस्मयानन्दौ ताभ्यां सुन्दरं यथास्यात्तथा आन्दोलिताः क्वचित् सञ्चालिताः; तथा क्वचित् धीरत्वेन स्थिरत्वेन मनोहराः सुन्दराः। तयोः कर्म्मधारयः।

(१) सहि बुद्धरक्खिदे! एहि दाव। महोसवं सम्भावेह्म इति पाठः क्वचित्।

(२) अयं पाठः कुत्रचिन्नास्ति। (३) एदे इत्यपि क्वचिन्न दृश्यते।

(४) उव्वमन्त इत्यपि पाठः।

(५) पल्लत्थन्ति इति पाठभेदः। (६) दिट्ठिसंभेआ इति पाठान्तरम्।

(७) मणे इति क्वचित् पाठः। (८)...समाअमा इति पाठोऽपि दृश्यते।

काम। (विहस्य) नन्विमौ परस्परं मानसं मोहनमनुभवतः (१)। तथाहि (ष)

ईषत्तिर्य्यग्वलनविषमं कूणितप्रान्तमेतत्
प्रेमोद्भेदस्तिमितललितं किञ्चिदाकुञ्चितभ्रु।

---

प्रवर्त्तन्ते मदयन्तिकामकरन्दयोर्दरदलितनीलोत्पलदामसदृक्षाः कटाक्षविक्षेपाः; तथ तर्कयामि, मनोरथनिर्वृत्तसम्बन्धाविताविति।

तथा दरदलितानि ईषद्विकसितानि यानि नीलोत्पलानि तेषां दाम माला तत्सदृक्षाः तत्तुल्याः, मदयन्तिका-मकरन्दयोः कटाक्षविक्षेपाः प्रवर्त्तन्ते परस्परं प्रति प्रचरन्ति। मनोरथेन निर्वृत्तौ निष्पन्नः सम्बन्धो दाम्पत्यसम्बन्धो ययोस्तौ।

(ष) कामेति। नन्विति लवङ्गिकासम्बोधने। इमौ मदयन्तिकामकरन्दौ, मानसं मोहनं सङ्कल्पनिर्म्मितसम्भोगम्। हेतुप्रदर्शनेन तदनुमानमुपपादयितुमाह —तथाहीति।

ईषदिति। ईषत्तिर्य्यग्वलनेन अल्पतिर्य्यक्प्रसारणेन विषमं वक्रं, प्रान्ते अपाङ्गदेशे कूणितं नेत्रयोर्भागत्रयं वर्जयित्वा एकभागेन विकसितं प्रान्ते कूणितमिति कूणित-प्रान्तं राजदन्तादित्वात् परनिपातः। प्रेमोद्भेदेन अनुरागप्रकाशेन क्वचित् स्तिमितं निस्पन्दं क्वचित्तु ललितम् अन्तर्विकसत्तारं, तयोः कर्म्मधारयः; किञ्चिदाकुञ्चिते ईषदुन्नमिते भ्रुवौ यत्र तत् किञ्चिदाकुञ्चितभ्रु, अन्तर्मोदानुभवेन मानसिकानन्दानुभवेन मसृणम् अनुरागरञ्जितं तथा स्रस्तानि अवसन्नानि निष्कम्पानि निश्चलानि पक्ष्माणि नेत्रलोमानि यत्र तत्, एतत् प्रत्यक्षीक्रियमाणम् अनयोः मदयन्तिकामकरन्दयोः आकेकरे (ट्यारा इति प्रसिद्धे) अक्षिणी चक्षुषी यत्र तत् आकेकराक्षं, दृष्टं परस्पर-दर्शनं कर्त्तृ व्यक्तं स्पष्टम् अचिरम् अचिरजातं शंसति मानसमोहनानुभवं कथयति

---

(१) नन्विमौ विलोकनेन मानसं मुहुर्मुहुः प्रमोदमनुभवत इति पुस्तकान्तरे पाठः।

अन्तर्मोदानुभवमसृणं स्रस्तनिष्कम्पपक्ष्म (१)
व्यक्तं शंसत्यचिरमनयोर्दृष्टिराकेकराक्षम् ॥२॥

पुरुषः । वत्से ! मदयन्तिके ! (२) इत इतः ।

सूचयतीत्यर्थः । दृष्टदृष्टिदर्शनादनयोः परस्परमानसिकमोहनानुभवमत्ताऽनुमीयते, अन्यथैतद्दृष्टिपातासम्भवादिति भावः ।

अतएवात्रानुमानाऽलङ्कारः, समुच्चयेन च तस्य त्वविच्छित्तिः क्रतेत्यनुसन्धेयम् । केचित्तु व्यक्तमिति व्यञ्जकं मन्यमाना उत्प्रेक्षामाचक्षते । शंसतीत्यस्य कर्म्मपदानुपादानात् न्यूनपदत्वदोषः, स च 'व्यक्तं तं वक्त्यचिरमनयो'रिति पाठेन समाधेयः ।

विपराविभूतानि वक्रदर्शनादिलक्षणानि । यथा—

"वलितो वाङ्मसञ्चारो यत्र तद्वक्रमुच्यते ।"
"पुरस्त्रिभागसङ्कोचे प्रेक्षा तत् कूणितं भवेत् ।"
"निस्पन्दं तद् यदन्यत्र दृष्टान्न स्पन्दते क्वचित् ।"
"प्रेमार्द्रमन्तर्विकसत्तारं ललितमीरितम् ॥"
"मसृणं तत्तु विज्ञेयमनुरागकषायितम् ॥"
"आकुञ्चितपुटा याङ्गसंगतार्थनिमीलिता ।"
"मुहुर्व्यावर्त्तितारा च दृष्टिराकेकरा मता ॥"
मन्दाक्रान्ता वृत्तम् ॥ २ ॥

(१) ईषत्तिर्य्यग् वलितविषमं कूणितप्रान्तमेतत्—
प्रेमोद्भेदस्तिमितलुलितं किञ्चिदाकेकरितम् ।
अन्तर्मोदानुभवमसृणं स्तम्भनिष्कम्पपक्ष्म ॥
इति पुस्तकान्तरे पूर्वपादत्रये पाठभेदः ।

(२) कुत्रचित् सम्बोधनद्वयं नास्ति ।

मद । अपवार्य्य । सहि ! बुद्धरक्खिदे ! अवि णाम पुणो वि दाव दीसइ एसो जीविदप्पदो पुण्डरीअलोअणो (१) । (स)

बुद्ध । जइ देव्वमनुकूलं भविस्सदि (२) । (ह)

पुरुषेण निष्क्रान्ते (३) । (च)

माध । अपवार्य्य । (क)

चिरादाशातन्तुस्त्रुटतु विसिनीसूत्रभिदुरो
महानाधिव्याधिर्निरवधिरिदानीं प्रसरतु ।

---

(स) सखि ! बुद्धरक्षिते ! अपि नाम पुनरपि तावत् दृश्यते एष जीवितप्रदः, पुण्डरीकलोचनः ।

(ह) यदि दैवमनुकूलं भविष्यतीति ।

---

(स) मदेति । जीवितप्रदः शार्दूलहननेन जीवनदाता । एष मकरन्दः दृश्यत इति भविष्यत्सामीप्ये वर्त्तमाना ।

(ह) बुद्धेति । यदि दैवमनुकूलं भविष्यति, तदा पुनर्दृश्यते इत्यर्थः । इतिशब्दो मदयन्तिकाबुद्धरक्षितयोस्तत्कालीनालापसमाप्त्यर्थः ।

(च) पुरुषेणेति । पुरुषेण सह निष्क्रान्ते मदयन्तिकाबुद्धरक्षिते इति शेषः ।

(क) माधेति । अपवार्य्य कामन्दकीं प्रतीत्यर्थः ।

चिरादिति । विसिनीसूत्रवत् मृणालतन्तुवत् भिदुरः स्वयमेव भिद्यमानः, अतीव-दुर्बल इत्यर्थः, आशातन्तुः मालतीलाभाशारूपं सूत्रं चिरात् परं त्रुटतु छिन्नो भवतु,

---

(१) सहि ! बुद्धरक्खिदे ! अवि पुणो दीसइ एसो जीविदप्पादाई पुण्डरीअ-लोअणो इति पाठान्तरम् ।

(२) जइ देव्वं अणुऊलइस्सदि । इति निष्क्रान्ता । इति पाठभेदः ।

(३) कुत्रचिदयं पाठो नास्ति ।

प्रतिष्ठामव्याजं व्रजतु मयि पारिप्लवधुरा
विधिः स्वास्थ्यं (१) धत्तां भवतु कृतकृत्यश्च मदनः ॥३॥

अथवा । (ख)

समानप्रेमाणं जनमसुलभं प्रार्थितवतो
विधौ वामारम्भे मम समुचितैषा परिणतिः ।

तदनन्तरं कालं यावत् या मालतीप्रीतिरागः परिपोषिता मदनानलेन इति समस्तार्थः इदानीं महान् विशालः, आविरत मालती नैराश्यजनितः मानसी व्यथैव व्याधिः रोगः निरवधिरसीमः चिरजीवनस्थायी मन्निस्वर्ध: प्रसरन् विजृम्भताम् । पारिप्लवधुरा चाञ्चल्यभारः मयि अव्याजम् अकपटं यथार्थमिति यावत् यथा स्यात्तथा प्रतिष्ठां स्थितिं व्रजतु प्राप्नोतु । विधिर्मम दुःखविधाननिरतं दैवं स्वास्थ्यं सुस्थतां निश्चयमित्यर्थः धत्ताम् अवलम्बताम् । इतोऽपि मम दुःखस्य स्वत एव निरन्तरतया तदुत्पादनचेष्टाया अभावादिति भावः । तथा मदनो मन्मथश्च कृतकृत्यः विरहिणो मे चिरदुःखदानात् कृतकार्यं भवतु । सर्वेन मालतीप्राप्तेरसम्भवादिति भावः ।

अत्र स्वकीयदारुणदुःखप्रतिपादनकार्यं प्रति बहुतरकारणोपन्यासात् समुच्चयोऽलङ्कारः, तथा प्रथमचरणे लुप्तोपमा, निरङ्गं केवलरूपकञ्च द्वितीयचरणे च निरङ्गकेवलरूपकञ्चानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः, समुदाये तु पुनरङ्गाङ्गिभावेन सङ्करः

"चञ्चलं तरलञ्चैव पारिप्लवपरिप्लवे" इत्यमरः । परिप्लवमेवेदमिति पारिप्लवं चाञ्चल्यं तस्य धूरिति पारिप्लवधुरा "धुरक्षस्य"ति राजादित्वादत् ।

शिखरिणी वृत्तम् ॥३॥

(ख) अथवेति । उक्तवार्त्तायवर्णनातीव विप्रीडन् स्वयमेवात्मानं समाश्वासयन्नाह —अथवेति ।

समानेति । समानो मम तुल्यः, प्रेमा मयि स्नेहो यस्य तम्, असुलभं पित्रादीनाम-

---

(१) स्थैर्यमिति भिन्नः पाठः ।

तथाप्यस्मिन् दानश्रवणसमयेऽस्याः प्रविगलत्
प्रभं प्रातश्चन्द्रद्युति वदनमन्तर्दहति माम् ॥४॥

काम। स्वगतम्। एवमतिदुर्म्मनायमानः पीड़यति मां वत्सो माधवो वत्सा मालती च। दुष्करं निराशा प्राणितीति (१)।

धीनतया मम दुष्प्रापं जनं मालतीमित्यर्थः प्रार्थितवतः मनसा याचितवतो मम, विधौ दैवे वामारम्भे दुर्निवारविघ्नजनकतया प्रतिकूलोद्यमे सति एषा प्रत्यक्षीक्रियमाणा परिणतिः मालतीलाभाशया महानन्दात् परं सहसैव तन्नैराश्यात् महाविषादरूपा अवस्थापरिवृत्तिः समुचिता युक्ता। दुर्लभलाभस्य प्रायेणासम्भवात् दैवस्य च प्रतिकूलत्वादिति भावः। इत्थं प्रबोध्य यद्यप्यात्मानमाश्वासयामि तथापीत्यर्थः। अस्मिन् दानश्रवणसमये स्वयमेव राज्ञा नन्दनाय मालती दत्ता' इति दानवृत्तान्तश्रवणकाले प्रविगलन्ती दारुणविषादवशात् प्रस्खलन्ती प्रभा आनन्दजनिता प्रफुल्लता यस्मात् तत्, अतएव प्रातश्चन्द्रद्युति प्रभातकालीनचन्द्रसमानकान्ति, अस्या मालत्या वदनं कर्त्तृ माम् अन्तर्दहति अन्तर्दाहं जनयति। 'प्रतिकूले किल दैवे दुर्लभस्यैव लाभस्तोमे महाविषादः सम्भवत्येव' इत्यमाश्वास्यमानमप्यात्मानं तद्वार्त्ताश्रवणजनितविषादेनास्या मलिनीकृतवदनदर्शनमेव पुनःसन्तापयतीति सरलार्थः।

अत्र अन्तर्दाहवदनयोः कार्य्यकारणयोर्यथाक्रमं माधवमालतीवृत्तित्वेन भिन्नदेशत्वात् असङ्गतिर्नामाऽलङ्कारः, तथा तादृशपरिणतेः समुचितत्वं प्रति असुलभत्वं विधेः प्रातिकूल्यञ्च हेतुरिति पदार्थहेतुकं काव्यलिङ्गं, प्रातश्चन्द्रद्युतीति लुप्तोपमा च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः।

शिखरिणी वृत्तम् ॥४॥

(ग) कामेति। एवमनेन हेतुना। निर्न विद्यते आशा यस्याः सा निराशा व्यक्तिः निराशो जन इत्यर्थः, दुष्करं यथा स्यात्तथा प्राणिति जीवति। इति हेतोः

(१) कुत्रचित् इति शब्दो नास्ति

कामम्। **वत्स! माधव! पृच्छामि तावदायुष्मन्! त्वाम्। अथ किं भवानमंस्त, यथा भूरिवसुरेव मालतीमस्मभ्यं दास्यतीति। (१) (ग)**

माध। सलज्जम्। **नहि नहि। (घ)**

काम। **न तर्हि प्रागवस्थायाः परिहीयसे (२)। (ङ)**

पीड़यतीत्यर्थः। तथा च कुतोऽपि कारणात् यस्य सत्यवत्याशा विनष्टा, तस्य जीवन-धारणं दुष्करमेव, सुतरां 'स्वयं राज्ञैव नन्दनाय मालती दत्ते'ति वृत्तान्तश्रवणेन मालती-माधवयोश्चिरतराशाविनाशात् जीवनधारणस्य दुष्करतया मन्यमानत्वादुपस्थितविषादवैमनस्य-मेव तद्दत्सलां मां सन्तापयतीति भावः। आयुष्मन्निति सम्बोधनेन वात्सल्यातिशयो व्यज्यते। किं पृच्छसीत्याह अथ किमिति भवान् माधवः। अमंस्त मनसा निर्दिष्ट-वान्। अस्मभ्यं मह्यम्। "वास्मदश्चे"ति बहुवचनम्। इति किम् अमंस्त इत्यन्वयः। तथा च सति राज्ञः दानेनैव भूरिवसोरपि दाननिष्पत्तेर्मालत्यलाभेन तव परितापो युज्यते एवेति भावः।

(घ) माधेति। नहि नहि, भूरिवसुरेव मह्यं मालतीं दास्यतीति न खल्वहं मनसा निर्दिष्टवानस्मीत्यर्थः। कुत्रापि तादृशप्रस्तावस्याभावादिति भावः। किन्तु युष्माकं यत्नं नैव मालतीमहं प्राप्स्यामीति सम्भावनासीदिति व्यज्यते।

(ङ) कामेति। तर्हि भूरिवसुकर्त्तृकमालतीदानसम्भावनाया अभावे, प्राग-वस्थायाः पूर्वावस्थातः न परिहीयसे न किञ्चित् विच्युतो भवसि। यथापूर्वमेव तवा-

(१) पृच्छामि तावदायुष्मन्तम्, अपि भवानमंस्त, यथा भूरिवसुरेव मालतीमस्मभ्यं दास्यति? इति पाठान्तरम्।

(२) न तर्हि प्रागवस्थाया भूरिवसुः परिहीयते इति पाठान्तरम्।

मक । भगवति : (१) दत्तपूर्वेत्याशङ्कयते । (च)

काम । जानामि तां खलु वार्त्ताम् । इदन्तु (२) प्रसिद्धमेव, यथा नन्दनाय मालतीं प्रार्थयमानं भूरिवसुः प्रतिमुक्तवान् "प्रभवति निजस्य कन्यकाजनस्य महाराज" इति । (छ)

---

वस्था वर्त्तत इत्यर्थः । तथा च पूर्वमपि भूरिवसुना मालतीदानाय न भवानाहृतः, न वा इदानीमपि भवन्तमपहाय तेनैव नन्दनाय मालती दीयते, युवयोरन्योन्यानुरागोऽपि पूर्ववदेवावतिष्ठते, अस्माकं तत्साधनप्रयत्नोऽपि पूर्ववदेवास्ति ; सुतरां कस्यापि विशिष्ट नूतनकारणस्याभावात् कथमयं ते परिताप इति भावः ।

(च) मकेति । दत्तपूर्वा इतः पूर्वमेव वाग्दत्ता मालतीत्याशङ्कते माधवेनेति शेषः । राज्ञोऽनुरोधात् "प्रभवति निजस्य कन्यकाजनस्य महाराज" इत्यभिदधता भूरिवसुना मालतीदाने राजा प्रतिनिधीकृतः, ततश्च नन्दनाय राज्ञो वाग्दानेनैव भूरिवसोरपि वाग्दाननिष्पत्तेः कुतश्चित् कारणात् मालतीप्राप्तिसम्भवेऽपि माधवेन तत्परिणयो न कर्त्तव्य एव

"सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः ।
वाचादत्ता मनोदत्ता कृतकौतुकमङ्गला ॥"

इत्यादि-( उद्वाहतत्त्वधृत- ) कश्यपवचनात्, तथा च सति परितापः सम्भवपर एवेति भावः ।

(छ) कामेति । वार्त्ताम् इतः पूर्वं पुरुषेणावेदितं वृत्तान्तं जानामीति प्रौढोक्तिः । तु किन्तु । प्रसिद्धमेव सर्वजनविदितमेव । इतिशब्दस्य उक्तवानित्यनेनान्वयः ।

(१) क्वचित् भगवति इति सम्बोधनं नास्ति ।

(२) इदं तावदिति क्वचित् पाठः ।

मक॰ अस्त्येतत्। (ज)

काम॰ अद्य च स्वयं राज्ञैव मालती दत्तेति संप्रत्येव पुरुषेणावेदितम्। तद्वत्स! वाक्प्रतिष्ठानि देहिनां व्यवहारतन्त्राणि। वाचि पुण्यापुण्यहेतवो व्यवस्थाः सर्वथा जनानामायतन्ते। सा च भूरिवसोर्वागनृतात्मिकैव। न खलु महाराजस्य निजकन्यका मालती। कन्यकाप्रदाने च नृपतयः प्रमाणमिति मैवंविधो धर्म्माचारसमयः। तस्माद्विमर्शितव्यमेतत्। कथञ्च वत्स! मामनवधानां मन्यसे (१)। पश्य। (झ)

(ज) मकेति। एतत् प्रसिद्धमस्ति। इति स्वीकरोमि, तेन किमिति भावः।

(झ) कामेति। तथा च सतीति चकारस्यार्थः। राज्ञैव ननु वास्तविकदानाधिकारिणा भूरिवसुनेति भावः। इति पुरुषेणावेदितं, न तु भूरिवसुना दत्तेत्यावेदितमिति भावः। तत्तस्मात्, वत्स! माधव! देहिनां लोकानां व्यवहारतन्त्राणि प्रधानव्यवहारविषयाः वाचि प्रतिष्ठा स्थितिः येषां तानि वाक्प्रतिष्ठानि वाङ्निबन्धनानि सर्वे प्रधानव्यवहारा वाक्यैनैव प्रचलन्तीत्यर्थः। क्वचित्तु क्षुद्रविषया इङ्गितेनापि सम्भवन्तीत्याशयः। तथा पुण्यापुण्यहेतवो धर्म्माधर्म्मबोधजनिकाः, व्यवस्था "सत्यं वदेन्नानृत" मित्यादि शास्त्रविधयः, वाचि आयतन्ते वागधीना भवन्ति तथा च सत्यभाषणे।

(१) अद्य च राज्ञा स्वयमेव मालती दत्तेति पुरुषेणावेदितं, तद्वत्स! वाक्प्रतिष्ठानिबन्धनानि देहिनां व्यवहारतन्त्राणि, वाचि पुण्यापुण्यहेतवो व्यवस्थिताः, सर्वत्र वचनानामायत्तम्, ..नैवंविधः।...तस्मादवस्थितमेवैतत्। इति पाठभेदः।

मा वां (१) सपत्नेर्ष्यापि नाम तद्वत्
पापं यदस्यां त्वयि वा विशङ्कम् (२)।

"अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥"

इति मनूक्तस्तुत्यर्थवादोपहितः 'सत्यं वदे'दिति विधिः 'धर्म्मोऽयं' इति बोधं जनयति। तथा असत्यभाषणे "असत्यभाषणं शूद्रसेवन"मिति "अपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुध्यति" इति विष्णुवचने प्रायश्चित्तश्रवणात् कल्प्यमानो "नानृतं वदे" दिति निषेधविधिः 'अधर्म्मोऽयं' इति बोधं जनयति। मतरां वागर्थौनां धर्म्माऽधर्म्माविति सरलार्थः ।

नन्वेतावता किमायातमित्याह साचेति। तथाचेति चकारस्त्वर्थः। सा "प्रभवति निजस्य"त्यादिका भूरिवसोर्वाक्, अनृतात्मिकैव कृत्रिमरूपतया मिथ्याभूतैव। कथमनृतात्मिकेत्याह—न खल्विति। अर्थविसंवादि वाक्यं हि मिथ्यावाक्यं, तथा च मालत्यां भूरिवसोरिव कन्यात्वेन राज्ञा निजकन्यात्वाऽभावादर्थविसंवादितया तद्वाक्यं मिथ्याभूतमेव, सुतरां तत्प्रयुक्तं प्रतिनिधित्वं राज्ञो नास्ति, अतश्च राज्ञा नन्दनाय दातुं वाग्दाने कृतेऽपि न खलु मालती वाग्दत्ता जातेति भावः।

ननु राज्ञः सर्व्वस्वामित्वेन यस्य कस्यचित् जनस्य कन्यायामपि स्वामित्वात्तस्या वाग्दानं सङ्गच्छत इति चेत्तत्राह—कन्यकाप्रदाने चेति। प्रमाणं नियन्तारः धर्म्माचार्य्यौ: धर्म्मशास्त्रशिष्टाचारयोः समयो नियमः।

"पिता पितामहो भ्राता सकुल्यो जननी तथा।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥"

इति याज्ञवल्क्यवचनात् पित्रादीनामेव कन्यादानाधिकारात् तादृशाद्वैवाचारार्च्चेति भावः। विमर्शितव्यं युष्माभिर्विवेचनीयम्। किञ्चेति चार्थः। कथं केन हेतुना.

(१) मा वा इति पाठान्तरम्।

(२) पापं यदस्यां नु मया विशङ्कामिति पाठभेदः।

तत्सर्वथा सङ्गमनाय यत्नः
प्राणव्ययेनापि मया विधेयः ॥ ५ ॥

अनवधानां मालतीमाधवयोः समागमविषये असावधानाम्। मालतीमाधवयोः समागमविषये सर्वदैव सावधानाऽस्मि, ततः कथमीदृशं घटितेति भावः। पश्य जानीहि। अत्र तुल्यतर्को नाम नाट्यलक्षणम्। यथा दर्पणे---

"तुल्यतर्को यदर्थेन तर्कः प्रकृतगामिना।"

"न नर्म्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन्न विवाहकाले।
प्राणात्यये सर्व्वधनापहारे पञ्चानृतान्याहुरपातकानि॥"

इति मत्स्यपुराणवचनात् विवाहकाल इत्यस्य च विवाहविषयमात्रस्योपलक्षणत्वात् तादृशमिथ्योक्तावपि न दोष इति बोध्यम्।

"तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे" इत्यमरः। "समयः शपथे भाषा सम्पदोः कालसंविदोः। सिद्धान्ताचारसङ्केतनियमावसरेषु च। क्रियाकारे निर्द्देशे चे"ति हैमः।

मा वामिति। अस्यां मालत्यां त्वयि माधवे वा यत्पापं परस्परसमागमाऽभावात् यदसङ्गलं मरणमित्यर्थः विशङ्काम् अस्माभिराशङ्कनीयं, तत्पापं वां युवयोः सपत्नेष्वपि आत्मनोः का कथा शत्रुष्वपि मा भुत् न भवतु। इति नाम, स्वीकारोक्तिरित्यर्थः। तत्त तस्मात् सर्व्वथा मया प्राणव्ययेनापि साधारणायासे का कथा प्राणत्यागेनापि सङ्गमनाय युवयोर्मिलनाय यत्नो विधेयः कर्त्तव्यः सुतरां मम यत्नस्य सर्व्वथा सफलत्वसम्भावनया परितापो न करणीय इति भावः।

अत्र उक्तरूपार्थागमादर्थापत्तिरलङ्कारः। तथा यत्नो नाम द्वितीयावस्था च। यथा दर्पणे—

"प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः।"

इन्द्रवज्रा वृत्तम्॥ ५॥

मक। सर्वं सुष्ठु युज्यमानमादिश्यते युष्माभिः। अपि च। (ञ)

दया वा स्नेहो वा भगवति ! निजेऽस्मिन् शिशुजने
भवत्याः संसाराद्विरतमपि चित्तं द्रवयति ।
अतश्च (१) प्रव्रज्यासमयसुलभाचारविमुखः
प्रसक्तस्ते यत्नः प्रभवति पुनर्दैवमपरम् ॥ ६ ॥

(ञ) मकेति । सुष्ठु युज्यमानं सम्यग् युक्तियुक्तम्, आदिश्यते उच्यते युष्माकमस्माकं न काचिद्विप्रतिपत्तिरिति भावः। गौरव-प्रदर्शनाय आदिश्यत इत्युक्तम् ।

दयेति । हे भगवति ! अस्मिन् निजे स्वकीयतुल्ये शिशुजने मालत्यां माधवे च दया कृपा वा, स्नेहो वात्सल्यं वा, दया च स्नेहश्चेत्यर्थः संसाराद्विरतमपि प्रव्रज्यावलम्बनेन गार्हस्थ्यान्निवृत्तमपि भवत्यास्तव चित्तं द्रवयति आर्द्रं करोति पुनरपि विषयान् प्रति आकर्षतीत्यर्थः। अतश्च अतएव कारणात् प्रव्रज्यासमये सन्यासाश्रमकाले ये सुलभाचाराः नियत-सर्वसङ्गपरित्यागादिव्यवहाराः तेषां विमुखो विरोधी ते तव यत्नः मालतीमाधवयोः समागमसम्पादने प्रवृत्तिः, प्रसक्तः लग्नः सञ्जात इत्यर्थः। पुनः किन्तु अपरम् इतोऽन्यत्, दैवम् अनयोर्भाग्यं, प्रभवति समागमाभिलाषं सद्यः पूरयितुं चिराय नाशयितुं वा शक्नोति। इतः परं बलवद्दैवप्रतिबन्धकताऽभावे तव यत्नाद्दैवावश्यमनयोः समागमो निष्पद्यतेति भावः।

अत्र "शुक्लवन्ति सरोजानि स्वैरिणीवदनानि च।" इति चन्द्रालोकोदाहृतवत् द्रवयतीत्येकया क्रियया दयास्नेहयोरप्रस्तुतयोः कर्त्तृतासम्बन्धात् तुल्ययोगिताऽलङ्कारः। तथा "न तर्हि प्रागवस्थायाः परिहीयसे" इत्यनेन कामन्दक्या निश्चितेऽपि विषये "भगवति ! दत्तपूर्वेत्याशङ्कते" इत्यभिदधानेन मकरन्देन संशयोद्भावनात् धृष्टताप्रकाशेन कामन्दक्याः किञ्चित् कोपो जातः, अतएव "जानामि तां खलु वार्त्ता"

(२) ततश्चेति पाठान्तरम् ।

नेपथ्ये। **भअवदि कामन्दइ! एसा भट्टिणी विस्सवेदि, जधा मालदीं घेत्तुण तुरिदमाअच्छदु (१) त्ति। (ट)**

काम। **वत्से उत्तिष्ठ (२)।**

सर्वे। उत्तिष्ठन्ति।

मालतीमाधवौ। सकरुणानुरागमन्योन्य-(३) मवलोकयतः।

---

(ट) भगवति! कामन्दकि! एषा भर्त्री विज्ञापयति, यथा मालतीं गृहीत्वा त्वरितमागच्छतु इति।

---

मिति कामन्दक्या सकोपमिवाभिहितम्, अत तु पुनस्तदनुनयात् पर्य्युपासनं नाम प्रतिमुख-सन्धेरङ्गम्। यथा दर्पणे—

"...कृतस्यानुनयः पुनः। स्यात् पर्य्युपासनं...।"

"संसारश्च मिथ्याधीप्रभवा वासना" इति प्रामाण्यवादे गदाधरः। "स्वदृष्टोप-निबद्धशरीरपरिग्रहः संसारः" इति तु कातन्त्रपरिशिष्टटीकायां गोपीनाथः।

सन्न्यासमाचारानाह वामनपुराणे—

'सर्वसङ्गपरित्यागी ब्रह्मचर्य्यसमन्वितः।
जितेन्द्रियत्वमावासे नैकस्मिन् वसतिश्चिरम्॥" इत्यादि।

शिखरिणी वृत्तम्॥ ६॥

(ट) नेपथ्य इति। भर्त्री राज्ञी। त्वरितमागच्छतु नन्दनेन सह तस्या विवाहमङ्गलसम्पादनायेति भावः।

(१) आअच्छ त्ति इति पाठभेदः।

(२) उत्तिष्ठोत्तिष्ठेति क्वचित् द्विरुक्तिः। (३) क्वचित् 'अन्योन्य' मिति नास्ति।

माध। स्वगतम् (१) कष्टम्, एतावती हि लोकयात्रा मालत्या समं माधवस्य। अहो नु खलु भोः। (ठ)

सुहृदिव प्रकटय्य सुखप्रदः (२)
प्रथममेकरसामनुकूलताम्।
पुनरकाण्डविवर्त्तनदारुणो
विधिरहो विशिनष्टि मनोरुजम् (३) ॥७॥

---

(ठ) माधेति। लोकयात्रा साक्षात्कारादि-लौकिकव्यवहारः। अहो नु खलु भोरित्येकमेव महाविषादसूचकमव्ययम्।

सुहृदिति। विधिर्विधाता सुहृदिव सखेव प्रथमम् आदौ, एकः मुख्यः, रसो मम सुखजननानुरागो यस्यां ताम् अनुकूलताम् आनुकूल्यं प्रकटय्य प्रकाश्य सुखप्रदः सन्, पुनः अकाण्डे अनवसरे असमये विवर्त्तनेन परिवर्त्तनेन दारुणः सन् मनोरुजं चित्तपीड़ां विशिनष्टि विशेषेण जनयति। अहोशब्दो विषादे। विधेरियमतीव निष्ठुरतेति भावः।

अत्र श्रौती उपमाऽलङ्कारः।

"शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः।" "काण्डोऽस्त्री दण्डबाणार्ववर्गा-वसरवारिषु।" इति चामरः। "अहो धिगर्थे शोके च करुणार्थविषादयो"रिति विश्वः

उत्तररामचरित-चतुर्थाङ्के कञ्चुकिना श्लोकोऽयमविकलमेव पठितः।

द्रुतविलम्बितं वृत्तम् ॥ ७ ॥

---

(१) क्वचित् स्वगतमिति पाठो नास्ति।

(२) सुखप्रदामिति क्वचित् पाठः।

(३) प्रविशिनष्टि विधिर्मनसो रुजमित्यपि पाठः।

माल । अपवार्य (१) । महाणुहाव ! लोअणाणन्दअर ! (२) एत्तिअं दिट्ठोसि । (ड)

लव । हद्धी हद्धी ! समीरसंसअं ज्जेव णो पिअसही आरोविदा अमच्चेण । (ढ)

माल । स्वगतम् (३) । परिणदं दाणिं मे जीविदतिण्हाए फलं । सास्रम् (४) । णिव्वूढं अ णिक्करुणदाए तादस्स वि कावालित्तणं । पडिट्ठिदो दुट्टदेव्वस्स दारुणसमारम्भसरिसो (५) परि-

(ड) महानुभाव ! लोचनानन्दकर ! एतावत् दृष्टोऽसि ।

(ढ) हा धिक् हा धिक ! शरीरसंशयमेव नः प्रियसखी आरोपिता अमात्येन ।

(ण) परिणतमिदानीं मे जीविततृष्णायाः फलम् । निर्व्यूढं च निष्करुणतया तातस्यापि कापालिकत्वम् । प्रतिष्ठितो दुष्टदैवस्य दारुणसमारम्भसदृशः परिणामः कमत्र उपालभे मन्दभागिनी । कं वा अशरणा शरणं प्रतिपद्ये ।

(ड) मालतीति । एतावद्दृष्टोऽसि, इतः परं न पुनर्मया त्वं द्रष्टव्यः जीवनाभावा-दिति भावः । इदञ्च प्रत्यक्षनिष्ठुरत्वात् वज्रं नाम प्रतिमुखसन्ध्यङ्गम् ।

"प्रत्यक्षनिष्ठुरं वज्रं ।" इति साहित्यदर्पणलक्षणात् ।

(ढ) लवेति । शरीरसंशयं सहसा चिरतराशाविनाशेन अतीवविप्रियाचरणेन च देहधारणसन्देहम् । अमात्येन भूरिवसुना । तत्किमिदानीं करणीयमिति भावः ।

(ण) मालतीति । परिणतं पर्य्यवसितम् । निर्व्यूढं सम्पन्नम् । कापालिकत्वं नरवलिदातृः कापालिकस्य भावः । यथा स्त्रीबालादिनिर्विशेषेणैव नरवलिदानात् कापा-

(१) स्वगतमिति पाठान्तरम् । (२) महाभाअ ! लोअणाणन्द इति पाठभेदः ।

(३) क्वचित् स्वगतमिति पाठो नास्ति । (४) क्वचित् सास्रमित्यपि नास्ति ।

(५) परिणिट्ठिदो देव्वहदअस्स दारुणसमारम्भपरिणामो इति भिन्नः पाठः ।

णामो। कम् एत्थ। (१) उवालहामि मन्दभाइणी। कं वा असरणा सरणं पढ़िवज्जामि। ( ग )

लव ! सहि ! इदो इदो। इति कामन्दक्या सह निष्क्रान्ते ( २ ) ( )

माध। स्वगतम्। नूनमाश्वासनमात्रमेवैतत् (३) सहजस्नेह-कातरा ( ४ ) भगवती करोति। सोद्वेगम्। हन्त! सर्वथा

( त ) सखि ! इत इतः।

निकस्य नृशंसत्वं सम्पद्यते, तथा नन्दनाय दानादवश्यम्भाविना मम मरणेन तातस्यापि नृशंसत्वं सम्पन्नमित्यर्थः। दुष्टदैवस्य क्रूराया नियतेः दारुणो यः समारम्भः मम विषये कार्य्यविधानोपक्रमः तत्सदृशः तदनुरूपः परिणामः परिसमाप्तिः नन्दनहस्ते दानवृत्तान्तश्रवणमात्रमेव असह्यदुःखजननादेतद्दैवचेष्टितस्य आरम्भो यथा भयङ्करः मरणविधानात् परिसमाप्तिरपि तथैवेत्यर्थः। प्रतिष्ठितो निर्व्यूढः। उपालभे निन्दामि यतोऽहं मन्दभागिनी, अतो भाग्यमेव निन्दामीति भावः। अशरणा रक्षकहीना। सर्वत्र पितैव कन्याया रक्षकः मम तु स पितैव विनाशकः संवृत्त इति सर्वथैवाहमशरणेति भावः। प्रतिपद्ये प्राप्नोमि।

( त ) लवेति। इत इत आगच्छेति शेषः। निष्क्रान्ते मालतीलवङ्गिके इति शेषः।

( थ ) माधेति। सहजस्नेहेन मां प्रति स्वाभाविकवात्सल्येन कातरा मम दुःख-दर्शनेन सन्तप्यमाना, भगवती कामन्दकी एतत् "न तर्हि प्रागवस्थायाः परिहीयसे" इत्यादिनाऽभिहितं नूनं निश्चितम् आश्वासनमात्रमेव केवलां सान्त्वनामेव करोति। न तु कार्य्यतः किमपि कर्त्तुं शक्ष्यति स्वयं राज्ञ एव प्रतिबन्धकत्वादिति भावः। संशयितं

(१) कंवा असरणा इति पाठोऽपि दृश्यते।

(२) परिक्रामति, इति निष्क्रामन्ति, इति पाठभेदौ।

(३) मात्रमेतदित्यपि पाठः। (४) सहजस्नेहमात्रकातरा इति भिन्नः पाठः।

संशयितजन्मसाफल्यः संवृत्तोऽस्मि। तत् किमिदानीं (१) कर्त्तव्यम्। विचिन्त्य। न खलु महामांसविक्रयादन्यमुपायं (२) पश्यामि। प्रकाशम्। वयस्य मकरन्द! अपि भवानुत्कण्ठते मदयन्तिकायाः? (३)। (थ)

शास्त्रः प्रतिबन्धकत्वात् मालतीलाभो न भवेत् कामन्दक्याः प्रभावात् भवेद्वा इति सन्दिग्धं जन्मसाफल्यं मालतीप्रतिरूपं यस्य सः। मालतीप्राप्त्यभावे मम जन्मैव निरर्थकमिति भावः। महामांसस्य नरमांसस्य विक्रयात् चामुण्डानुचरपिशाचेभ्यो विक्रयणात्। तथाच शीघ्रमालतीलाभाय महाश्मशाने वामाचारानुसारेण चामुण्डा-र्च्चनानन्तरं तदनुचरपिशाचेभ्यो नरमांसार्पणरूपमवश्यम्भाविशीघ्रफलदमागमप्रसिद्धं वीरानुष्ठानं मया कर्त्तव्यमिति भावः। तथाचोक्तं तन्त्रसारे—

"चामुण्डा साधकानां भवति च फलदा वाममार्गेण शीघ्रम्॥"

इति संक्षेपः। विस्तारस्तु तत्तदागमेऽनुसन्धेयः। अनेन पञ्चमाङ्कसूचनमपि वेदितव्यम्। महामांसमुक्तं कौलार्च्चनदीपिकायां—

"गो-नर-भाश्व-महिषवराहोष्ट्रैरगोद्भवम्।
महामांसाष्टकं देवि! देवताप्रीतिकारकम्॥"

इदृशानुष्ठाने तु नरमांसमेव ग्राह्यम्। तदुक्तं कापालिकागमे—

"अशस्त्रसंछिन्नमयोषिदीयं नृमांसमार्द्रं गलदस्रविन्दु यत्।"

जगद्धरादयस्तु—"आत्मसिद्धिं पणीकृत्य साहसाद्यदुपार्जितम्।
अशस्त्रपूतमव्याजं नृमांसं परिकीर्त्तितम्॥"

इति परिभाषितमेव मांसं महामांसमाहुः स्म।

मूल्यलाभोद्देशेन यत्किञ्चिदर्पणं हि विक्रयः। तथाच मालतीरूप-मूल्यलाभो-

(१) तत् किं कर्त्तव्यमिति पाठः क्वचित्।

(२)...अन्यदुपायान्तरमिति पाठान्तरम्।

(३) मदयन्तिकायाम् इति समस्यन्तपाठोऽपि।

मक०। अथ किम् ।

तन्मे मनः क्षिपति यत् सरसप्रहार-
मालोक्य मामगणितस्खलदुत्तरीया ।
त्रस्तैकहायन-कुरङ्गविलोलदृष्टि-
राश्लिष्टवत्यमृतसम्वलितैरिवाङ्गैः ॥ ८ ॥

दृ शेन यन्महामांसार्पणं तद्विक्रय एव भवतीति बोध्यम् । एतन्नरमांसम् पणकीय-मित्यादिकं पञ्चमाङ्के वक्ष्यते ।

ईदृशसाहसानुष्ठाने मकरन्दस्य प्रतिबन्धकतामाशङ्का तमपसारयितुमाह वयस्येत्यादि । अपि भवानुत्कण्ठते मदयन्तिकायाः मदयन्तिकार्थं भवानुत्कण्ठितः किमित्यर्थः । मदयन्तिकाया इति "अधीगर्थदयेशां कर्म्मणि" इति षष्ठी ।

स्वकीयोत्कण्ठामाह—तदिति । सरसः सरक्तः प्रहारः शार्दूलनखरप्रहारजनित-क्षतं यस्य तादृशं माम् आलोक्य दृष्ट्वा, अगणितम् अविचारितं स्खलत् पतत् उत्तरीयं यस्याः सा, निपतत् स्तनावरणांशुकमलक्षयन्तीत्यर्थः तथा त्रस्तः कुतश्चित् कारणात् भीतः, एकहायन एकवर्षवयस्कः, यः कुरङ्गो मृगः तस्येव विलोले विशेषचञ्चले दृष्टी चक्षुषी यस्याः सा तथोक्ता मदयन्तिका, अमृतसम्वलितैः सुधामिश्रितैरिव अङ्गैः वक्षःप्रभृतिभि-रवयवैः यत् आश्लिष्टवती मामालिङ्गितवती, तत् आश्लेषणं कर्त्तृ मे मम मनः क्षिपति अधीरं करोति । सुतरां तदर्थमतीवोत्कण्ठितोऽस्मीति भावः ।

अत्र अमृतसम्वलितैरिवेति भावाभिमानिनो वाच्या क्रियोत्प्रेक्षाऽलङ्कारः, तृतीय-पादे लुप्तोपमा च, अनयोर्मिथो नैरपेक्ष्यात् संसृष्टिः । तथा तच्छब्दान्वितवाक्यस्य प्राक्पाठात् "न्यक्कारो ह्ययमेव मे यदरयः"—इत्यादिवत् वाक्यगतविधेयाविमर्शदोषः, किञ्च क्षिपतीति पदम् अधीरीकरणार्थस्यावाचकमित्यवाचकत्वदोषोऽपि, तेन 'मच्चित्त-मुद्भ्रमति, यत्सरसप्रहारं' इति पाठेन तयोः समाधानं विधेयम् । एतत्पाठे तु उद्-भ्रमति उद्भ्रान्तम् अधीरं भवति, यद् यस्मादित्यर्थः, तेन "आत्मा जानाति यत्पापम्"

माध । सुलभैव बुद्धरक्षिताप्रियसखी भवतः (१) अपिच ।(द)

प्रमथ्य क्रव्यादं मरणसमये रक्षितवतः
परिष्वङ्गं लब्ध्वा तव, कथमिवान्यत्र रमताम् ।
तथाच व्यापारः कमलनयनाया नयनयो-
स्त्वयि व्यक्तस्नेह (२) स्तिमितरमणीयश्चिरमभूत् ॥९॥

---

इत्यादिवत् यच्छब्दस्य परवाक्यगतत्वेन तच्छब्दानपेक्षणात् न विधेयाविमर्शदोषः, नवा अवाचकत्वदोषोऽपीति ध्येयम् ।

वत्सपदमेकहायनपदञ्च दृष्टेर्विशेषचाञ्चल्यद्योतनार्थम् । एतत् तृतीयचरणमुत्तररामचरित-तृतीयाङ्केऽपि दृश्यते । किन्तु तत्र षष्ठ्यन्तः पाठ इति भेदः ।

वसन्ततिलका वृत्तम् ॥ ८ ॥

(द) माधेति । यतो मदयन्तिका बुद्धरक्षितायाः प्रियसखी, अतो भवतः सुलभैवेति भावः । बुद्धरक्षितैव विविधं प्रबोध्य तां त्वयि समासक्तां करिष्यतीति व्यज्यते । अपिच अन्यच्च तत्प्राप्तौ कारणमस्तीत्यर्थः ।

किं तत्कारणमित्याह—प्रमथ्येति । क्रव्यादं मांसाशिनं शार्दूलं प्रमथ्य निहत्य मरणसमये रक्षितवतस्तव परिष्वङ्गम् आलिङ्गनं लब्ध्वा प्राप्य कथमिव केन प्रकारेण अन्यत्र त्वदतिरिक्ते जने रमताम् अनुरज्यतु मदयन्तिका कथमपि नेत्यर्थः । प्राणरक्षणरूपमुपकारं कृतवतस्तव सापि स्वदेहार्पणरूपं प्रत्युपकारं करिष्यत्येव, तथा परमन्यतासक्ता तव परिष्वङ्गेण परपुरुषसंस्पर्शदोषेण भयाऽपि त्वय्यनुरज्येतेति भावः । इदानीं स्वाभिमतासक्तौ बाह्यलक्षणमाह तथाचेति । तथाच त्वयि तदासक्त्यनुमानहेतुरित्यर्थः ।

---

(१) न दुर्लभा बुद्धरक्षितायाः प्रियसखीति पाठान्तरम् ।

(२) व्यक्तस्नेहः, इति सविसर्गः पाठः क्वचित् ।

मक (१)। **तदुत्तिष्ठ, पारा (२) सिन्धुसम्भेदमवगाह्य नगरीमेव प्रविशाव:।** (ध) उत्थाय परिक्रामत:।

माध। **अयमसौ महानद्यो: सम्भेद: (३)। य एष:।** (न)

---

कमलनयनाया मदयन्तिकाया:, नयनयोर्व्यापारो दृष्टिपात: त्वयि व्यक्तत्वेन स्पष्टीभूतानुरागेण स्तिमित: निश्चल: अतएव रमणीय: सुन्दर: चिरं बहुकालं व्याप्य अभूत्, बहुकालं यावत् निस्पन्दनयना सा त्वमवलोकितवतीत्यर्थ: सुतरां मदयन्तिका त्वय्यासक्ता तादृशानुरागदर्शनात् अन्यत्र तदसम्भवादिति भाव:।

अतएवात्रानुमानमलङ्कार:, अर्थापत्त्युपमाभ्याञ्च विच्छित्ति: क्वतेत्यनुसन्धेयम्। मांसाशिविशेषे शार्द्दूले वक्तव्ये क्रव्यादमिति सामान्याभिधानात् विशेषेऽविशेषाख्यदोष:, स च "मथित्वा शार्द्दूलम्" इति पाठेन समाधेय:। इदञ्च युक्तिविशेषेणार्थनिश्चयादुपन्यासो नाम प्रतिमुखसन्धेरङ्गम्।

"उपपत्तिकृतो योऽर्थ: स उपन्यास इष्यते।" इति प्राचां लक्षणात्। संशयेन कलुषितस्य मकरन्दचित्तस्य युक्त्या मदयन्तिकाप्राप्तिनिश्चयेन प्रसन्नताप्रतिपादनात् साहित्यदर्पणमतेऽपि तल्लक्षणसङ्गति:। तथाच—

"उपन्यास: प्रसादनम्।"

क्रव्यं मांसमत्तीति क्रव्याद: कर्म्मण्यण्। "अपक्वे त्वणेव" इति नियमात् "क्रव्ये च" इति न क्विप्।

शिखरिणी वृत्तम्॥ ९॥

(ध) मकेति। पारा-सिन्धुनामानौ नदीविशेषौ, तयो: सम्भेदं सङ्गमम्।

(न) माधेति। अयं दृश्यमान:, असौ स:, महानद्यो: परासिन्ध्वो:।

(१) क्वचित् मकेति पाठो नास्ति। (२) वरदा इति पाठभेद:।

(३) महानद्योर्व्यतिकर इति पाठान्तरम्।

जलनिबिडितवस्त्रव्यक्तनिम्नोन्नताभिः
परिगततटभूमिः स्नान (१)-मात्रोत्थिताभिः ।
रुचिरकनककुम्भ श्रीमदाभोगतुङ्ग-
स्तनविनिहितहस्तस्वस्तिकाभिर्वधूभिः ॥१०॥

---

जलेति । स्नानमात्रमेव उत्थिताभिः पारासिन्धुसङ्गमप्रदेशे अवगाहनानन्तरमेव तीरमुत्तीर्णाभिः, अतएव जलेन निबिडितानि निरन्तरीकृतानि नितान्ताप्लुततया देहे अत्यन्तसंलग्नानि यानि वस्त्राणि तैर्व्यक्तानि प्रकटितानि स्पष्टदर्शनयोग्यीकृतानि निम्नोन्नतानि निम्नोन्नतस्थलानि नाभिमध्य-कुचमण्डल-नितम्ब-जघनाद्यवयवा यासां ताभिः ; तथा रुचिरकनककुम्भवत् मनोहरकाञ्चनकलसवत् श्रीमन्तः कान्तिमन्तः, एवम् आभोगेन परिपूर्णतया तुङ्गाः उन्नताश्च ये स्तनाः तेषु विनिहिताः स्थापिताः हस्ता पाणयः स्वस्तिका इव, हस्ता एव स्वस्तिका इति वा, याभिः, ताभिस्तथोक्ताभिर्वधूभिः स्त्रीभिः परिगता व्याप्ता तटभूमिः तीरदेशो यस्य स तथोक्तः य एष सम्भेदो वर्त्तत इत्यर्थः ।

अत्र स्वभावोक्तिरलङ्कारः, रुचिरकनककुम्भश्रीमदिति लुप्तोपमा, हस्तस्वस्तिकेत्यत्र साधकबाधकप्रमाणाभावादुपमारूपकयोः सन्देहसङ्करः, पुनस्तेषामङ्गाङ्गिभावेन सङ्करः । तथा वधूभिरिति बहुवचनेन चातुर्वर्ण्यस्त्रीणामेव मेलनद्योतनात् वर्णसंहारो नाम प्रतिमुखसन्ध्यङ्गम् । तथाच दर्पणे —

"चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते ॥"

"आभोगः परिपूर्णता" इत्यमरः । "स्वस्तिको मङ्गलद्रव्ये चतुष्कगृहभेदयोः । पिष्टकस्य विकारे च स्वस्तिको रततालिके ॥" इति विश्वः । अत्र तु मङ्गलद्रव्यरूप एव स्वस्तिको ग्राह्यः । स च अधिवासार्थं तण्डुलादिचूर्णेन त्रिकोणाकारः क्वचित् वर्त्तुलो वा क्रियत इति द्रष्टव्यम् । निबिडितेति निबिडानि कृतानीति करोत्यर्थे णयन्तात् निबिडशब्दात् कर्म्मणि क्तः । मालिनी वृत्तम् ॥ १० ॥

---

(१) स्नात इति...पाठभेदः ।

इति निष्क्रान्ताः सर्वे (प)

## इति मालतीमाधवे शार्दूलविभ्रमो नाम (१) चतुर्थोऽङ्कः ॥ (फ)

---

(प) इतीति। पूर्वनिष्क्रान्ता कामन्दक्यादीनादाय सर्वशब्दस्य बहुवचनस्य चोपपत्तिरिति दिक्।

(फ) इतीति। शार्दूलेन मकरन्दस्य शार्दूलप्रहारेण विभ्रमो भ्रान्तिर्मकरन्द-माधवयोर्मोहो यस्मिन् सः। नाम, शार्दूलविभ्रम इति नाम्ना प्रसिद्ध इत्यर्थः।

इति श्रीहरिदाससिद्धान्तवागीशविरचितायां मालतीमाधवटीकायां
भावमनोहरायां चतुर्थाङ्कविवरणं समाप्तम् ॥४॥

(१) शार्दूलविभ्रमो नाम इति पाठः क्वचित् नास्ति

# पञ्चमोऽङ्कः ।



(ततः प्रविशत्याकाशयानेन भीषणोज्ज्वलवेशा कपालकुण्डला । (क)

कपा० षडधिकदशनाडीचक्रमध्यस्थितात्मा

हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः ।

---

(क) तत इति । भीषणो नरशिरोऽस्थिकुण्डलधारणादिना भयङ्करः, उज्ज्वलो रक्तपट-रक्तचन्दन-पिङ्गलजटादिधारणात् दृष्टिप्रतिघातिदीप्तिशाली च वेशो यस्याः सा । कपाले नरशिरोऽस्थिद्वयमेव कुण्डले कर्णभूषणविशेषौ यस्याः सा कपालकुण्डला, तदाख्या काचित् वामाचारवती नारी, आकाशयानेन योगप्रभावात् गगनगमनेन सञ्चरन्त्यर्थः ।

षडधिकेति । यः, षड्भिरधिका अध्यारूढा दश इति षडधिकदश षोडश इति तात्पर्य्यं, नाडीनां बहुतरसंख्यत्वेऽपि प्रधानीभूता इडा-पिङ्गलादयो याः षोडश नाड्य इत्यर्थः, तासां यच्चक्रं मण्डलाकारेणावस्थितं विशुद्धनामकं कण्ठदेशवर्त्ति पद्मं तस्य मध्ये स्थित आत्मा स्वरूपं यस्य स तथोक्तः । इडापिङ्गलादि-प्रधानषोडशनाडी-घटिते कण्ठदेशवर्त्तिनि विशुद्धनामके षोडशदले पद्मे त्रिनेत्र-पञ्चानन-दशभुज-सदा-शिवरूपेण विराजमान इति सरलार्थः । तथा तद्विदां तादृशात्मवेदिनां हृदि हृदये विनिहितं कृपया स्थापितं रूपं स्वकीयाकृतिर्येन तादृशः सन् सिद्धिदः योगसिद्धि-दाता । तथा अविचलितमनोभिः एकाग्रचित्तैः साधकैः निजोपासकैः मृग्यमाणः साक्षात् कर्त्तुमन्विष्यमाणो भवति । शक्तिभिः इच्छा-क्रिया-ज्ञानरूपाभिः, अथवा ब्राह्मीप्रभृतिभिरष्टशक्तिभिः परिवृतः समन्तादवेष्टितः, सः, शक्तीनां तासामेव इच्छा-

अविचलितमनोभिः साधकैर्मृग्यमाणः
स जयति परिणद्धः शक्तिभिः शक्तिनाथः ॥ १ ॥

क्रिया-ज्ञानरूपाणां नाथः प्रयोक्ता. अथवा ब्राह्मीप्रभृतीनां पतिः सदाशिव इत्यर्थः । जयति सर्वस्य उत्कर्षतया वर्त्तते । सुतरां तं चिन्तयामीति भावः ।

अत्र ताहृशनाडीचक्रादीनां केवलतन्त्रशास्त्रप्रसिद्धत्वादप्रतीतत्वदोषः प्रसन्नत्वेऽपि स्वयं परामर्शाद् गुणतामेव भजते । तथाच साहित्यदर्पणे—

"गुणः स्यादप्रतीतत्वं ज्ञत्वस्य द्वक्तृवाच्ययोः ।
स्वयं वापि परामर्शे ... ॥"

इतः प्रभृति सप्तमाङ्कसमाप्तिपर्य्यन्तो गर्भसन्धिः । यथा तत्रैव—

"फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन ।
गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान् मुहुः ॥"

तथा चात्र विवाहरूपप्रधानफलोपायभूतस्य प्रथमाङ्कादावुत्पन्नस्य मालतीमाधवयोः परस्परानुरागस्य "प्रेमार्द्राः प्रणयस्पृशः" इत्यादिना समुद्भेदः, "हा ताद ! णिक्करुण" "अस्सालत्तके"त्यादिना पुनस्तस्य ह्रासः, "भो भो मालत्यन्वेषिणः सैनिका" इत्यादिना अन्वेषणम्, "मालत्याः प्रथमे"त्यादिना पुनरुद्भेदः, "अमच्चो भअवदी विण्णवेदि" इत्यादिना ह्रासः, "ता परमत्थवहिणि !" इत्यादिना पुनरन्वेषणञ्च द्रष्टव्यम् । मकरन्दस्य मालतीपरिच्छदधारणादिवृत्तान्तः पताका । यथा तत्रैव—

"व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते ।"

तथा मालतीलाभे कामन्दक्यादीनां चेष्टादर्शनादुपायचिन्ता, राज्ञो नन्दनाय मालतीदानार्थमलङ्कारादिप्रेरणदर्शनादपायचिन्ता, निजसाहसात् प्राप्तिसम्भवश्चेति प्राप्त्याशा नाम तृतीयाऽवस्था । यथा—

"उपायापायचिन्ताभ्यां प्राप्त्याशा प्राप्तिसम्भवः ।"

अस्य चाभूताहरणादीनि त्रयोदशाङ्गानि यथास्थानं निवेश्य लक्षणानि वक्ष्यामः ।

"अध्यारूढस्याधिक इति निपात्यते" इति कातन्त्रपञ्जिकायां त्रिलोचनः ।

प्रधानाः षोडश नाडीराह त्रिपुरारिभूतं वचनम् । यथा—

"इडा च पिङ्गला चैव सुषुम्णा च परा स्मृता ।
गान्धारी हस्तिजिह्वा च पूषा यशस्विनी तथा ॥
अलम्बुषा कुहूश्चैव शङ्खिणी दशमी स्मृता ।
तालुजिह्वा च जिह्वा च विजया कामदा परा ॥
अमृता बहुला नाम नाडी वायुसमीरिता ॥"

षट्चक्राण्याह योगशास्त्रे

"चतुर्दलं स्यादाधारे स्वाधिष्ठाने च षड्दलम् ।
नाभौ दशदलोपेतं सूर्यसंख्यदलं हृदि ॥
कण्ठे स्यात् षोडशदलं भ्रूमध्ये द्विदलान्वितम् ।
सहस्रदलमाख्यातं ब्रह्मरन्ध्रे तु पङ्कजम् ॥"

षट्चक्रनिरूपणे—

"विशुद्धाख्यं कण्ठे सरसिजममलं धूम्रधूम्रावभासं
स्वरैः सर्वैः शोणैर्दलपरिलसितैर्दीपितं दीप्तबुद्धेः ।
समास्ते पूर्णेन्दुप्रथिततमनभोमण्डलं वृत्तरूपं
हिमच्छायानागोपरिलसिततनोः शुक्लवर्णाम्बरस्य ॥
भुजैः पाशाभीत्यङ्कुशवरलसितैः शोभिताङ्गस्य तस्य
मनोरङ्के नित्यं निवसति गिरिजाभिन्नदेहो हिमाभः ।
त्रिनेत्रः पञ्चास्यो ललितदशभुजो व्याघ्रचर्माम्बराढ्यः
सदापूर्वो देवः शिव इति समाख्यानसिद्धिप्रसिद्धः ॥"

तस्य शक्तित्रयमाह गोरक्षसंहितायां—

"इच्छा क्रिया तथा ज्ञानं गौरी ब्राह्मी तु वैष्णवी ।
त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति ॥"

मास्मिन्ने वृत्तमिति संक्षेपः ॥ १ ॥

इयमहमिदानीम्—

नित्यं (१) न्यस्तषडङ्गचक्रनिहितं हृत्पद्ममध्योदितं
पश्यन्ती शिवरूपिणं लयवशादात्मानमभ्यागता

नित्यमिति । मूलाधारस्थितायाः कुण्डलिन्याः मूलाधार-स्वाधिष्ठान-मणिपूरानाहत-विशुद्धाज्ञानामक-षट्चक्रभेदनानन्तरं ब्रह्मरन्ध्रस्थित-सहस्रदलकमलान्तर्गते परमात्मनि शिवे संयोजनं लयः, लयनामकस्तन्त्रमतसिद्धो योगविशेषः, तद्वशात् तदवलम्बनबलात् न्यस्तानां पूजाजपारम्भकाले 'ह्रां हृदयाय नमः' 'ह्रीं शिरसे स्वाहा' इत्यादिक्रमेण विन्यस्तानां षडङ्गानां हृदय-शिरः-शिखा-कवचनेत्रास्त्राणां यत् चक्रं समूहः तत्र निहितं तादृशन्यासेनैवारोपितं, तथा हृत्पद्ममध्ये अनाहतनामक-द्वादशदल-हृदयस्थ-पङ्कजमध्ये उदितं प्रकाशमानं शिवरूपिणं वराभयदाननिरतद्विभुजश्वेतवर्णज्ञाननामक-शिवस्वरूपम् आत्मानं परमात्मानं नित्यं पश्यन्ती सर्वदा साक्षात् कुर्वती, तथा नाडीनाम् इडा-पिङ्गला-सुषुम्णानाम् उदयक्रमेण क्रियाप्रकाशपौर्वापर्य्येण पूरक-कुम्भक-रेचकात्मकेन प्राणायामेनेत्यर्थः जगतो गतिशीलात् देहात्, पञ्चामृतानां देहगुरुत्वप्रयोजकीभूतानां विस्र(स्रु)व-रक्त-मज्ज-शुक्राणाम् आकर्षणात् उत्पतनाय देहस्य लघुतां सम्पादयितुम् अपसारणाद्धेतोः, न प्राप्त उत्पतनश्रमः गमनोड्डयनायासो यया सा अप्राप्तोत्पतनश्रमा इयमहं ( प्रागुक्तगद्यस्थपदसवान्वे ति ) अयं नभसः सम्मुखवर्त्तिगगनदेशस्य ये अम्भोमुचः गमनप्रतिबन्धका मेघाः, तान् विघटयन्ति योगबलेनापसारयन्ती सती इदानीं ( इदमपि प्रागुक्तगद्यस्थं पदम् ) अभ्यागता श्रीपर्व्वतात् करालायतनं प्राप्ता ।

अत्रापि पूर्ववत् स्वयं परामर्शात् न अप्रतीतत्वदोषः ।

अयं इति "एकारान्तमव्ययम्" इति कातन्त्रकर्त्ता दुर्गसिंहः ।

षडङ्गानि तन्न्यासमन्त्रांश्चाह शारदावचनम् । यथा—

(१) नित्यन्यस्तेति पाठान्तरम् ।

...नामुदयक्रमेण जगतः पञ्चामृताकर्षणा-
...मात्पतनभ्रमा विघटयन्त्यग्रे नभोऽम्भोमुचः ॥२॥

"...य नमः पूर्वे शिरसि वह्निवल्लभा।
...ये ...पडिन्युक्तं कवचाय हुमीरितम् ॥
...वौषट् स्यात् अस्त्राय फडिति क्रमात्।
...मन्त्रमित्युक्तान् षडङ्गे च नियोजयेत् ॥"

षट्चक्रनिरूपणे—"तन्मध्ये पवनाक्षरञ्च मधुरं धूमावलीधूसरं
ध्यायेत् पाणिचतुष्टयेन लसितं कृष्णाधिरूढं परम्।
तन्मध्ये करुणानिधानममलं हंसाभमीशाभिधं
पाणिभ्यामभयं वरञ्च विदधत् लोकत्रयाणामपि ॥"

...संहितायां—"...योगात् मर्द्ध तेन प्रजायते।
...दिनार्द्धेन मर्द्ध तानन्तकोटिः प्रकीर्त्तिता ॥"

इत्यादौ ...योगो द्रष्टव्यः। प्राणायामे इडादिनाडीनां क्रमिकक्रियाप्रकाशो देहलघुतादिश्च योगियाज्ञवल्क्यसंहितादावनुसन्धेयः।

प्राणायामफलमाह शिवसंहितायां—

"प्राणायामेन योगीन्द्रो लब्ध्वैश्वर्याष्टकानि वै।
पापपुण्योदधिं तीर्त्वा त्रैलोक्यचरतामियात्।"

"जगत् स्यात् पिष्टपे क्लीबं वायौ ना जङ्गमे विषु।
जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च ॥" इति मेदिनी ॥"

पञ्चामृतमाह त्रिपुरात्रिदृतं वचनम्। यथा—

"विट् च मूत्रमसृङ् मज्जा शुक्रं पञ्चामृतं स्मृतम्।"

अत्र हि कपालकुण्डलामुखेन खल्वात्मनोऽतीवतन्त्रशास्त्रवैचक्षण्यमाविष्कृतं कविना।
शार्दूलविक्रीडितं ...म् ॥ २ ॥

उद्वृत्त (१) स्खलितकपालकण्ठमाला
संघट्टक्वणितकरालकिङ्किणीकः।
पर्य्याप्तं मयि रमणीयडामरत्वं
सन्धत्ते गगनतलप्रयाणवेगः॥ ३॥

तथा हि। (ख)

विष्वग्वृत्तिर्जटानां प्रचलति निविड़ग्रन्थिनद्धोऽपि (२) भारः
संस्कारक्वाणदीर्घं पटु रटति कृतावृत्तिखट्टाङ्गघण्टा।

---

उद्वृत्तेति। उद्वृत्ता वेगेन कदाचिदुपर्य्युत्थिता, स्खलिता पुनरेव अवनता च कपालकण्ठमाला नरशिरोऽस्थिनिर्म्मित-ग्रीवाहारः, तत्र संघट्टेन कपालानां परस्पराघातेन क्वणिता शब्दायमानाः कराला दन्तुराः किङ्किण्यः तत्कण्ठमालास्थापिता एव क्षुद्रघण्टिका यस्मिन् स तथोक्तः। गगनतलप्रयाणवेगः मयि पर्य्याप्तं यथेष्टं रमणीय-डामरयोर्भाव इति रमणीयडामरत्वं, तथा च मादृशयोगिपक्षे रमणीयत्वं, साधारणपक्षे तु डामरत्वं भीषणत्वं सन्धत्ते सम्पादयति।

अत्र तादृशभीषणवेगात् तद्विरुद्धरमणीयत्वगुणोत्पत्तेर्विषमाऽलङ्कारः।

"डामरोड्डामरौ भीमे केलिसंरम्भनिर्भरे।" इति रत्नकोषः।

किङ्किण्यादिध्वनिना तादृशकुलयोगिनीनामानन्दो भवतीति वेदितव्यम्

तथाच जगद्धरधृतवचनम्—

"समुद्रघोषसम्भारकिङ्किणीघण्टिकास्वनैः।
सदानन्दो भवेद्योगी न निद्रा न क्षुधा तृषा॥"

प्रहर्षिणी वृत्तम्॥ ३॥

(ख) रमणीयडामरत्वं समर्थयितुमाह तथाहीति।

विष्वगिति। विष्वक् सर्वतो वृत्तिरवस्थानं यस्य स विष्वग्वृत्तिः जटानां भारः

(१) अपि च। उल्लोल...इति पाठान्तरम्। (२) ...बन्धोऽपि इति पाठभेदः।

ऊर्द्ध्वं धूनोति वायुर्विहृतशवशिरःश्रेणिकुञ्जेषु गुञ्ज-
न्नुत्तालः किङ्किणीनामनवरतरणत्कारहेतुः पताकाम् ॥४॥

परिक्रम्यावलोक्य गन्धमाघ्राय च (१) इदं तावत् (२) पुराणनिम्ब

समूहः, निविड़ो गाढ़ो यो ग्रन्थिर्गथनं तेन नद्धो बद्धोऽपि सन् वेगवशात् प्रचलति। खट्वाङ्गं शिवस्यास्त्रविशेषः (चिमटा इति यस्य प्रसिद्धिः) तान्त्रिकयोगिजनोऽपि तत् धारयति तस्य घण्टा तत्र बद्धा काचित् घण्टा, संस्कारेण वेगाख्यसंस्कारेण य क्वाणः किङ्कण्यादीनां ध्वननं तेन दीर्घं, तथा पटुस्फुटं स्पष्टमिति यावत्, तथा कृता आवृत्तिः पौनःपुन्यं यस्मिन् कर्म्मणि तद्यथा तथा रटति शब्दायते। तथा उत्तालो महान्, किङ्किणीनां कण्ठमालास्थितानां क्षुद्रघण्टिकानाम् अनवरतरणत्कारहेतुः अविश्रान्त-ध्वनिजनकः, वायुर्गमनवेगानिलः, विहृतानि मांसहीनतया स्पष्टलक्ष्यमाणसकलरन्ध्र-भागानि यानि शवशिरांसि कण्ठमालागतकपालानि तेषां श्रेणयः कुञ्जा इव श्रेणय एव कुञ्जा इति वा तेषु, तदभ्यन्तरेष्वित्यर्थः गुञ्जन् अव्यक्तं शब्दं कुर्वन् सन् पताकां खट्वाङ्ग-बद्धां वैजयन्तीं वस्त्रखण्डमिति यावत् ऊर्द्ध्वं यथा स्यात्तथा धूनोति कम्पयति निम्न-स्थानादुपरि चालयतीत्यर्थः। सुतरामीदृशो व्यापारो मादृशयोगिपक्षे रमणीय एव साधारणपक्षे तु भीषण एवेति भावः।

अत्र स्वभावोक्तिरलङ्कारः, श्रेणिकुञ्जेष्वित्यत्र उपमारूपकयोः सन्देहसङ्करः, कुञ्जेषु गुञ्जदिति छेकानुप्रासश्च, समुदाये तु संसृष्टिः।

"संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने।" इति भाषापरिच्छेदः।

"खट्वाङ्गं (क्ली) शिवस्यास्त्रविशेषः।" इति शब्दकल्पद्रुमः।

"उत्ताल उत्कटे श्रेष्ठे विकराले प्लवङ्गमे।" इति मेदिनी।

स्रग्धरा वृत्तम् ॥ ४ ॥

(ग) इदमिति। पुराणेन पुरातनेन निम्बतैलेन भक्तानां मर्दितानां परित्यज्य-मानानाम् आरब्धभर्जनानां रसोनकानां लशुनानां गन्ध इव गन्धः एषामस्तीति तैः।

(१) गन्धमाघ्राय इति पाठः क्वचिन्नास्ति। (२) इदञ्चेति पाठान्तरम्।

तैलाक्तपरिभृज्यमानरसोनकगन्धिभि (१) श्चिताधूमैः पुरस्ता-(२) द्विभावितस्य महतः श्मशानवाटस्य नेदीयः करालायतनम्। (ग)

यत्र पर्य्यवसितमन्त्रसाधनस्यास्मद्गुरोरघोरघण्टस्याज्ञया सविशेषमद्य पूजासम्भारो मया सन्निधापनीयः। कथितञ्च मे गुरुणा, "वत्से! कपालकुण्डले! अद्य मया भगवत्याः करालायाः प्रागुपयाचितं स्त्रीरत्नमुपहर्त्तव्यम्, (३) तदत्रैव नगरे विदित- (४) मास्त" इति। तद्विचिनोमि (५)

---

पुरस्तादग्रत एव, विभावितस्य अनुमितस्य, महतो विशालस्य, वटन्ति वेष्टन्ते अनेनेति वाटः पन्थाः तस्य श्मशानगामिविस्तृतमार्गस्येत्यर्थः, नेदीयः अतिसन्निहितम्, इदं दृश्यमानं करालायास्तदाख्यायाश्चामुण्डाया आयतनं स्थानम्, दृश्यते इति शेषः।

"लशुनं गृञ्जनारिष्ट-महाकन्दरसोनकाः" इत्यमरः। "वन्या वाटः पथो मतः" इति भागुरिः।

(घ) यत्रेति पर्य्यवसितं समाप्तं मन्त्रसाधनं पुरश्चरणं यस्य तस्य। सविशेषं दिनान्तरेभ्यः सातिशयं यथा स्यात्तथा। पूजासम्भारः करालार्च्चनोपकरणद्रव्यसमूहः। सन्निधापनीय उपस्थापनीय आनेतव्यः। प्राक् पुरश्चरणारम्भात् पूर्वम् उपयाचितं सङ्कल्पितं 'अस्मिन् पुरश्चरणे समाप्ते भगवत्यै स्त्रीरत्नमुपहरिष्यामीति' मनीषितमित्यर्थः, स्त्रीरत्नं काचित् उत्कृष्टा स्त्री, उपहर्त्तव्यं बलिभावेन दातव्यम्।

(१) रसोनक रसगन्धिभिरिति पाठभेदः। (२) अग्रस्तादित्यपि पाठः।

(२) भगवत्याः करालाया यन्मया...इति पाठोऽपि

(४) विचितमिति भिन्नः पाठः।

(५) पुस्तकान्तरे पाठोऽयं न दृश्यते।

सकौतुकमग्रेऽवलोक्य। ततकोऽयमतिगम्भीरमधुराकृतिरुत्तम्भित-कुटिलकुन्तलभारः (१) कृपाणपाणिः श्मशानवाट- (२) मवतरति। य एषः (ध)

कुवलयदलश्यामोऽप्यङ्गं दधत् परिधूसरं
ललितचरणन्यासः (३) श्रीमान् मृगाङ्कनिभाननः।

तत् स्तौरवम्, अत्रैव नगरे पद्मावत्यां विदितं सर्वलोकावगतम् आस्ते विद्यते। इति कथितमित्यन्वयः। तत् तस्मात् विचिनोमि तत् स्तौरवमन्विष्यामि। भीषणेऽस्मिन् महाश्मशाने निशायामेव सुकुमाराकृतिरयमेकाकी युवा सञ्चरतीति कौतुकेन सहेति सकौतुकम्। अतिगम्भीरा ईदृशभयस्थानेऽपि कम्पादिविकाररहिता, मधुरा कोमला आकृतिर्यस्य सः। उत्तम्भितः जूटीकृत्य बद्धः कुटिलः वक्रः कुन्तलभारः केशकलापो यस्य सः। कृपाणपाणिः खड्गहस्तः।

"यद्दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये।
उपयाचितकं तत्तु दोहदं सम्प्रचक्षते॥" इति हारावली।

"भीशोककक्रोधहर्षेषु गाम्भीर्यं निर्विकारता।
सर्वावस्थासु माधुर्यं प्रियाणां मृदुकारिता॥" इति त्रिपुराविभूतम्।

कुवलयेति। कुवलयदलश्यामोऽपि स्वभावतो नीलोत्पलपत्रवत् श्यामवर्णोऽपि सन् परिधूसरं कुतोऽपि कारणात् धूसरवर्णम् अङ्गं दधत् धारयन्, ललितः सुन्दरः चरणन्यासः भूतले पादन्यासो यस्य सः, श्रीमान् स्वभावतः कान्तिमान्, मृगाङ्कनिभाननः चन्द्रतुल्यवदनः, य एष दृश्यत इत्यन्वयः। ललत् विलसत् नरजाङ्गलं मनुष्यमांसं यत्र सः, अतएव प्रविगलन्तो निष्पतन्तः, असृकपङ्काः छेदनकालतः किञ्चिद्विलम्बवशात

(१) कुन्तल इति साधः पाठः क्वचित्।

(२) श्मशानमवतरतीति पुस्तकान्तरे पाठः

(३) विकटन्यास इति पाठान्तरम्।

हरति विनयं वामो यस्य प्रकाशितसाहसः
प्रविगलदसृक्पङ्कः पाणिर्ललद्बहुजाङ्गलः ॥ ५ ॥

निरूप्य। अये! (१) स एष कामन्दकीसुहृत्पुत्रो महामांसस्य प्रणयिता माधवः। तत् किमनेन, समीहितं (२)

---

घनीभूतरक्तबिन्दवो यस्मात् सः सुतरां प्रकाशितं सूचितं साहसम् अन्यदेहात् मांसानयनरूपं दारुणाध्यवसायकार्य्यं येन सः यस्यास्य वामः पाणिः विनयं शिक्षासौकुमार्य्यं हरति विनाशयति, चञ्चलत्वमेव द्योतयतीत्यर्थः। सुतरामयं किमपि दुष्करं कर्म्म साधयितुमिच्छतीति भावः।

अत्र लुप्तोपमाद्वयस्य पदार्थहेतुककाव्यलिङ्गद्वयस्य च परस्परनैरपेक्ष्यात् संसृष्टिरलङ्कारः।

साहसमाह व्यवहारतत्त्वे नारदः—

"मनुष्यमारणं स्तेयं परदाराभिमर्षणम्।
पारुष्यमनृतञ्चैव साहसं पञ्चधा स्मृतम्॥"

"जाङ्गलं ( क्ली ) मांस" इति शब्दकल्पद्रुमः। हरिणी वृत्तम्॥ ५॥

(ङ) निरूप्येति। निरूप्य योगप्रभावेण निश्चित्य। कामन्दकीसुहृदः कस्यिन-नगरेश्वरसचिवस्य देवरातस्य पुत्रः, महामांसस्य नरमांसस्य प्रणयिता श्मशानपिशाचेभ्यो विक्रेता। योगप्रभावादिदमवधारणम्, अन्यथा माधवेन चतुर्थाङ्के स्वगतभावेनैव महामांसविक्रयस्योक्तत्वेन परेषां श्रवणासम्भवात् परस्पराश्रवणस्याप्यसम्भवेन कपालकुण्डलाया ईदृशमवधारणं नोपपद्यत इति भाव्यम्। अनेन एतत्कर्त्तृकविघ्नसंशयेन, किं फलं, किमपि नेत्यर्थः। तथाच अस्माकं योगप्रभावसमीपे अस्य यत्किञ्चित् साधनं कथमपि न प्रभविष्यति, सुतरामनायासेनैव मालतीमानीय गुरोः सङ्कल्पसाधनाय

---

(१) क्वचित् "अये" इति पाठो नास्ति।

(२) भवतु समीहितमिति पाठभेदः।

सम्पादयामि। विगलितप्रायश्च पश्चिमसन्ध्यासमयः। तथाहि सम्प्रति (१)। (ङ)

व्योम्नस्तापिच्छगुच्छावलिभिरिव तमोवल्लरीभिर्व्रियन्ते
पर्य्यन्ताः, प्रान्तवृत्त्या पयसि वसुमती नूतने मज्जतीव।

गन्त्यार्य्य वेति भावः। अतएवाह समीहितमिति। समीहितं चेष्टितं स्त्रीरत्नानयनम् विगलितप्रायः गतप्रायः, पश्चिमसन्ध्यासमयः सायंसन्ध्याकालः। सुतरामद्यैव सम्पन्नसमीहितसाधनस्येति भावः।

व्योम्न इति। व्योम्न आकाशस्य पर्य्यन्ताः दृष्टिसीमान्तदेशे यवनिकावत् भूतलन्यग्ना इव प्रतीयमानाः प्रदेशाः तमोवल्लरीभिः अन्धकारलताभिः, तापिच्छगुच्छावलिभिरिव तमालस्तवकश्रेणिभिरिव, व्रियन्ते आच्छाद्यन्ते। तथा वसुमती पृथिवी प्रान्तवृत्त्या समन्ततः पर्य्यन्तदेशनिमज्जनक्रमेण नूतने पयसि अभिनवे जले मज्जतीव मग्ना भवतीव। यथा ऋजुभावेन निमज्जतः कटाहादिवर्त्तुलवस्तुनः प्रथमं निमग्नतया प्रान्तभागो न दृश्यते, अनिमग्नो मध्यभागस्तु दृश्यत एव, परन्तु क्रमशो निमग्नतया मध्यभागोऽपि न दृश्यते; तथा दृष्टिसीमान्तवर्त्ती भूतलांशोऽन्धकारलीनतया प्रथमं न दृश्यते, सन्निहितस्थानन्तु दृश्यत एव परन्तु क्रमशोऽन्धकारलीनतया तदपि न दृश्यते इति सरलार्थः।

तथा त्रियामा रात्रिः प्रारम्भेऽपि स्वाविर्भावसमयेऽपि, वनेषु वनप्रदेशेषु वात्याया वातसमूहस्य संवेगेन विष्वग् वितता सर्व्वतो विस्तारिता, वलयिता मण्डलाकारेण स्थिता, स्फीता बहुलीभूता च या धूम्या धूमसमूहः, तस्याः प्रकाश इव प्रकाशो यस्य तं तत्सदृशमित्यर्थः। निजं स्वकीयं नीलिमानं नीलतां तरुणयति प्रसुख एव गाढान्धकाररूप-यौवनं प्रापयति गाढं करोतीत्यर्थः। सुतरां समीहितसम्पादनस्यायमेवोपयुक्तसमय इति भावः।

(१) सम्प्रतीति पाठोऽपि क्वचिन्नास्ति।

वात्यासंवेगविष्वग्वितत-वलयित-स्फीतधूम्याप्रकाशं
प्रारम्भेऽपि त्रियामा तरुणयति निजं नीलिमानं वनेषु ॥६॥

इति निष्क्रान्ता (१)।

विष्कम्भकः (२)। (च)

ततः प्रविशति यथानिर्दिष्टो माधवः। (छ)

माध। साशंसम्। (ज)

---

अत्र प्रथमवाक्ये उपमाऽलङ्कारः, द्वितीये भावाभिमानिनी वात्या क्रियोत्प्रेक्षा, तृतीये च लुप्तोपमा, इत्येतेषां मिथोनैरपेक्ष्यात् संसृष्टिः।

"असङ्गिनी च वाताली स्याद्वात्या वातमण्डली" इति त्रिकाण्डशेषः। "धूम्या धूममसूहेऽपि नीहारेऽपि निगद्यते" इति धरणिः।

स्रग्धरा वृत्तम् ॥ ६ ॥

(च) विष्केति। तल्लक्षणन्तूक्तम्। कपालकुण्डलारूपमध्यमपात्रेण प्रयोजितत्वात् शुद्धविष्कम्भकोऽयम् इति। शुद्धविष्कम्भ इति क्वचित् पाठोऽपि। यथा दर्पणे—

"मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः।
शुद्धः स्यात्... ॥"

तथा चात्र करालायै स्त्रीरत्नोपहारदानसङ्कल्पः, तदायतने अघोरघण्टस्य सन्निधानादिकञ्च वृत्तकथांशनिदर्शनम्, मालत्यानयनादिकञ्च वर्त्तिष्यमाणकथांशनिदर्शनमित्यनुसन्धेयम्।

(छ) तत इति। यथानिर्दिष्टः वामहस्तगृहीत-गलद्रक्तनरमांसखण्डादिरूपः।

(ज) माधेति। आशंसया मालतीलाभाशया सहेति साशंसम्, आहेत्यर्थः।

---

(१) इति परिक्रम्य निष्क्रान्ता इति पाठभेदः।

(२) इति शुद्धविष्कम्भ इति पाठान्तरम्।

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः (१) ॥७॥

---

प्रेमेति । प्रेमा अनुरागाङ्कुरः तेन आर्द्राः सरसाः प्रणयम् अङ्कुरावस्थातः किञ्चिदतिक्रान्तमनुरागं स्पृशन्ति भजन्त इति प्रणयस्पृशः, तथा परिचयात् अयमीदृश इति विशेषज्ञानात् उद्गाढः अतीव घनो यो रागोऽनुरागस्तस्य उदय उत्पत्तिर्यासु ताः, निसर्गमधुराः स्वभावमनोहराः, मुग्धदृशः सुन्दरनयनायाः मालत्याः, तास्ताः पूर्वानुभूताः चेष्टाः कटाक्षविक्षेप-भ्रूभङ्गोचनाङ्गवलनादयः मयि भवेयुः इत्येवाशंसेति भावः । अतएव आशंसया 'कथमस्याः पुनरपि तादृशकटाक्षविक्षेप-गोचरो भवेयं' 'कथं वा प्रणयमधुरां वाचमाकर्णयेयं' 'केन वा गाढालिङ्गनसुखमनुभवेयं' इत्यादिरूपया आशया परिकल्पितासु निर्म्मितास्वपि यासु चेष्टासु, यथार्थरूपासु का कथा सङ्कल्पमात्रनिर्म्मितास्वपीत्यपरार्थः, क्षणात् तत्क्षणात् बाह्यकरणानां बहिरिन्द्रियाणां चक्षुरादीनां व्यापारं वृत्तिं रूपादिस्वस्वविषयग्रहणसामर्थ्यमित्यर्थः, रोद्धुं शीलं यस्य सः बाह्यकरणव्यापाररोधी, तथा सान्द्रो निरन्तरः आनन्दः सुखं यत्र स आनन्दसान्द्रः, अन्तःकरणस्य चित्तस्य लयो विलीनता भवति तन्मयता भवतीत्यर्थः । तथा च भावनावशात् तासु तासु मालतीचेष्टास्वेव चित्तस्यैकान्तनिमग्नतया चक्षुरादिबहिरिन्द्रियैः सम्बन्धाऽभावात् तेषां सन्निकर्षेऽपि विषयान्तररूपादिप्रत्यक्षं न भवति ; किन्तु निविड़ः कश्चिदानन्दः परिस्फुरतीति सरलार्थो भावार्थश्च ।

अत्र साभिप्रायविशेषणत्वात् परिकराऽलङ्कारः, अर्थापत्तिश्च, इत्यनयोरङ्गाङ्गिभावेन सङ्करः ।

(१) आनन्दसान्द्रोदय इति क्वचित् पाठः ।

अघोर । अरे (१) ब्राह्मणडिम्भ ! (घ)

व्याघ्राघ्रातमृगीकृपाकुलमृगन्यायेन हिंसारुचेः

पाप ! प्राण्युपहारकेतनजुषः प्राप्तोऽसि मे गोचरम् ।

इत्येककर्त्तृककारकत्वाद्दीपकम्. अनयोर्मिथो नैरपेक्ष्यात् संसृष्टिः । तथा हेतुषु पदद्वयं तृतीयान्तं पदद्वयञ्च पञ्चम्यन्तमिति भग्नप्रक्रमताद्दोषः । तथा च साहित्यदर्पणटीकायां रामचरणः "कारकोपसर्गादावपि प्रक्रमभङ्गो बोद्धव्य" इति । तेन च 'वासेनोद्दिकन्तं छतं करुणयाश्चर्येण विक्षोभितम्' इति तृतीयचरणपरिवर्त्तनेनैव तत्समाधानं विधेयम् ।

आसने चरतीत्यासनचरी "चरेष्ट" इति टप्रत्ययान्ताद्दीप्रत्ययः । समासाद्य इत्यत. पवं 'वर्त्तमानस्य' इत्यध्याहर्त्तव्यक्रियया सहैककर्त्तृकता । तथात्वेऽपि न न्यूनपदत्वदोषः, नियमेन तत्प्रतीतेरीदृशभूरिप्रयोगदर्शनाच्च ।

शार्दूलविक्रीडितं वृत्तम् ॥ २८ ॥

(घ) अघोरेति । ब्राह्मणडिम्भ ! विप्रबालक !, ब्राह्मणतया बालकतया च भीरुस्वभावत्वात् शूरत्वहीनेत्यर्थः । "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः ।

व्याघ्रेति । हे पाप ! उत्कृष्टवलिविघ्नाचरणात् सम्प्रति पापकारिन् ! व्याघ्रेण आघ्रातायाम् आक्रान्तायां मृग्यां हरिण्यां कृपाकुलः परित्राणाय दयाव्यग्रो यो मृगो हरिणस्तन्न्यायेन तत्साद्दृश्येन तादृशो हरिण इवेत्यर्थः. त्वं हिंसारुचेः सर्वदा प्राणिवधप्रवृत्तस्य, प्राणिनामुपहारः चामुण्डार्थमुपायनं यत्र तत्, तादृशं केतनमायतनं जुषते सेवते यः स, तस्य मे मम गोचरं विषयं प्राप्तोऽसि । अतएव नास्ति निस्तारः-स्तवेतिभावः । निस्ताराभावमेवाह सोऽहमिति । स सर्वदा हिंसारुचिः सततप्राणिवध-प्रसिद्धकरालायतनस्थश्चाहं खड्गस्य आहत्या आघातेन छिन्नस्य स्कन्धबन्धस्य स्कन्ध-

(१) रे रे इत्यपि पाठः ।

सोऽहं प्रागभवतैव भूतजननीमृच्छोमि खड्गाहति-
च्छिन्नस्कन्धकबन्ध (१)-रन्ध्ररुधिरप्राग्भारनिष्यन्दिना ॥ २८
माध। आः (२) दुरात्मन! पाषण्ड! चाण्डाल! (३)
असारं संसारं, परिमुषितरत्नं त्रिभुवनं,
निरालोकं लोकं, मरणशरणं बान्धवजनम्।

बन्धस्य ग्रीवादेशस्येत्यर्थः, रन्ध्राच्छिद्रात् रुधिरप्राग्भारं रक्तप्रवाहं निष्यन्दयति अवस्रंसयति यः स तथोक्तस्तेन, भवतैव त्वयैव प्राक् पूर्व्वं भूतानां जननीं सकलप्राणिनां मातरम् इमां चामुण्डाम् ऋच्छोमि प्रीणयामि। पश्चात्तानयेति भावः।

अत्रार्थीयमुपमाऽलङ्कारः, छेकानुप्रासवृत्त्यनुप्रासौ चेति संसृष्टिः। बालस्कन्धः स्कन्धः इति स्कन्धकः,अल्पार्थे कप्रत्ययः, तद्रूपो बन्धः शिरःकलेवरसंयोगस्थानमिति स्कन्धकबन्धः। ईदृग्व्याख्याने न पौनरुक्त्यदोषः। किन्तु छिन्नस्कन्धेति कबन्धेति भिन्नपदमङ्गीकृत्य व्याख्याने "कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरकोषात् पाठान्तरकल्पनामन्तरेण पौनरुक्त्यदोषो दुर्निवार एवेति भाव्यम्।

शार्दूलविक्रीडितं वृत्तम् ॥ २८ ॥

असारमिति। अरे दुरात्मन्! पाषण्ड! चाण्डाल! संसारं जगत्प्रपञ्चं कर्त्तृकेन हेतुना असारम् अस्या हत्यया सारपदार्थरहितं विधातं व्यवसितोऽसि कर्त्तुं प्रवृत्तोऽसि। इति सर्व्वत्र योजनीयम्। तथा च "सारन्तु मल्लिकारत्नं संसार इति निश्चय" इत्युक्तेः सर्व्वेषामेव परमलोचनचमत्कारित्वादियमेव संसारेऽस्मिन् सारपदार्थ इति भावः। त्रिभुवनं, परिमुषितम् अस्या हत्यया अपहृतं रत्नं यस्मात्तादृशम्। इयमेकैवास्मिन् त्रिभुवने सर्व्वसमुत्कर्षेण रत्नभूतेत्याशयः। लोकं जगत्, निरालोकं

(१) व्यस्तस्कन्धकबन्ध...इति पाठान्तरम्।

(२) आः, इति पाठः क्वचिन्नास्ति। (३) चण्डाल इति भिन्नः पाठः।

अदर्पं कन्दर्पं, जननयननिर्म्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः॥ ३०॥

अस्या हन्त्या, आलोकरहितम् अन्धकाराच्छन्नमित्यर्थः। आनन्दैकरसेन सर्वेषामेव मनःप्रकाशादियमेव लोकेऽस्मिन्नालोकरूपेत्यभिप्रायः। अथवा जडानां सौरालोकादीनामानन्दात्मकब्रह्मप्रकाश्यत्वेनाभासत्वादियमेवानन्दैकरसप्रकाशात्मकतया यथार्थ आलोक इत्यभिप्रायः। बान्धवजनं पितृभ्रातृप्रभृतिकं, मरणमेव शरणम्, अस्याः शोकवशादाश्रयो यस्य तं तथोक्तम्। तथा च अस्याः स्वभावसौन्दर्य्याभ्यामेतावद्वात्सल्यवान् बान्धवजनः, यदेतामन्तरेण क्षणमपि न जीवतीति, सुतरामेकस्या एवास्या बधेन बहूनां बध इत्यहो महदनुचितमिति भावः। कन्दर्पं मदनम्, अदर्पम् अस्या बधेन जगद्विजयदर्पहीनम्। तथा हि त्रिलोकीललनाललामभूतामेनामेवादाय कन्दर्पो जगन्मोहनदर्पं करोति, किन्त्वस्या अभावे तस्य स दर्पश्चिराय नश्येदित्यभिप्रायः। जनानां नयननिर्म्माणं विधातृकर्त्तृकनेत्रसृष्टिम्, अफलम् अस्या बधेन निष्फलम्। अलौकिकसौन्दर्य्यदर्शनं हि विधातृकर्त्तृकजननयननिर्म्माणफलम् इयञ्चालौकिकसौन्दर्य्यशालिनी, सुतरामस्या अभावे तदभावान्निष्फलमेव तज्जननयननिर्म्माणमित्याशयः। तथा जगत् भुवनं कथं जीर्णारण्यम् अस्या बधेन गच्छविरलतरुप्रायं गहनं विधातुं व्यवसितोऽसि। तथा च अनयैव ललामभूतयैकरूपया जगदिदं नवकुसुमपल्लवादि-परिशोभित-महारामरूप-परमारामरूपमास्ते; अस्याः पुनरभावे तु कुसुमाकुलरूप-गच्छपादपप्रायभयङ्करारण्यरूपमेव भवेदिति भावः।

अत्र ईदृशैर्वचोभङ्गीविशेषैर्मालत्याः संसारसारत्वादीनां गम्यमानानामभिधेयवत् स्पष्टप्रतिपादनात् पर्य्यायोक्तमलङ्कारः, तथा विधातुमित्येकक्रियया असारादीनामप्रस्तुतानां कर्म्मतयाऽभिसम्बन्धात्तुल्ययोगिता, जगज्जीर्णारण्यमित्यत्र निरङ्गं केवलरूपकञ्च इत्येतेषामङ्गाङ्गिभावेन सङ्करः। तेन च मालत्यामलौकिकशीलसौन्दर्य्यशालित्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। छेकानुप्रासवृत्त्यनुप्रासौ च शब्दालङ्काराविति समुदायो

**अपि च । रे रे पाप !**

**प्रणयिसखी (१) सलील-परिहासरसाधिगतै-**
**र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।**

---

सङ्क्षिप्तः । तथा असारं संसारमित्यादिकं मालत्याः परमोत्कर्षप्रतिपादकं, मरणशरणं बान्धवजनमिदन्तु न किञ्चिदुत्कर्षप्रतिपादकं कारणवशात्कृपाणामप्यभावे स्नेहपरतन्त्रस्य बान्धवजनस्य मरणसम्भवादिति सहचरवैजात्यवशात् सहचरभिन्नतादोषः, स च 'विधिविरचितं सर्व्वमरुचि' इत्यपरापरवस्तुमालतीपरमोत्कर्षप्रतिपादकपाठेन परिहरणीयः । एतद्दोषपरिजिहीर्षयैव कुत्रकतिपयपरिभ्रान्तयः काव्यतत्त्वज्ञाः 'विधिविलसितं सर्व्वमफलम्' इति पाठमङ्गीकृतवन्तः । स चापि न समीचीनः सर्वमप्यफलमित्युपादानात् पुनरनवीकृतत्वदोषापत्तेः । तथा 'असारं संसारम्' इत्यनेनैव मालत्या असाधारणत्वप्रतिपादने सत्यपि पुनस्तस्यैव वाक्यान्तरैरपि बोधनादर्थगतपौनरुक्त्यदोषः प्रसज्जत्यपि

"अविशेषेण पूर्वोक्तं यदि भूयोऽपि कीर्त्यते ।
तदकार्यं रसाक्षिप्त-चेतसां तन्न दुष्यति ॥"

तत्र चैतस्यैव श्लोकस्योदाहृतत्वात् । अत्रोदाहरणं नाम गर्भसन्ध्यङ्गम् । तथा च दर्पणे—

"उदाहरणमुत्कर्षयुक्तं वचनमुच्यते ।"

अतीव मनोहरोऽयं श्लोकः । शिखरिणी वृत्तम् ॥ ३० ॥

प्रणयीति । यत् मालत्याः वपुः, प्रणयिन्यः प्रेमास्पदीभूता याः सख्यः, तासां सलीलो यः परिहासस्तत्र रसेन रागेण स्वेच्छयैव अधिगतैः प्राप्तैः, ललितस्य कोमलत्वात् सुन्दरस्य शिरीषपुष्पस्य हननैः प्रहारैरपि ताम्यति पीडामापद्यते । वधाय तव वपुषि

---

(१) प्रणयसखीति पाठान्तरम् ।

वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः

पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥ ३१ ॥

अघोर। आः, दुरात्मन्! प्रहर प्रहर (१)। नन्वयं न भवसि ?। (ङ)

माल। पमोद णाह! माहसिअ! दारुणो क्खु अअं

शस्त्रं खड्गम् उपक्षिपतः पातयतस्तव शिरसि, अकाण्डे अनवसरे पतनशील इत्यर्थः, यमदण्डः इव एष भुजो मम समुष्टिबन्धो दक्षिणहस्तः पततु। एतन्मुष्टिप्रहारेण दारुण-निर्दयनृशंसस्य ते शिरश्चूर्णयामीति भावः। सत्यपि खड्गे तं दक्षिणहस्ताद्वामहस्ते निधाय शीर्षनिबन्धनः केवलवागाडम्बरोऽयमिति प्रतीयते।

अत्र कठिनवस्तुप्रहारे का कथा नाट्यशपुष्पहननैरपि ताम्यतीत्यर्थापत्तिः, तथात्वे च पीडाया असम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः। ताभ्याञ्चातीव सौकुमार्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। चतुर्थचरणे उपमा च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः। तथा यमदण्डः पतति, भुजस्तु पततु, इति विधिभेदात् "चिरं जीवतु ते सूनुर्मार्कण्डेयमुनिर्यथा" इति दर्पणोदाहृतवद्भग्नप्रक्रमतादोषः, स च 'पतती'ति पाठेनैव समाधेयः। तथात्व एवाभिप्रेतार्थनिर्वाह इति सुधीभिर्विभावनीयम्।

नर्दटकं वृत्तम् "यदि भवतो नजौ भजजला गुरु नर्दटक" मिति लक्षणात् ॥ ३१ ॥

(ङ) अघोरेति। पश्यामि तव कियदस्ति पौरुषमिति सावष्टम्भोपहासेयं प्रहर प्रहरेत्युक्तिः। अयं बलिविघ्नविधान-प्रत्यवायात् दुरात्मा न भवसि किम्, अपि तु भवस्येवेत्यर्थः। सुतरामिदानीमेव त्वामहं निहन्मीति भावः।

(१) क्वचित् प्रहर प्रहरेति द्विरुक्तिर्नास्ति

हदासो, ता परित्तात्रसु मं, णिवत्तश्रदु इमादो अणत्थसंसआदो (१)। (च)

कपा। भगवन्! अप्रमत्तो भूत्वा दुरात्मानं व्यापादय। (छ)

माधवाघोरघण्टौ। मालतीकपालकुण्डले प्रति। अयि भीरु। (ज)

धैर्य्यं निधेहि हृदये, हत एष पापः
किंवा कदाचिदपि केनचिदन्यभावि।

(च) प्रसीद नाथ! साहसिकः दारुणः खल्वयं हताशः, तत् परित्रायस्व मां, निवर्त्ततामस्मादनर्थसंशयात्।

(च) मालेति। हताशो निर्दयः। अनर्थोऽनिष्टं तस्य संशयात्। अयं खल्वतीव दारुणनिर्दयप्रकृतिः, तदलौकिकरूपलावण्य-गुणवन्तमपि भवन्तं प्रति दयां न करिष्यति, युद्धे च जयनिश्चयाभावात् स्वकीयमनिष्टमप्याशङ्कनीयं, सुतरां मत्परित्राणीयममपहायास्मात् स्थानादपसर, तथा च सति नारीजीवनस्य तुच्छत्वात् पतिसर्वस्वत्वाच्च तव परित्राणेनैव हताया अपि मे परित्राणमेव भवेदिति सरलार्थो भावार्थश्च।

अत्र विद्रवो नाम गर्भसन्धेरङ्गं "शङ्काभयत्रासकृतः सम्भ्रमो विद्रवो मतः।" इति दर्पणलक्षणात्।

"हताशो निर्दये चाशारहिते पिशुनेऽपि च।" इति मेदिनी।

(छ) कपेति। अप्रमत्तः सावधानो भूत्वा। अस्यापि वीरत्वमस्त्यवादिति भावः।

(ज) माधवेति। अत्र कविवाक्ये यथासंख्यं नान्वयः। भीरु! भयशीले!।

धैर्य्यमिति। हृदये धैर्य्यं निधेहि स्थापय, अस्माद्भयजनितां कातरतां नावलम्बस्वेत्यर्थः। यत एष पापो हतः एष दुरात्मा मया व्यापादित एव। कथमीदृशी सम्भावना

(१) अणत्थसङ्कटादो इति पाठभेदः।

सारङ्गसंहृतिविधा (१) विभकुम्भकूट-
कुट्टाकपाणिकुलिशस्य हरेः प्रमादः ॥ ३२ ॥

नेपथ्ये कलकलः । सर्वे आकर्णयन्ति ।

पुनर्नेपथ्ये (२) । भो भो मालत्यन्वेषिणः सैनिकाः ! (३) इय-
ममात्यभूरिवसुमाश्वासयन्त्यप्रतिहतप्रज्ञाचक्षु (४) भंगवती

---

इत्याह किंवेति । कदाचिदपि केनचिदपि जनेन सारङ्गसंहृतिविधौ हरिणसंहारकर्मणि इभकुम्भकूटस्य हस्तिकुम्भसमूहस्य कुट्टाकं विदारणशीलं पाणिकुलिशं हस्तवज्रं यस्य तस्य तथोक्तस्य हरेः सिंहस्य प्रमादोऽनवधानता किंवा अन्वभावि अनुभूतः, अपि तु कथमपि नेत्यर्थः । पाणिकुलिशेन हस्तिकुम्भविदारणकारिणः सिंहस्य हरिणसंहारे यथा प्रमादो न स्यात्, तथा ( माधवपक्षे ) राजभटाभिभाविनः । अघोरघण्टपक्षे । अन्यविहृष्टबलिसमर्थे वीरभूततदास्यवाभिभाविनश्च मम नितान्ततुच्छस्यास्य विनाशे प्रमादो न स्यादेव, सुतरां मया हत एवायं पापात्मेति मन्भावयेति भावः ।

अतएवात्र समादप्रस्तुतात् प्रस्तुतस्य समस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः, तथा पाणिः कुलिशमिवेति लुप्तोपमा, पूर्वार्द्धे वाक्यार्थहेतुकं काव्यलिङ्गद्वयञ्च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः ।

"अनायाससाध्ये कर्म्मणि भविष्यत्यप्यतीतवद्व्यवहार" इति न्यायात् भविष्यत्यपि हृत इत्यतीते निष्ठाप्रत्ययः "श्रीकृष्णविप्रो विहृतिं वितेने" "गोपीनाथ इमञ्चकार" इत्यादिवत् । कुट्टाक इति "लङ्भिच्चिलुण्टिजल्पिकुट्टां षाक" इति षाकप्रत्ययः ।

वसन्ततिलका वृत्तम् ॥ ३२ ॥

( क ) पुनरिति । आश्वासयन्ती 'सुस्थीभव, जीवति ते मालती, अचिरादेव

---

(१) सारङ्गसङ्करविधाविति पाठान्तरम् ।

(२) क्वचित् पाठोऽयं नास्ति । (३) सैनिका इति पाठोऽपि कुत्रचिन्न दृश्यते

(४)...प्रज्ञागतिरिति पाठभेदः ।

कामन्दकी वः (१) समादिशति, पर्य्यवष्टभ्यतामेतत् करालायतनं द्रुतम् (२)। (झ)

नाघोरघण्टादन्यस्य कर्म्मैतद्भीषणाद्भुतम् (३)।
न करालोपहाराच्च फलमन्यद्विभाव्यते ॥ ३३ ॥

कपा। भगवन्! पर्य्यवष्टब्धाः स्मः। (ञ)

अघोर। सम्प्रति विशेषतः पौरुषस्यावसरः। (ट)

लभाने च मां दुर्व्यर्थवचनैः मान्त्वयन्ती। अप्रतिहतं केनाप्यनिवारितं प्रज्ञा ज्ञानमेव चक्षुर्यस्याः सा। पर्य्यवष्टभ्यतां परिवेष्ट्यताम्।

नाघोरेति। भीषणं जीवनशङ्कया बन्धूनां भयङ्करम्, अद्भुतं सतामपि रक्षिजनानामज्ञातभावेन सम्पन्नत्वादाश्चर्य्यम्, एतत् मालतीहरणरूपं कर्म्म अघोरघण्टादन्यस्य जनस्य न सम्भवति। किञ्चेति चार्थः। करालायै उपहारात् बलिभावेनोपायनात् अन्यत् फलम् अपहरणप्रयोजनं न विभाव्यते न प्रतीयते। करालायै बलिभावेनोपहर्त्तुमेवाघोरघण्टं न कयाचिन्मायया मालत्यपहृतेति निश्चीयत इति सरलार्थः। सुतरामेतत् पर्य्यवष्टभ्यताम्, अत्रैव सा विद्यते इति भावः।

अत्र क्षितिर्नाम गर्भसन्ध्यङ्गं "रहस्यार्थस्य तूद्भेदः क्षितिः स्या"दिति दर्पणलक्षणात् ॥ ३३ ॥

(ञ) कपेति। पर्य्यवष्टब्धाः सैनिकैः परिवेष्टिताः। सवासोक्तिरियम्।

अत्रोद्वेगो नाम गर्भसन्ध्यङ्गम्। तथा च साहित्यदर्पणे "नृपादिजनिता भीतिरुद्वेगः परिकीर्त्तितः।"

(ट) अघोरेति। विशेषतः पौरुषस्य, अतिरिक्तभावेन बाहुबलप्रकाशरूपपुरुष-

(१) पुस्तकान्तरे, व इति पाठो नास्ति। (२) द्रुतमित्यपि क्वचिन्न दृश्यते।

(३) नाघोरघण्टादन्यस्मात् कर्म्मैतद्दारुणादभूत्। इति पाठान्तरम्।

माल। हा ताद ! हा भअवदि !। (ठ)

माध। भवतु, बान्धवसमाजसुस्थितां मालतीं विधाय तत्-समक्षमेनं दुरात्मानं व्यापादयामि ( १ )। मालतीमन्यतः प्रेषयन् परिक्रामति ( २ )। ( ड )

माधवाघोरघण्टौ। अन्योऽन्यमुद्दिश्य। आः पाप ! ( ३ )

कठोरास्थिग्रन्थिव्यतिकररणात्कारमुखरः ( ४ )
खरस्नायुच्छेदक्षणविहितवेगव्युपशमः (५)।

( ठ ) हा तात ! हा भगवति !।

कारस्य, अवसरः समयः। सैनिकैः परिवेष्टनात्, महाप्रभाववत्याः कामन्दक्याः सन्निधावस्यन्मायामन्त्रादिप्रभावप्रकाशसम्भावनाया अभावाच्चेति भावः।

(ठ) मालतीति। हा तात ! हा भगवति ! कामन्दकि ! अहमीदृग्विपन्ना-स्मीति वाक्यशेषः।

(ड) माधेति। मालतीं बान्धवसमाजे पित्रादिबन्धुवर्गमध्ये सुस्थितां निरुप-द्रवभावेन स्थितां विधाय, तस्य बान्धवसमाजस्य समक्षं प्रत्यक्षम्, एनं कापालिकं, व्यापा-दयामि निहन्मि। तथा च सति कस्याप्यननुरोधेन स्वयमेव मालतीरक्षणादस्मत्-महोपकारं ज्ञास्यन्नवश्यमेव मह्यं मालतीं दातुं विशेषेण यतिष्यत इत्यभिप्रायः। अन्यतः बान्धवसमाजावस्थानदेशं प्रतीत्यर्थः।

उभावप्येकेनैव श्लोकेन प्रहारप्रकारमभिदधाते कठोरेति। हे पाप ! पापात्मन् ! कठोरेषु परिणतत्वेन कठिनेषु अस्थिग्रन्थिषु व्यतिकरेण सवेगसंयोगेन प्रहारेणेत्यर्थः.

(१) भवतु, बान्धवसंस्थामेनां विधाय तत्समक्षमेनां व्यापादयामीति भिन्नः पाठः।

(२) मालतीमन्यतः कापालिकश्चान्यतः प्रेरयन् परिक्रामति। इत्यपि पाठो दृश्यते।

(३) आः, रे रे पाप ! इति भिन्नः पाठः।

(४)...रणात्कारमुखर इति पाठोऽपि दृश्यते। (५)...वेगव्युपरम इति पाठभेदः।

# इति श्मशानवर्णनं नाम (१) पञ्चमोऽङ्कः। (ग)

---

(ग) इतीति। श्मशानवर्णनस्यैव विस्तृतत्वादस्य श्मशानवर्णनमिति नाम।

इति श्रीहरिदासमिश्रात्मजगौरीशविरचितायां मालतीमाधवटीकायां

भावमनोहरायामतिगहनं पञ्चमाङ्कविवरणं समाप्तम् ॥ ५ ॥

---

(१) श्मशानवर्णनमिति पाठः पुस्तकान्तरे नास्ति।

# षष्ठोऽङ्कः ।



ततः प्रविशति कपालकुण्डला । (क)

कपा । आः पाप ! (१) दुरात्मन् ! मालतीनिमित्तं व्यापादितास्मद्गुरो ! (२) माधवहतक ! अहं त्वया तस्मिन्नवसरे निर्दयं निघ्नत्यपि स्त्रीत्यवज्ञाता । सक्रोधम् । तदवश्यमनुभविष्यसि कपालकुण्डलाकोपस्य फलम् (३) । (ख)

(क) तत इति । अघोरघण्टवधानन्तरं स्त्रीत्यवज्ञावशान्माधवेन, कामन्दक्यादेशाच्च सैन्यवर्गेण कपालकुण्डला परिमुक्तेति प्रत्येतव्यम् ।

(ख) कपेति । पाप ! देवतार्चनरतस्य वामाचारिप्रधानस्याघोरघण्टस्य वधात् पापयुक्त इत्यभिप्रायः । मालतीनिमित्तमिति क्रियाविशेषणस्य कारकत्वात् तत्सापेक्षेऽपि समासः । हतक इति कुत्सायां कप्रत्ययः । हतको नीचलोकश्चासौ माधवश्चेति माधवहतकः । तत्सम्बोधनम् । राजदन्तादित्वात् परनिपातः । "हतकः (पु) नीचलोक" इति शब्दकल्पद्रुमः । तस्मिन्नवसरे अघोरघण्टवधकाले । निघ्नत्यपि त्वां प्रहरन्त्यपि, स्त्रीत्यवज्ञाता स्त्रीत्वनिबन्धनावहेलावशात् मुक्ता । अत्र क्षोभो नाम नाट्यालङ्कारः ।

"अधिक्षेपवचःकारी क्षोभः प्रोक्तः स एव तु ।" इति साहित्यदर्पणात् ।

(१) क्वचित् पापेति पाठो नास्ति । (२) विनिपातितास्मद्गुरो ! इति पाठान्तरम् ।
(३) विजृम्भितमिति पाठभेदः ।

शान्तिः कुतस्तस्य भुजङ्गशत्रो-
र्यस्मिन्निबद्धानुशया (१) सदैव।
जागर्त्ति दंशाय निशातदंष्ट्रा-
कोटिर्विषोद्गारगुरुर्भुजङ्गी॥ १॥

शान्तिरिति। तस्य भुजङ्गशत्रोः सर्पविनाशिनो जनस्य कुतः शान्तिः कथं स्वास्थ्यं स्यात्, अपि तु कुतोऽपि नेत्यर्थः। यस्मिन् जने निबद्धानुशया पत्युः सर्पस्य विनाशात् धृतदीर्घद्वेषा, निशातदंष्ट्राकोटिः सुतीक्ष्णदन्ताग्रा विषोद्गारेण गरलोद्वमनेन गुरुः कठोरा भुजङ्गी सर्पी सदैव दंशाय दंशनाय जागर्त्ति सचेष्टा तिष्ठति। यथा सर्पविनाशिनो जनस्य तत्पत्नीसर्पीकर्त्तृकदंशनभयात् सर्वदैवात्म-रक्षणव्यग्रतया शान्तिर्न स्यात्, तथा अघोरघण्टवधकारिणस्तवापि (माधवस्यापि) मत्कर्त्तृकमहापकारशङ्कावशात् सदैव तदव्याहतिप्राप्त्युपायान्वेषणपरतया कदापि शान्तिर्न स्यादिति भावः। एतेन कपालकुण्डला अघोरघण्टस्य शिष्या साधनशक्ति-श्चासीदिति प्रतीयते।

अत्रएवात्र समादप्रस्तुतात् प्रस्तुतस्य समस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः। तथा "न्यक्कारो ह्ययमेव मे यदरयः" इत्यादिवत् तच्छब्दनिर्दिष्टवाक्यस्य विधेयप्रतिपादकस्य पूर्वपाठेनानुवाद्यत्वप्रतीतिकारित्वाद्वाक्यगतविधेयाविमर्शदोषः,

स तु—"यस्मिन्निबद्धानुशया सदैव जागर्त्ति दंशाय निशातदंष्ट्रा।
महाविषोद्गारगुरुर्भुजङ्गी शान्तिः कुतस्तस्य भुजङ्गशत्रोः॥"

इति पाठेन परिहरणीयः। "अनुशयः पश्चात्तापे दीर्घद्वेषानुबन्धयो"रिति हैमः।

इन्द्रवज्रा वृत्तम्॥ १॥

---

(१) यस्मिन्नमुक्तानुशया इति भिन्नः पाठः।

नेपथ्ये ।

भो राजानश्चरमवयसामाज्ञया सत्वरध्वं
कर्त्तव्येषु, श्रवणसुभगं भूमिदेवाः पठन्तु ।
चित्रं नानावचननिवहै-(१) श्चेष्ट्यतां मङ्गलेभ्यः
प्रत्यासन्नस्त्वरयतितरां जन्ययात्राप्रवेशः ॥ २ ॥

---

भोरिति । भो राजानः ! हे पद्मावतीश्वरमहाराजसेवार्थोपस्थायिनः सामन्तनृपतयः ! चरमवयसां कुलाचारवेदिनां वृद्धानाम् आज्ञया आदेशेन कर्त्तव्येषु विवाहयात्रोपयोगिदधि-दूर्वा-पूर्णकुम्भादिद्रव्याहरणरूपेषु प्रयोजनेषु सत्वरध्वं गच्छत तत्तद्द्रव्याहरणाय चेष्टध्वमित्यर्थः । तथा हे भूमिदेवाः ब्राह्मणाः ! भवन्तोऽपि श्रवणसुभगं श्रुतिमधुरं, पठन्तु यात्रामङ्गलमुच्चारयन्तु । तथा मङ्गलेभ्यो वरकन्ययोर्मङ्गलार्थं नानावचननिवहैर्बहुविधवाक्यसमूहैः चित्रं जनानां चेतसि आश्चर्यं चेष्ट्यतां विधातुमारभ्यतां बन्दिभिरिति शेषः । कथमीदृक् समारम्भ इत्याह प्रत्यासन्न इति । प्रत्यासन्नः सन्निहितः, जन्यानां वरस्य स्निग्धानां जनानां यात्राया वरगृहात् कन्यागृहगमनक्रियायाः प्रवेशः प्राप्तिः, त्वरयतितरां सर्वानतिशयेन सत्वरीकरोति । तथा च वरकन्ययोर्नन्दनमालत्योर्विवाहार्थं महाराजस्यादेशेन नन्दनपक्षीया इतः परमेव मालतीपितुर्भूरिवसोर्गृहं प्रति यात्रां करिष्यन्ति, सुतरामयं समारम्भ इति भावः ।

अत्र पूर्ववाक्यार्थान् प्रति चतुर्थचरणगतवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः । तथा अन्यासां कर्तृवाच्यक्रियाणां मध्ये चेष्ट्यतामिति कर्म्मवाच्यक्रियानिर्देशात् भग्नप्रक्रमतादोषः, बन्दिभिरित्यध्याहारान्न्यूनपदतादोषश्च, सुतरां 'चित्रं नानावचननिवहैः कुर्वतां बन्दिनश्च' इति पाठेन तयोः समाधानं विधेयम् ।

(१) रचननिवहैरिति पाठान्तरम्

यावच्च सम्बन्धिनो न परापतन्ति, तावद्वत्सया मालत्या (१) नगरदेवतागृहमविघ्नमङ्गलाय गम्यता-(२) मित्यादिशन्ति भगवतीनिदेशवर्त्तिनोऽमात्यदाराः (३)। तथा (४) गृहीतसविशेषमण्डनः प्रतीष्यतामानुयात्रिको जन इति (५)। (ग)

कपा। भवतु, इतो मालतीविवाहपरिकर्मसत्वरप्रतीहारजनसहस्रसङ्कुलात् (६) प्रदेशादपक्रम्य माधवापकारं प्रत्यभिनिविष्टा भवामि। इति निष्क्रान्ता। (घ)

---

"जन्याः स्निग्धा वरस्य ये" इत्यमरः। सत्वरध्वमिति "समस्तृतीयया युक्त" इत्यात्मनेपदम्। मङ्गलेभ्य इति तादर्थ्ये चतुर्थी। मन्दाक्रान्ता वृत्तम्॥ २॥

(ग) यावच्चेति। सम्बन्धिनो वरपक्षीयाः, न परापतन्ति भूरिवसुगृहं नागच्छन्ति। भगवतीनिर्देशवर्त्तिनः कामन्दकयादेशाधीनाः, अमात्यदारा भूरिवसोर्भार्य्या। गृहीतं सविशेषं मण्डनं मालत्याभरणं येन स तादृशः, आनुयात्रिकः मालत्या अनुचरो जनः प्रतीष्यतां देवतागृहप्रवेशाय मालत्या प्रतिपाल्यताम्। तादृशजनादात्तमाभरणं परिधाय मालत्या देवतागृहं प्रविश्यतामित्यभिप्रायः। इत्यादिशन्तीत्यन्वयः। माधवेन कापालिकान्मालती परित्रातेति वृत्तान्तानधिगमात् पूर्वाङ्गीकाररक्षानुरोधाद्वा महाराजस्यादेशेन नगरपालः खल्विदमाघोषयतीति बोद्धव्यम्।

(घ) कपेति। मालत्या विवाहपरिकर्म्मणि विवाहसम्पादकनानाविधकार्य्ये, सत्वरं व्यग्रं यत् प्रतीहारसहस्रं बहुतरा द्वारपाला इत्यर्थः, तैः सङ्कुलात् व्याप्तात्, इतः प्रदेशात् अस्माद्भूरिवसोर्द्वारदेशात्। ईदृशस्थानान्मालत्यपहरणमसम्भवमिति भावः।

(१) मालत्या सहेति क्वचित् पाठः।

(२) गन्तव्यमिति पाठोऽपि। (३) आदिशति भगवती कामन्दकी इति पाठभेदः।

(४) अन्यश्च इति भिन्नः पाठः। (५) इति शब्दः कुत्रचिन्नास्ति।

(६) प्रतीहारशतसङ्कुलादस्मादिति पाठः क्वचित्।

# विष्कम्भकः । (१) । (ङ)

ततः प्रविशति कलहंसः ।

कल । आणत्तोम्हि, णअरदेवदागब्भघरत्थिदेन समअरन्देण माहमाहवेण (२) । जहा जाणाहि दाव इदोमुहं (३) पउत्ता मालदी ण वेत्ति । ता जाव णं आणन्दइस्सं । ( च )

---

(च) आज्ञप्तोऽस्मि, नगरदेवतागर्भगृहस्थितेन समकरन्देन माधमाधवेन । यथा जानीहि तावदितोमुखं प्रवृत्ता मालती नवेति । तद्यावदेनमानन्दयिष्यामि ।

(ङ) विष्केति । मध्यमपात्ररूपया कपालकुण्डलया प्रयोजितत्वात् शुद्धविष्कम्भकोऽयम् । अत्र च 'व्यापादितास्मद्गुरो !' इत्यादिना अघोरघण्टवधादीनां वृत्तकथांशानां निदर्शनम्, 'वत्सया मालत्या' इत्यनेन मालत्या नगरदेवतागृहगमनस्य, 'माधवापकारं प्रत्यभिनिविष्टा भवामी'त्यनेन मालत्यपहरणस्य च वर्तिष्यमाणकथांशस्य निदर्शनं बोध्यम् ।

(च) आणेति । इतोमुखम् एतन्नगरदेवतागृहाभिमुखं प्रवृत्ता आगन्तुमारब्धा । एनं माधवम् आनन्दयिष्यामि 'मालती इतोमुखं प्रवृत्ते'ति वृत्तान्तनिवेदनेनेति भावः ।

---

(१) इति शुद्धविष्कम्भ इति पाठोऽन्यत्र ।

(२) गब्भघरवत्तिणा मअरन्दसणाहेण माहवेण इति पाठोऽपि दृश्यते ।

(३) जणाहिमुहं इति क्वचित् पाठः ।

ततः प्रविशतो माधवमकरन्दौ ।

माध । मालत्याः प्रथमावलोकनदिनादारभ्य विस्तारिणो (१)
भूयः स्नेहविचेष्टितैर्मृगदृशो नीतस्य कोटिं पराम् ।
अद्यान्तः खलु सर्वथास्य मदनायासप्रबन्धस्य मे
कल्याणं विदधातु वा भगवतीनीतिर्विपर्य्येतु वा ॥ २ ॥

मालत्या इति । मृगदृशो हरिणीलक्षणाया मालत्याः बकुलतरुसन्निधाने प्रथमावलोकनदिनादारभ्य विस्तारिणो विस्तृतभावेनोत्पन्नस्य, भूयः पुनरपि स्नेहविचेष्टितैः तत्प्रतिमूर्त्तिचित्रणप्रभृतिभिरनुरागव्यापारैः, परां कोटिं चरमां सीमां सातिशयवृद्धिमित्यर्थः, नीतस्य प्रापितस्य, अस्य अनुभूयमानस्य, मे मम मदनायासप्रबन्धस्य कामपीडापरम्परायाः, सर्वथा सर्वेण प्रकारेण अद्य खलु अद्यैव, अन्तः अवसानं भविष्यति । इति यथार्थमिति भावः । कथमेतदवगम्यते इत्याह कल्याणमिति । भगवत्याः कामन्दक्याः नीतिः कौशलं, कल्याणं मङ्गलम् अत्रैव मालत्याः पाणिग्रहणरूपाभिलाषसिद्धिमित्यर्थः, विदधातु करोतु वा, वा अथवा विपर्य्येतु विपरीता भवतु केनचित् प्रतिहता सती तादृशमङ्गलं न विदधातु । कामन्दक्याः कौशलेन यदि मालत्याः पाणिग्रहणं सम्पद्येत, तदा तत्सम्भोगेनैव कामपीडाया अवसानं भविष्यति, यदि तु केनचित् प्रतिबन्धकेन तत्कौशलस्य निष्फलतया तत् पाणिग्रहणं न सम्पद्येत, तदापि मरणादेव तत्कामपीडाया उपशम इत्युभयथाप्यद्यैवान्त इति निश्चय इति भावः ।

अत्रापि प्रथमवाक्यार्थं प्रति चतुर्थचरणगतवाक्यार्थद्वयस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः. 'विदधातु' 'विपर्य्येतु' इत्यनेकक्रिययोर्भगवतीनीतिरित्येककारककारकत्वाद्दीपकञ्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः ।

(१) प्रथमावलोकदिवसादारभ्य विस्तारिणः, प्रथमावलोकनदिनादारभ्य विस्तारितेः, इति पाठभेदौ ।

मक। वयस्य ! कथं हि भगवत्याः सुमेधसो नीतिर्विपर्य्यग मेष्यति (१)। (छ)

कल। उपसृत्य। णाह ! दिट्ठिआ वड्ढसि। पउत्ता क्खु इदोमुहं (२) मालदी। (ज

माध। अपि सत्यम् ? (३)।

मक। सखे ! किमश्रद्दधान इव (४) पृच्छसि। न केवलं प्रवृत्ता, प्रत्यासन्ना च वर्त्तते। तथा हि। (झ)

---

(ज) नाथ ! दिष्ट्या वर्द्धसे प्रवृत्ता खलु इतोमुखं मालती।

इदञ्च मार्गो नाम गर्भसन्ध्यङ्गम् "तत्त्वार्थकथनं मार्गः" इति दर्पणलक्षणात्। तथा इयमपि च प्राप्त्याशा नाम कार्य्यस्य तृतीया,वस्था। यथा साहित्यदर्पणे—

"उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः।"

शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

(छ) मकेति। सुमेधसोऽतीवबुद्धिमत्याः कामन्दक्याः कौशलेनैव मालत्याः पाणिग्रहणं ते सम्पत्स्यते, सुतरामाश्वस्तो भवेति भावः।

(झ) मकेति। अश्रद्दधान इव अनर्हमवाक्यमविश्वसन्निव। प्रत्यासन्ना एतन्नगर देवतागृहनिकटवर्त्तिनी च वर्त्तते मालतीति शेष

(१) कथं भगवत्याः सा मेधाशक्तिर्विपर्य्येष्यति इति पाठान्तरम

(२) जत्ताहिमुहम् इति भिन्नः पाठः।

(३) अपि नाम सत्यमिति क्वचित् पाठः।

(४) इवशब्दः क्वचिन्नास्ति।

अस्माकमेकपद एव मरुद्विकीर्ण-
जीमूतजालरसितानुकृतिर्निनादः ।
गम्भीरमङ्गलमृदङ्गसहस्रजन्मा
शब्दान्तरश्रवणशक्ति(१)-मपाकरोति ॥ ४ ॥

तदेहि, जालमार्गेण पश्यामः । तथा कुर्व्वन्ति । (ञ)

कल०। णाह ! पेक्ख (२) इमे दाव उप्पदिअराअहंसविब्भमाहिरामचामरसमीरणुव्वेल्लिअ-कदलिआवलीतरङ्गिदुत्ताण-(१)

---

(ठ) नाथ ! प्रेक्षस्व। इमं तावत् उत्पतितराजहंसविभ्रमाभिराम-

अस्माकमिति। मरुता वायुना विकीर्णं मेघान्तरोपरि विक्षिप्तं यत् जीमूतजालं मेघसमूहः तस्य, रसितस्य गर्ज्जितस्य अनुकृतिरनुकरणं यस्मिन् स तथोक्तः। गम्भीरं गम्भीरनादि, मङ्गलं माङ्गलिकं यत् मृदङ्गसहस्रं बहुतरा मुरजाः, तस्मात् जन्म उत्पत्तिर्यस्येति सः, तादृशो निनादः शब्दः, एकपद एव सद्य एव इदानीमेवेत्यर्थः, अस्माकं शब्दान्तरश्रवणशक्तिम् अपाकरोति शब्दान्तर-तिरोधानेन नाशयति। अस्य शब्दस्य मालत्यनुगामित्वेन तस्या ध्रुवं प्रत्यासन्नत्वात् कलहंसवाक्ये प्रत्यविश्वासो न त्वया करणीय इति भावः।

अत्रार्थगतोपमाऽलङ्कारः।

"तत्क्षणैकपदं तुल्यं सद्यः सपदि च द्रुते।" इति हलायुधः। वसन्ततिलकवृत्तम् ॥ ४ ॥

(ञ) तदेहीति। जालमार्गेण गवाक्षद्वारेण। कुर्व्वन्ति माधव-मकरन्द-कलहंसा इति शेषः।

(१) शब्दान्तरग्रहणशक्तिमिति पाठान्तरम्।

(२) पेक्खस्स पेक्खस्स इति क्वचित् पाठः।

गअणङ्गणसरो (२) णिरन्तरुद्दण्डपुण्डरीअविब्भमं वहन्तो धवलादवत्त (३)-णिवहा दीसन्ति। इमाअ (४) सविलासकवलिदतम्बूलाहिपूरिद(५)-कवोलमण्डलाभोअव्वइअर-क्खलिद-महुर मङ्गलुग्गीद-वड्ड कोलाहलेहिं, विविह-रअणालङ्कारकिरणावली विड़म्बिद-महिन्दचाव-विच्छेअ-विच्छुरिअ-णहत्थलेहिं, वारसुन्दरीकदम्बएहिं अब्भासिआओ कणन्त-कणअकिङ्किणी रणिअ झण-झणक्कारिणीओ (६) करिणीओ। (ट)

चामर-समीरणोद्वेल्लित-कदलिकावली-तरङ्गितोत्ताल-गगनाङ्गनसरो-निरन्तरोद्दण्ड-पुण्डरीकविभ्रमं वहन्तो धवलातपत्रनिवहा दृश्यन्ते। इमाश्च सविलास-कवलित-ताम्बूलाभिपूरित-कपोलमण्डलाभोग-व्यतिकर स्खलित-मधुर-मङ्गलोद्गीतवड़-कोलाहलैः, विविधरत्नालङ्कार-किरणावली विड़म्बित महेन्द्रचापविच्छेद-विच्छुरित नभःस्थलैः वारसुन्दरीकदम्बकैः अध्यासिताः क्वणत्कनककिङ्किणीरणित-झणझणत्कारिण्यः करिण्यः।

(ट) कल्लेति। स्वोक्तवाक्यं प्रमाणयितुं माधवञ्चानन्दयितुमाह नार्थेति। उच्चलितानाम् उड्डीनानां राजहंसानां विभ्रमा इव विभ्रमा विलासास्तैः अभिरामाणां मनोज्ञानां चामराणां समीरणैर्वायुभिः, उद्वेल्लिता सञ्चालिता या कदलिकावली पताकाश्रेणी तया तरङ्गितं सञ्जाततरङ्गं कृतम्, अतएव उत्तालम् उत्कटं व्याप्तं गगनाङ्गनमेव सरो दीर्घिका, तत्र निरन्तराणां घनानाम् उद्दण्डानाम् उत्थितनालानां पुण्डरीकाणां

(१) तरङ्गिदुत्ताण इत्यपि पाठः। (२) सरोवर इति भिन्नः पाठः।

(३) मङ्गलधवलादवत्त इति पाठोऽपि। (४) एदाअ इति पुस्तकान्तरे पाठः।

(५) तम्बूलवीड़िआहिपूरिद इति क्वचित् पाठः।

(६)...किङ्किणीजालझणझणझङ्कारिणीओ इति पाठान्तरम्।

माधवमकरन्दौ सकौतुकं पश्यतः।

मक। स्पृहणीयाः (१) खल्वमात्यभूरिवसोर्विभूतयः।

तथाहि (ठ)

प्रेङ्खद्रिमयूर (२) मेचकचयैरुन्मेषिचापच्छद-

च्छायासंवलितैर्विवर्त्तिभिरिव प्रान्तेषु पर्य्याकुलाः।

सितपद्मानां विभ्रमं विलासं सौन्दर्य्यं, वहन्तो धारयन्तः, धवलातपत्रनिवहाः श्वेतच्छत्र-समूहाः।

"कदली वैजयन्त्याञ्च रम्भायां हरिणान्तरे।

कदली भान्ती स्त्री डिम्बिकासु च कथ्यते॥" इति विश्वः।

इमा येति। सविलासं सलीलं कवलितेन ताम्बूलेन अभिपूरितस्य कपोलसमुल्लस-गण्डदेशस्य आभोगात् विस्तारात् व्यतिकरेण सम्पर्केण सुसंमिश्रितभाषितैर्वचनैः, स्खलित-निर्गतं, मधुरं मनोहरं यत् मङ्गलोद्गीतं गौरीकल्याणादिकमङ्गलस्वरगानं तेन बहुः कल-कोलाहलः अस्फुटशब्दो येषां तथोक्तैः। तथा विविधानां रत्नालङ्काराणां किरणावलीभिः प्रभाजालैः विडम्बितः सादृश्यं न निर्म्मितः यो महेन्द्रचापविच्छेदः इन्द्रधनुष्खण्डः तेन विच्छुरितं रञ्जितं नभःस्थलं यैस्तादृशैः, वारसुन्दरीभिर्गणिकागणैः अध्यासिता आरूढाः तथा क्वणन्त्यः शब्दायमाना याः कनककिङ्किण्यः सुवर्णनिर्म्मितक्षुद्रघण्टाः, तासां रणितैः शब्दैः झणझणत्कारिण्यः झणझणादित्येवं शब्दकारिण्यः करिण्यो हस्तिन्यश्च दृश्यन्त इति शेषः।

(ठ) मकेति। स्पृहणीया अतिप्रचुरत्वात् सर्व्वैरेव वाञ्छनीयाः। विभूतयो धन-सम्पदः।

प्रेङ्खदिति। दिशः, उन्मुखानाम् ऊर्द्ध्वप्रसृतानां मणिज्योतिषां गणिकागणा-लङ्कारस्थरत्नरश्मीनां वितानैर्विस्तारैः, उन्मेषिणाम् उड्डीनानां चाषाणां स्वर्णचातकानां

(१) रमणीया इति क्वचित् पाठः। (२) प्रेङ्खद्रिमयूख इत्यपि पाठः।

रइदमण्डलो दूरदो ज्जेव्व से संठ्ठिदो परिअणो (१)। एसाअ, वहुल सिन्दूर-णिअरसंझाराओवरत्त-मुह-महुर (२)-घोलन्त-णक्खत्तमालाभरणधारिणिं करेणुरअणिं अलङ्करन्ती, इदो ज्जेव्व कोदूहलुम्मुह (३)-समत्थलोअ-दीसन्त-मणुहरपाण्डुर परिक्खामदेह-सोहा-विहाविआणङ्गवेअणा (४) पढ़मचन्द्रलेहा-विब्भमं वहन्ती किञ्चि अन्तरं पसरिदा मालदी। (ड)

च वहुल-सिन्दूर-निकर-सन्ध्यारागोपरक्त-मुख-मधुर-घूर्णमान-नचत्र-मालाभरणधारिणीं करेणुरजनीं अलङ्कुर्वती इत एव कौतूहलोन्मुख-समस्तलोक-दृश्यमान-मनोहर-पाण्डुरपरिचाम-देह-शोभा-विभावितानङ्गवेदना, प्रथमचन्द्रलेखाविभ्रमं वहन्ती किञ्चि-दन्तरं प्रसृता मालती।

(ड) कलेति। ससम्भ्रमाणां सत्वराणाम् अनेकेषां प्रतिहाराणां द्वारपालान-रक्षिपुरुषाणामित्यर्थः, मण्डलेन समूहेन आवर्जिता अवनमिता भूमौ स्थापिता, उज्ज्वला चिक्कणा, कनककलधौतयोः स्वर्णरौप्ययोः पङ्केन तरलद्रव्यान्तरमिश्रणात् कर्द्दम-भावापन्नेन तदीयचूर्णेन लिप्ता, अतएव विचित्रा नानावर्णा या वेत्रलता सततहस्त-व्यवहार्य्यो यष्टिविशेषः, तया परिक्षिप्ता सीमान्तेन दत्तेयं रेखा केनापि न लङ्घनीयेत्येव नियमेन भूमौ विन्यस्ता, या रेखा तया रचितं स्वस्वावस्थानेन विहितं, मण्डलं वर्त्तुला-कारावस्थानं येन स तथोक्तः, अस्या मालत्या परिजनः परिचारकवर्गः दूरत एव अस्या मालत्या विप्रकृष्टदेश एव संस्थितः अवस्थितः। "कलधौतं रूप्यहेम्नो"रित्यमरः।

तथा, एषा दूरतो दृश्यमाना, चकारः पुनरर्थे। वहुलानां सिन्दूराणां निकर

(१) दूरसंठिदो परिअणो इति पाठान्तरम्।

(२)'...वहुलमुहघोलन्त' इत्यपि पाठः। (३) कोऊहलुप्फुल्ल इति पाठभेदः।

(४) विहाविआणङ्गवेअणा इति पाठः क्वचिन्नास्ति।

मक । वयस्य ! पश्य पश्य (१) ।

इयमवयवैः पाण्डुच्छामैरलङ्कृतमण्डना
कलितकुसुमा बालेवान्तर्लता परिशोषिणी ।

समूह एव सन्ध्यारागः, तेन उपरक्तं विच्छुरितं मुखं हस्तिन्या वदनमिव मुखम् आद्यावयवः प्रदोषकालः, तत्र मधुरं मनोहरं यथा स्यात् तथा घूर्णमाना उज्ज्वलप्रभापटलप्रसारात् घूर्णमानेव प्रतीयमाना, नक्षत्रमाला मुक्तामालेव नक्षत्रमाला ताराश्रेणी, तत्स्वरूपमाभरणं धारयति या ताम् । करेणुर्हस्तिन्येव रजनी कृष्णवर्णत्वात् रात्रिः, ताम् । अलङ्कुर्वती, एकवारोदयात् अन्यत्वान्धकारापसारणात् शोभयन्ती । कौतूहलोन्मुखैः कौतुकोद्ग्रीवैः समस्तलोकैः सर्वजनैः दृश्यमाना, मनोहरा आपाण्डुरा विरहेण ईषत्पाण्डुरिता, परिक्षामा कृशा, या देहशोभा, तया विभाविता सूचिता अनङ्गवेदना कामपीड़ा यस्याः सा तथोक्ता । प्रथमचन्द्रलेखायाः प्रथमोदितचन्द्रकलायाः विभ्रमं विलासं वहन्ती मालती इत एव अस्यामेव दिशि किञ्चिदन्तरं परिभ्रमणात् कियद्व्यवधानं यथा स्यात्तथा प्रसृता आगता ।

अत्र द्वितीयवाक्ये "दृश्यन्ते क्वचिदारोप्याः श्लिष्टाः साङ्गेऽपि रूपके" इति साहित्यदर्पणात् श्लिष्टसाङ्गरूपकमलङ्कारः, प्रथमचन्द्रलेखाया विभ्रममिव विभ्रममिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धरूपा निदर्शना चेत्यनयोरङ्गाङ्गिभावेन सङ्करः । अहो चमत्कारि कवित्वमाविष्कृतं किङ्करजनेनापि ।

"नक्षत्रं ( क्ली ) मुक्ता ।...तारा ।" इति शब्दकल्पद्रुमः ।

इयमिति । पाण्डुच्छामैः विरहेण प्रतनुशीर्णैः, अवयवैः स्वभावसुन्दरैरङ्गैः अलङ्कृतानि भूषितानि, मण्डनानि स्वभूताभरणानि यया सा कलितकुसुमा एकत्र साभिलाषत्वादन्यत्र प्राप्तकालत्वात् धृतपुष्पा, अन्तर्मध्ये परिशोषिणी कीटवेधादिवशात्

(१) क्वचित् पश्य पश्येति विरक्तिर्न दृश्यते ।

वहति च वरारोहा रम्यां विवाहमहोत्सव-
श्रियमुदयिनीमुद्गाढां (१) च व्यनक्ति मनोरुजम् ॥६॥

कथं निषादिता गजवधूः । (ढ)

माध । सानन्दम् । कथमवतीर्य्य भगवतीलवङ्गिकाभ्यां समम्-
इतः (२) प्रवृत्तैव । (ण)

[illegible]कताशालिनी बाला नवीना लतेव स्थिता, इयं वरारोहा उत्तमा महिला मालती, रम्यां मनोहराम्, उदयिनीमिदानीं प्रतिक्षणं वर्द्धमानां विवाहमहोत्सवश्रियं वहति [illegible]रयति च, तथा उद्गाढाम् अतीवतीव्रां मनोरुजं चित्तपीड़ां मन्मथव्यथामित्यर्थः, व्यनक्ति पाण्डुतामावयवत्वात् प्रकटयति च ।

अत्रोपमालङ्कारः, 'वहति' 'व्यनक्ती'त्यनेकक्रिययोर्वरारोहेत्येककर्तृकारकत्वाद्दीपकमित्यनयोरङ्गाङ्गिभावेन सङ्करः । न च परार्द्धे "धुनोति चासिं तनुते च कीर्त्तिम्" इत्यादिवत् क्रियासमुच्चय इति वाच्यं "एते हि गुणक्रियायौगपद्य-समुच्चयप्रकारा नियमेन कार्य्यकारण-कालविपर्य्ययरूपातिशयोक्तिमूलाः । दीपकस्य चातिशयोक्तिमूलत्वाभावः ।" इति साहित्यदर्पणादत्र च तादृशातिशयोक्तिमूलत्वाभावात् । एवञ्च 'पचति च पठति च' इत्यादिवत् प्रत्येकक्रियायाः प्राधान्यसूचनाय चकारद्वयमिति भाव्यम् ।

"वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी" इत्यमरः । हरिणी वृत्तम् ॥ ६ ॥

(ढ) कथमिति । निषादिता आरोहिणीनामवतरणाय हस्तिपकेनोपवेशिता ।

(ण) माधेति । भगवती कामन्दकी । समं सह, इतः अस्यां दिशि, प्रवृत्तैव गन्तुमारभमाणैव ।

(१) उद्गूढामिति पाठान्तरम् । (२) क्वचित् 'समम् इतः' इति पाठो नास्ति ।

ततः प्रविशति कामन्दकी मालती लवङ्गिका च।

काम। सहर्षमपवार्य्य। (त)

विधाता भद्रं नो वितरतु मनोज्ञाय विधये,
विधेयासुर्देवाः परमरमणीयां परिणतिम्।
कृतार्थीभूयासं प्रियसुहृदपत्योपयमने (१)
प्रयत्नः कृत्स्नोऽयं फलतु शिवदायी (२) च भवतु ॥७॥

---

(त) कामेति। निजयत्नस्य सिद्धप्रायत्वात् कामन्दक्या हर्षेण सह वर्त्तत इति सहर्षम्।

विधातेति। विधाता विधिः मनोज्ञाय परस्परसुयोग्यगुणशालित्वात् परस्परमनोहराय विधये मालतीमाधवयोर्विवाहविधानाय नोऽस्माकं भद्रं प्रतिबन्धकनाऽभावरूपं मङ्गलं वितरतु ददातु। देवाः परिणतिं अस्य कर्म्मणः शेषावस्थां परमरमणीयां राज्ञः सम्भाव्यमानानिष्टाभावेन प्रत्युत तदनुमोदनेन निरुपद्रवतया परस्परसुयोग्यतया च सर्वेषामतीवमनोहरां विधेयासुः क्रियासुः। प्रियसुहृदोर्भूरिवसुदेवरातयोर्यत् अपत्यं सन्तानौ मालतीमाधवौ तयोरुपयमने विवाहविषये अहं कृतार्थीभूयासं आवान्तरिकविघ्नाभावात् कृतकार्य्या भवेयं। तथा अयं मदीयः कृत्स्नः सकलः प्रयत्नः फलतु निर्विघ्नेन विवाहनिष्पादनात् सफलो भवतु, शिवदायी स्वास्थ्यशान्तिसदपत्यादिविधानात् भाविकाले मङ्गलदाता च भवतु।

अत्र किञ्चित् किञ्चिद्विवक्षया नार्थगतपौनरुक्त्यदोषः।

अकृतार्था कृतार्था भूयासमिति कृतार्थीभूयासं अभूततद्भावे च्विप्रत्ययः। भूयासमित्याशीः। शिखरिणी वृत्तम् ॥ ८ ॥

(१) कृतार्था भूयासं प्रियसुहृदपत्योपनयतः' इति पाठान्तरम्।

(२) शिवततिरिति पाठभेदः।

माल । स्वगतम् । केण उण उआएण सम्पदं मरणणिव्वाणस्स अन्तरं सम्भावइस्सं । मरणम्मि मन्दभाअहेआणं अहिमदं त्ति सुदुल्लहं होदि (१) । (थ)

लव । स्वगतम् । अदिकिलाम्मिदा (२) क्खु पिअसही एदिणा अणुउलविप्पलम्भेण । (द)

(थ) केन पुनरुपायेन साम्प्रतं मरणनिर्वाणस्यान्तरं सम्भावयिष्ये । मरणमपि मन्दभागधेयानामभिमतमिति सुदुर्लभं भवति ।

(द) अतिक्लामिता खलु प्रियसखी एतेन अनुकूलविप्रलम्भेन ।

(थ) मालेति । मरणनिर्वाणस्य मृत्युरूपनिर्वृतेः, अन्तरमवकाशं सम्भावयिष्ये प्राप्स्यामि । "भूप्राप्तावात्मनेपदी" इति चौरादिकभूधातोरयं प्रयोगः । मन्दभागधेयानां दुर्भाग्यानां । तथा च दुर्भाग्या जना यद्यदभिमन्यन्ते तत्तदेव न भवति, सुतरां दुर्भाग्याया ममाभिमतत्वात् मरणमपि न भवतीति भावः । नन्दनविवाहार्थं देवता गृहे प्रेषणमिदमिति ज्ञानाद्विषादोक्तिरियम् ।

(द) लवेति । एतेन अमात्यकामन्दकीभ्यां प्रयुक्तेन, अनुकूलविप्रलम्भेन निजानुगुणया नन्दनविषयकप्रतारणया अतिक्लामिता सातिशयं मनोदुःखं प्रापिता । तथा च नन्दनेन सह विवाहार्थमेव मालत्या एतन्नगरदेवतागृहगमनमिति छलेन बहिः प्रकाश्य कौशलेनाभ्यन्तरे तु माधवेन सह विवाहविधानोपक्रमादमात्यकामन्दकीभ्यां प्रयुक्तोऽयं व्यापारः प्रकृतपक्षे नन्दनस्य प्रतारणैव, सा च मालत्याः परमानु-

(१) मरणं वि मे मन्दभाअहेआए अहिमदं अदिदुल्लहं होइ इति क्वचित् पाठः

(२) अदिकीलालिदा इत्यपि पाठः ।

प्रविश्य पेटकहस्ता (१) प्रतीहारी। **अमच्चो भअवदीं भणादि (२)। एदिणा णलिन्दाणुप्पेसिदेण विवाहणेवच्छेण देवदापुरदो अलङ्करिदव्वा मालदि त्ति। (ध)**

काम। **युक्तमाहामात्यः। माङ्गलिकमेतत् स्थानम्। अतो दर्शय। (३)। (न)**

(ध) अमात्यो भगवतीं भणति। एतेन नरेन्द्रानुप्रेषितेन विवाहनेपथ्येन देवतापुरतः अलङ्कर्त्तव्या मालतीति।

कृत्वा, किन्तु मालती तदजानती नन्दनेन सह विवाहार्थमेवेदमायोजनमिति मन्यमाना दारुणमेव मनोदुःखमनुभवतीति मुखमालिन्यादिनाऽनुमीयत इति सरलार्थो भावार्थश्च।

अवाभूताहरणं नाम गर्भसन्ध्यङ्गम् "तत्र व्याजाश्रयं वाक्यमभूताहरणं मतम्" इति साहित्यदर्पणात्।

(ध) प्रविश्येति। पेटकहस्ता अलङ्कारमञ्जुषाहस्ता। विवाहनेपथ्येन विवाहोपयोगिवेशेन।

(न) कामेति। युक्तमाह 'देवतापुरत' इति सङ्गतं ब्रवीति। कथमित्याह माङ्गलिकमिति। माङ्गलिकस्थान एव माङ्गलिककर्म्मकरणौचित्यादिति भावः। दर्शय तद्विवाहनेपथ्यमिति शेषः।

(१) भूषणपटलकहस्ता इति भिन्नः पाठः।

(२) विण्णवेदि इति पाठोऽपि।

(३) युक्तमाङ्गलिकं हि तत् स्थानं। इतो दर्शय। इति पाठोऽपि

प्रति। एदं दाव धवलपट्टंसुअजुअलं (१), एदं अ उत्तरीअं रत्तवण्णंसुअं (२) इमे अ सव्वाङ्गिआ आहरणसंजोआ, अअं अ मोत्तिअहारो, (३) एदं चन्दणं, एसो सिदकुसुमापोड़ो त्ति (४)। (प)

काम। अपवार्य्य। रमणीयं वत्स मकरन्दमवलोकयिष्यति जनः। प्रकाशम्। गृहीत्वा। भवतु, एवमुच्यताममात्यः (५)। (फ)

(प) एतत्तावत् धवलपट्टांशुकयुगलं, एतच्च उत्तरीयं रक्तवर्णांशुकं, इमे च सर्वाङ्गिका आभरणसंयोगाः, अयञ्च मौक्तिकहारः, एतच्चन्दनं, एष सितकुसुमापीड इति।

(प) प्रतीति। सर्वाङ्गिकाः सकलावयवसंस्पृष्टाः चाभरणसंयोगाः संयोजनीयान्याभरणानि। संयुज्यन्त इति संयोगाः कर्म्मणि घञ्। विशेष्याभरणस्य पूर्व्वनिपातोऽभिधानात्। सितकुसुमापीड़ः श्वेतपुष्परचितशेखरः।

(फ) कामेति। जनः पौरवर्गः। रमणीयं मालतीभूमिकया एतेषामलङ्कारादीनां धारणादिति भावः। मालतीभूमिका चाग्रे स्फुटीभविष्यति। एवं, एतानि मया गृहीतानि इत्यम्।

(१) इदं दाव धवलपट्टंसुअचोलअं इति पाठान्तरम्।

(२) एदं अ उत्तरीयवसंसुअं इति पाठभेदः।

(३) इमे च मोत्तिआहारा इत्यपि पाठः।

(४)...कुसुमापीड़ंअ इति पाठोऽपि।

(५)...भोमित्युच्यताममात्यः। इति पाठोऽपि दृश्यते।

प्रति । तह (१) । (ब) इति निष्क्रान्ता ।

काम । लवङ्गिके ! (२) प्रविश त्वमभ्यन्तरं वत्सया मालत्या सह । (भ)

लव । भअवदी उण ? (३) । (म)

काम । अहमपि विविक्ते तावदलङ्कारगारत्नानां प्राशस्त्यं शास्त्रत: परीक्षे (४) । इति निष्क्रान्ता । (य)

माल । स्वगतम् । लवङ्गिआमेत्तपरिवारह्मि संवुत्ता (५) । (र)

---

(ब) तथा ।

(म) भगवती पुनः ? ।

(र) लवङ्गिकामात्रपरिवारास्मि संवृत्ता ।

---

(म) लवेति । भगवती पुनः कस्मिन् यास्यतीति वाक्यशेषः ।

(य) कामेति । विविक्ते निर्जनस्थाने । मालत्या लवङ्गिकया सह विश्रब्धालापः,माधवालिङ्गनं, तत्कण्ठे वकुलकुसुममालासमर्पणमित्यादीनां निःसङ्कोचेन घटनार्थं कामन्दक्या निष्क्रमणमिति बोध्यम् ।

(र) मालेति । संवृत्ता । तथा च केवलामेनामनुनीय प्राणांस्त्यक्ष्यामीति भावः ।

---

(१) क्वचित् 'प्रतिहारी निष्क्रान्ता' इतिमात्रः पाठः ।

(२) वत्से लवङ्गिके ! इति पाठः क्वचित् ।

(३) अध भअवदी उण कहिं, पुस्तकान्तरे पाठोऽयम् ।

(४) परीक्षिष्ये इति पाठोऽपि ।

(५) मालती । (आत्मगतं) लवङ्गिआमेत्तपरिवारा दाव संवुत्ता । (प्रकाशं) एदं देवदा मन्दिरदुवारं । ता पविसदु पिअसही । इति कुत्रचित् पाठः ।

लव। इदं देवदामन्दिरदुवारं ता पविसम्ह (१)। (व)

इति प्रविशत:।

मक। वयस्य! इत: स्तम्भान्तरितौ पश्याव: (२)। (व)

तथा कुरुत:।

लव। सहि! अअं अङ्गराओ, इमाओ कुसुममालाओ। (श)

माल। तदो किं। (ष)

लव। सहि! इमस्सिं पाणिग्गहणमङ्गलारम्भे कल्लाणसम्पत्तिणिमित्तं देवदाओ (३) पूजेहि त्ति अम्बाए अणुप्पेसिदासि। (स)

---

(ल) इदं देवतामन्दिरद्वारं तत् प्रविशाव:।

(श) सखि! अयमङ्गराग:, इमा: कुसुममाला:।

(ष) तत: किम्।

(स) सखि! अस्मिन् पाणिग्रहणमङ्गलारम्भे कल्याणसम्पत्तिनिमित्तं देवता: पूजयेति अम्बया अनुप्रेसितासि।

(व) मकेति। पश्याव: मालत्या व्यापारमिति शेष:।

(श) लवेति। अङ्गरागो गात्ररञ्जनद्रव्यं चन्दनकुङ्कुमादि।

(ष) मालेति। तत: किम्। मर्त्तुकामाया मम तेन किं प्रयोजनमिति भाव:।

(स) लवेति। कल्याणसम्पत्तिनिमित्तं मङ्गललाभार्थम्।

(१) तत्र लवेत्यादि पाठो नास्ति।

(२) स्तम्भापवारितशरीरौ तिष्ठाव: इति पाठोऽपि दृश्यते।

(३) देवदां इति भिन्न: पाठ:।

मालती। स्वगतम् (१)। किं दाणिं दारुणसमारम्भ देव्वदुव्विलासपरिणामदुक्खणिद्दहमाणमं पुणो पुणो वि मम्मच्छेअदूसहं मन्दभाइणीं दुणोसि (२)। (छ)

लव। अइ! (३) किं वत्तुकामासि (च)

माल। किं (४) दाणिं दुल्लहाहिणिवेसि (५) मणोरहविसंवदन्तभाअहेओ जणो मन्तेदि। (क)

---

(छ) किमिदानीं दारुणसमारम्भदैवदुर्विलासपरिणामदुःखनिर्दग्धमानसां पुनः पुनरपि मर्म्मच्छेददुःसहां मन्दभागिनीं दुनोषि।

(च) अयि! किं वक्तुकामासि।

(क) किमिदानीं दुर्लभाभिनिवेशिमनोरथ विसंवदद्भागधेयोजनो मन्त्रयते।

(छ) मालेति। दारुणो गुरुतरदुःखजनकत्वात् भयङ्करः समारम्भो नन्दनेन सह विवाहघटनोपक्रमो यस्मात् तादृशस्य दैवस्य यो दुर्विलासो दुर्व्यवहारः, तस्य परिणामरूपेण फलभूतेन दुःखेन निर्दग्धं नितरां सन्तापितं मानसं मनो यस्यास्तां। दुःसहो मर्म्मच्छेदो यातना यस्या सा। अभिधानाद्दुःसहशब्दस्य परनिपातः। मन्दभागिनीं मां दुनोषि उपतापयसि। स्वगतोक्तिरेवं परत "अयि किं वक्तुकामासि" इति लवङ्गिकावाक्यात्।

(च) लवेति। किं वक्तुकामासीति, अधरस्पन्दनदर्शनात् तथाप्रतीतेरिति भावः।

(क मालेति। दुर्लभाभिनिवेशिनः माहृशजनदुष्प्रापवस्तुप्रार्थिनः, मनो-

---

(१) क्वचित् 'स्वगतं इति पाठो नास्ति।

(२) कुदो दाणिं दारुणसमारमभदेव्व दुव्विलास-परिणाम दुक्खणिद्दलिय माणमं पुणोवि मम्मच्छेददूसहं मन्दभाइणीं दूमिज्जसि' इति पाठान्तरम्।

(३) अह इत्यपि पाठः। (४) ता दाणिं इति पाठोऽपि।

(५) दुल्लहाहिणिवेस इति क्वचित् पाठः।

मक। सखे! श्रुतम्?। (ख)

माध। असन्तोषस्तु हृदयस्य। (ग)

माल। लवङ्गिकां परिष्वज्य। परमत्थबहिणि! (१) पिअसहि! लवङ्गिए! एसा दाणिं दे पिअसही अणाहा मरणे बट्टमाणा, आगब्भणिग्गम णिरन्तरोबारूढ़-बिस्सम्भ-सरिसं परिसज्जिअ

रथस्य अभिलाषस्य विसंवदत् विपरीतीभवत् भागधेयं भाग्यं यस्य स तथोक्तो जनः अहमित्यर्थः किं मन्त्रयते वक्ति; मादृशगुणहीनतरुणीजनपक्षे पुरुषरत्नभूतत्वादृशो जनो दुष्प्राप एव तथापि तदिच्छासम्भवात् प्रार्थनाविषयः स एव, किन्तु तत्र भाग्यं विरोधीति दुर्भाग्याया मम किं वक्तव्यमस्तीति भावः।

(ख) मकेति। श्रुतमिति काकुः श्रुतं, किमित्यर्थः।

(ग) माधेति। किन्त्वर्थे तुशब्दः। श्रुतं, किन्तु केनापि कारणेन हृदयस्य असन्तोष इत्यनुमीयते वाग्विन्यासप्रकारमुखभङ्गीदर्शनादिति भावः, सरलार्थश्च। अत्र क्रमो नाम गर्भसन्धेरङ्गम्। यथा साहित्यदर्पणे—

"भावतत्त्वोपलब्धिस्तु क्रमः स्यात्...।"

(घ) मालेति। हे परमार्थभगिनि! चिरायान्तरिकस्नेहाचरणात् वास्तविक-भगिनीरूपे। अनाथा रक्षकहीना। कन्यायाः पितैव रक्षक इति शास्त्रलोकाचार-प्रसिद्धं, अस्ति च मे पिता, किन्तु तथापि तस्य दुर्द्दर्शन-प्राचीन-नन्दनहस्ते प्रदानोन्मुखत्वेन मद्विनाशपरायणत्वादनाथैवाहमिति भावः। मरणे वर्त्तमाना मरणाय कृतनिश्चया परिष्वज्य त्वामालिङ्ग्य। आगर्भनिर्गमात् मातुरुदरतो निर्गमनात् प्रभृति, निरन्तरोपारूढ़ः सर्वदोत्पन्नः, यो विस्रम्भः त्वां प्रति मम विश्वासः, तस्य सदृशं अनुरूपं, अभ्यर्थ्यते

(१) ता, परमत्थबहिणि! इति पुस्तकान्तरे पाठः।

अब्भत्थेदि (१)। जइ दे अहं अणुवट्टणीआ, तदो मं हिअएण धारअन्ती समग्ग-सोहग्ग-लच्छी-परिग्गहेक्कमङ्गलं माहवस्स सिरिमुहारविन्दं आणन्दमसिणं पलोएहि (२)। इति रोदिति। (घ)

माध। वयस्य मकरन्द!

म्लानस्य जीवकुसुमस्य विकासनानि
सन्तर्पणानि सकलेन्द्रियमोहनानि।

---

(घ) परमार्थभगिनि! प्रियसखि! लवङ्गिके! एषेदानीं ते प्रियसखी अनाथशरणी वर्त्तमाना, आगर्भनिर्गम-निरन्तरोपरूढ़-विस्रम्भसदृशं परिष्वज्य अभ्यर्थयते। यदि तेऽहमनुवर्त्तनीया, ततो मां हृदयेन धारयन्ती, समग्र-सौभाग्यलक्ष्मीपरिग्रहैकमङ्गलं माधवस्य श्रीमुखारविन्दम् आनन्दमसृणं प्रलोकय।

---

वक्ष्यमाणं प्रार्थयते। तादृशगाढ़विश्वासाभावे ईदृशी प्रार्थना तत्पूरणसम्भावना च नोपपद्यते इति भावः। अनुवर्त्तनीया अनुसरणीया, त्वया यदि मम वासना पूरणीया भवेदित्यर्थः। ततस्तदा, मां दारुणमनोदुःखेनासारप्रायशरीरामिति भावः। समग्र सौभाग्यलक्ष्म्याः समस्तशुभादृष्टजनितशोभायाः परिग्रह एव एकमद्वितीयं मङ्गलं यत्र तत् आनन्देन सर्व्वदाप्रमोदेन मसृणं कोमलम्। प्रलोकय प्रदर्शय। एतदेवाभ्यर्थयत इति भावः।

म्लानस्येति। मयाऽपि अस्या ईदृशवचनाम्रुतवर्षणोपयोगिगुणरहितो नापीति भावः। दिष्ट्या भाग्येन, म्लानस्य अस्याः प्राप्तिनैराश्येन ग्लानिं प्राप्तस्य, जीव एव

(१) आगब्भ-णिग्गम-णिम्मिद-णिरन्तरोवआर विरूढ़ वीसम्भ-सरिसं परिस्सइअ तुमं पत्थेदि इति पाठान्तरम्।

(२) ... माहवसिरिणो मुहारविन्दं आणन्दमसिणं अवलोअइस्समि, इति पाठभेदः।

आनन्दनानि हृदयैकरसायनानि
दिष्ट्या मयाप्यधिगतानि वचोऽमृतानि ॥ ८ ॥

माल। जह तस्स जीविदप्पदाइणो जणस्स अवसिदं (१) मं सुणिअ सन्दप्पमाणस्स तहाविहं (२) सरीररअणं ण

---

(ङ) यथा तस्य जीवितप्रदायिनो जनस्य अवसितां मां श्रुत्वा सन्तप्यमानस्य तथाविधं शरीररत्नं न परिक्षीयते, यथा च लोकान्तरगतामपि मामुद्दिश्य स जन' स्मरणकथामात्रपरिशेषां कालान्तरेऽपि लोकयात्रां न शिथिलयति, तथा कुरु। एवमेव प्रियसख्याः प्रसादात् मालती कृतार्था भवति ।

---

कुसुमं, तस्य, विकासनानि प्रकाशकानि। सन्तर्पणानि सम्यक्तृप्तिकराणि। सकलेन्द्रियमोहनानि आनन्देन जड़ताजननात् सर्व्वेन्द्रियवृत्तिरोधकानि। आनन्दनानि चित्तस्यानन्दजनकानि। हृदयस्य एकरसायनानि अद्वितीयरसायनौषधरूपाणि नैराश्येन शीर्णस्य हृदयस्य उपचयकराणीत्यर्थः। वचोऽमृतानि मालत्या उक्तवाक्यान्येव पीयूषाणि अधिगतानि लब्धानि। सम्प्रति धन्योऽस्मीति भावः।

अत्र निरङ्गं केवलरूपकमलङ्कारः। तथा अर्थगतपौनरुक्त्यदोषः सम्भवन्नपि रसाक्षिप्तचेतसा माधवेनाभिहितत्वात् प्रत्युत गुणतामेव भजते, "असारं संसारम्" इत्यादिवत्। तत्प्रमाणन्तु तत्रैवोक्तम्।

रसायनमाह स्म चरकः—"यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम्।"

किञ्चिद्विकलीकृतोऽयमेव श्लोक उत्तररामचरितप्रथमाङ्के रामेण पठितः।

वसन्ततिलका वृत्तम् ॥ ८ ॥

(ङ) मालेति। अवसितां समाप्तां मृतामित्यर्थः। तथाविधम् अनिर्वचनीय-

---

(१) अवसिदेत्ति इति क्वचित्। (२) तं तहविधं इत्यपि पाठः।

परिहीअदि, जह अ लोअन्तरगअं (१) वि मं उद्दिसिअ सो जनो सुमरण (२) कहामेत्तपरिसेसं कालन्तरे वि लोअजत्तं ण सिढ़िलेदि, तहा करेसु। एवं ज्जेव पिअसहीए प्पसादादो मालदी किदत्था भोदि (३)। (छ)

नक। हन्त! अतिकरुणं प्रस्तुतम् (४)। (च)

माध। नैराश्यकातरधियो हरिणेक्षणायाः

श्रुत्वा निकामकरुणस्य मनोहरस्य।

---

सुन्दरं। परिहीयते विनश्यति, तथा कुर्वित्यन्वयः। स जनो माधवः। स्मरणं स्मृतिः, कथा एवं मालत्यासीत सौन्दर्यं शीलञ्च तादृशमित्येवमुपाख्यानं, तन्मात्रः परिशेषो जगत्यामवशिष्टं यस्या स्तां। कालान्तरेऽपि मयः का कथा बहुपरवर्त्तिनि समयेऽपि, लोकयात्रां गार्हस्थ्यं न शिथिलयति वैराग्यं नावलम्बत इत्यर्थः। एवमेव इत्थं कृत एव। प्रियसख्या स्तव। एतेन माधवं प्रति सुमहाननुरागो व्यज्यते।

(च) नकेति। अनुकम्पायां हन्तशब्दः। अतिकरुणं सातिशयशोकं यथा स्यात्तथा प्रस्तुतं प्रक्रान्तं वक्तुमारब्धमित्यर्थः।

नैराश्येति। नैराश्येन नन्दनेन सह विवाहोद्योगात् मत्प्रत्याशाऽभावेन, कातरा दुःखाकुला धीरन्तःकरणं यस्या स्तस्याः हरिणेक्षणाया मालत्याः निकामकरुणं जीवनपरिजिहीर्षाप्रणोदितत्वात् पर्य्याप्तशोकं तथा मनोहरस्य मां प्रत्येव गाढ़ानुरागद्योतनात् मम मनोरमञ्च, वातसल्येन मां प्रति प्रणयेन यो मोहो विचित्तता आशाविपरीत घटनारम्भजनितदुःखवैमनस्यमित्यर्थः तेन परिदेवितं तन्निबन्धनं विलापं श्रुत्वा, चिन्तया

---

(१) परलोअगदं इति पाठभेदः। (२) संस्मरण...क्वचित् पाठोऽयम्।

(३) एव्वं दे पिअसही मालदी सकामा कीड इति पाठान्तरम्।

(४) वर्त्तते, इति पुस्तकान्तरे पाठः।

वात्सल्यमोहपरिदेवितमुद्वहामि
चिन्ताविषादविपदश्च महोत्सवञ्च ॥ ८ ॥

लव। अइ! पडिहदं दाणिं दे अमङ्गलं। इदो वि अवरं ण सुणिस्सं (१)। (छ)

माल। सहि! पिअं क्खु तुह्माणं मालदीजीविदं, ण उण मालदी (ज)

(छ) अयि! प्रतिहतमिदानीं ते अमङ्गलं। इतोऽप्यपरं न श्रोष्यामि।

(ज) सखि! प्रियं खलु युष्माकं मालतीजीवितं, न पुनर्मालती।

कथमिदं दुःखमस्या यास्यति, मया वा किमिदानीं कर्त्तव्यमित्येवंरूपया भावनया यो विषादः अस्या एतद्दुःखापनयनोपायादर्शनाच्चित्तवैक्लव्यं तद्रूपां विपदं विपत्तिञ्च, महोत्सवञ्च ईदृशमतुलनीयं ललनारत्नं मयीदृशमनुरक्तमिति महानन्दञ्च उद्वहामि दधामि।

अत्र विपन्महोत्सवयोर्विरूपयोः सङ्घटनया विषमाऽलङ्कारः उद्वहामीत्येक-क्रियया विपन्महोत्सवयोरप्रस्तुतयोः कर्मतयाऽभिसम्बन्धात्तुल्ययोगिता च, अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः। तथा उत्पूर्ववहधातोर्भार्य्यात्वसम्पादकग्रहणरूपविवाहार्थस्यैव वाचकत्वात् अत्र तु धारणार्थे प्रयोगात् "गीतेषु कर्णमादत्त" इत्यादिवदवाचकत्वदोषः। स च 'वात्सल्यमोहजविलापमहं वहामि' इति पाठेन परिहरणीयः।

वसन्ततिलका वृत्तम् ॥ ८ ॥

(छ) लवेति। ते तव अमङ्गलं मरणरूपं प्रतिहतं दैवतप्रसादेन निवारितं भवत्वित्यर्थः।

(१) ण अदोवि अधिअदं सुणिस्सं इति वा पाठः

लव । सहि ! किं त्ति भणिदं भोदि (१) । (झ)

माल । आत्मानं निर्दिश्य (२) जेण पच्चासाणिबन्धणेहिं (३) अअणसंविहाणेहिं जाबाविअ इमं ज्जेव्व (४) महावीभच्छारम्भं अणुभाविदह्मि । संपदं उण मम मणोरहो एसो ज्जेव्व, (५) जं तस्स देव्वस्स परकेरअत्तणेण अवरद्धंअत्ताणं परिच्चइअ णिव्वुदा

---

(झ) सखि ! किमिति भणितं भवति ? ।

(ञ) येन प्रत्याशानिबन्धनैर्वचनसंविधानैर्जीवयित्वा इममेव महावीभत्सारम्भमनुभाविताऽस्मि । साम्प्रतं पुनर्मम मनोरथ एष एव, यत्, तस्य दैवस्य परकीयत्वेनापराद्धमात्मानं परित्यज्य निर्वृता भविष्यामि ! अस्मिन् प्रयोजने प्रियसखी मे अपरिपन्थिनी भवतु ।

---

(झ) लवेति । इति अयोल्यादिसन्दर्भेण, किं भणितं त्वया किमुक्तं भवति ? । मालतीशब्देन मालतीदेहावच्छिन्नं चैतन्यमुच्यते, मालतीजीवितशब्देनापि तदेव । इत्युभयोर्भेदाभावात् "प्रियं खलु युष्माकं मालतीजीवितं न पुनर्मालती" इत्यनेन किमभिहितं तन्नावगच्छामीति सरलार्थो भावार्थश्च । "विशिष्टस्य जीवत्वमन्वयव्यतिरेका" दिति सांख्यसूत्रमनुसन्धेयमिति संक्षेपः ।

(ञ) मालतीति । आत्मानं स्वदेहं, निर्दिश्य इयमयमित्यङ्गुल्या प्रदर्श्य । येन हेतुना, प्रत्याशानिबन्धनैः 'सखि ! समाश्वसिहि, अवश्यमेव पतित्वेन माधवं लप्स्यसे' इत्यादिभिराशाजनकैः, वचनसंविधानैः वाक्यविन्यासैः । जीवयित्वा नैराश्यदुःखेन मरण-

---

(१) किं एव्वं भणिदं भोदि इत्यपि पाठः । (२) क्वचिदयं पाठो नास्ति ।

(३) अस्सजणपच्चासाणिबन्धणेहिं इति क्वचित् पाठः ।

(४) ज्जेव्व इत्यपि क्वचिन्नास्ति । (५) एत्तिअं एव्व इति पाठभेदः ।

**जुविमसं (१) असुसिं पश्रोश्रणे पिश्रसही मे श्रपरिपन्थिणी होदु**

इति पादयोः पतति। (ञ)

मक। **सैषा परमा (२) सीमा स्नेहस्य।**

लवङ्गिका। माधवं संज्ञया समाह्वयति। (ट)

मक। **वयस्य! लवङ्गिकास्थाने तिष्ठ (३)।**

माध। **परवानस्मि साध्वसेन (४)। (ठ)**

---

दशायामित्यर्थः। महावीभत्सारम्भं नन्दनेन सह विवाहोद्योगरूपनतीवकुत्सितकार्य्योपक्रमं तज्जनितदुःखमित्यर्थः अनुभाविताऽस्मि ज्ञापिताऽस्मि पित्रादिभिर्युष्माभिरिति तिरस्काराक्षेपः। तदा च मालती, सुखं दुःखं वानुभवतु तत्र न निर्बन्धः, किन्तु जीवति चेत्तदेवास्माकं पर्य्याप्तमित्यवधारणात् मालतीजीवनमेव युष्माकं प्रियं, न पुनस्तस्या दुःखसम्बन्धराहित्यमिति मदुक्तवाक्यार्थः। एवञ्च सति मालतीशब्दस्य दुःखसम्बन्धरहितमालतीपरत्वात् मालतीजीवितशब्दस्य च सुखदुःखोभयसम्बन्धोदासीनतज्जीवनपरत्वात् दुःखसम्बन्धित्व-दुःखसम्बन्धरहितत्वाभ्यामुभयोर्भेद इति भावः। तस्य दैवस्य माधवस्य सम्बन्धे परकीयत्वेन माधवभिन्नस्वामिकत्वेन अनेन नन्दनस्वामिकत्वकल्पनोद्योगेनैवेत्यर्थः। आत्मानं स्वदेहम्। अपरिपन्थिनी अप्रतिकूला।

(ट) लवेति। माधवं पूर्व्वसङ्केतेनावगतावस्थानम्। संज्ञया नयनेङ्गितेन अङ्गुलीचालनया वा।

(ठ) माधेति। साध्वसेन परावलोकनभयेन, मुग्धाया मालत्या अपसरणभयेन वा, परवानस्मि लवङ्गिकास्थाने स्थातुं पराधीनः कृतोऽस्मि सहसा न शक्तोऽस्मीत्यर्थः।

(१)...तस्स दैवस्स परोक्खगुणकिरिसणेण अणवरश्रं अत्ताणं परिच्चइस्सं त्ति इति भिन्नः पाठः। (२) क्वचित् परमेति नास्ति।

(३) वयस्य! उपसृत्य लवङ्गिकायाः स्थाने तिष्ठ इति पाठोऽपि।

(४) वयस्य!...इत्यपि पाठः।

मक। इयमेव नेदीयसां प्रकृतिरभ्युदयानाम्। (ड)

माधवः। स्वैरं लवङ्गिकास्थाने तिष्ठति। (ढ)

माल। सहि! करेहि अणुऊलदाए पसादं। (ण)

माध। सरले! साहसरागं परिहर रम्भोरु! मुञ्च संरम्भम्।

विरसं विरहायासं सोढुं तव चित्तमसहं मे ॥१०॥

---

(ण) सखि! कुरु अनुकूलतया प्रसादम्।

---

(ड) मकेति। नेदीयसां अतिशयेनासन्नानां, अभ्युदयानां इष्टलाभानां इयमेव प्रकृतिरयमेव स्वभावः। यदुपयुक्तसमये प्रकृतं प्रति केनचित् कारणेन जड़त्वमिति भावः।

(ढ) माधव इति। स्वैरं मन्दं, मालती यथा नाववुध्यत इत्यर्थः।

(ण) मालेति। अनुकूलतया मरणानुमोदनरूपानुकूल्येन प्रसादमनुग्रहम्।

सरल इति। हे सरले! ऋजुबुद्धे! साहसे प्राणत्यागे रागं इच्छां परिहर परित्यज। तथा हे रम्भोरु! कदलीस्तम्भसमानोरुयुगले! संरम्भं मरणोद्योगमपि मुञ्च जहीहि। कथमेतदित्याह विरसमित्यादि। विगतो भविष्यति रसो मम विषयानुरागो यस्मात् तं मम विषयवैराग्यकरमित्यर्थः तव विरहायासं वियोगदुःखं सोढुं मे मम चित्तं असहमक्षमम्। अतएव चिरस्नेहभाजनमिमं जनं प्रति दययाऽपि मरणेच्छां तदुद्योगञ्च परित्यजेति भावः।

अत्र पूर्वार्द्धगतवाक्यद्वयार्थौ प्रति परार्द्धगतवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः। किन्तु 'सरले' इत्यादीनामन्येषां सर्वेषामेव पदानां संस्कृतशौरसेन्योर्भाषयोः समानत्वेऽपि 'विरहायास' मिति पदस्य शौरसेन्यां "विरहाआस" इत्येवं-रूपोपपत्तेर्वैषम्यान्न भाषासमाऽलङ्कारः। अथ च लवङ्गिकापाठ्यशौरसेनीभाषायाः 'विरहाआसं' इत्यस्योच्चारणात् माधवपाठ्यसंस्कृतभाषायाः 'विरहायासं' इत्यस्यो·

माल। सहि! अलङ्घणिज्जो (१) दे मालदीप्पणामो। (त)

माध। (२) किंवा भणामि विच्छेद-दारुणायासकारिणि!

कामं कुरु वरारोहे! देहि मे परिरम्भणम् ॥११॥

(त) सखि! अलङ्घनीय स्ते मालतीप्रणामः।

---

मरणे नैयम्य सत्यपि तस्य, लवङ्गिका माधवयोः स्वाभाविकस्वरभेदस्य च शोकसमाकुलचित्ताया मालत्याः सम्यगुपलक्षितत्वाभावात् लवङ्गिकाभिन्नजनभ्रमो न जात इति द्रष्टव्यम्।

आर्य्या जातिः॥ १०॥

(त) मालेति। 'मरले' इत्याद्युक्तिवशात् स्वमरणं लवङ्गिकाया अनभिमतं, प्रत्युत भावि तत्प्रतिबन्धकत्वमाशङ्क्याह सखीत्यादि। अनेन मालतीप्रणामानुनयेनानुग्रहबुद्ध्या तदभिलषित-मरणमनुजानीहीति भावः।

माधवः पूर्व्ववदेव प्रायेण तत्समानैः पदै र्लवङ्गिकावदाह किंवेति। विच्छेदेन माधवपक्षे वर्त्तमानवियोगेन लवङ्गिकापक्षे मरणाच्चिरवियोगेन दारुणायासकारिणी भीषणकष्टविधायिनी, तत्सम्बोधनं किंवा भणामि ब्रवीमि। लवङ्गिकापक्षे, असह्ययन्त्रणापगमान्मरणविषये किं निषेधवाक्यं वक्तव्यमस्तीत्यर्थः। माधवपक्षे तु तस्यात्यन्तासम्भवात् किं वक्तव्यमस्ति, अपि तु किमपि नेत्यर्थः। अतएव हे वरारोहे। उत्तममहिले। कामं कुरु स्वाभिलाषं विधेहि, प्राणधारणमसह्यञ्चेत् मर्त्तुमर्हसीत्यर्थ इति लवङ्गिकापक्षे। माधवपक्षे तु हे वरारोहे! उत्तममहिले! कामं कुरु मया सार्द्धं कामव्यापारं विधेहि, अनर्थकमरणप्रस्तावेन किं प्रयोजनमिति भावः। अतएव मे मम परिरम्भणं आलिङ्गनं देहि, मामालिङ्गेत्यर्थः। अयमुभयत्रापि समानः।

---

(१) अलङ्घणीओव्वेव च इति क्वचित् पाठः।

(२) कुत्रचित् सहर्षमित्यधिकः पाठः।

माल । सानन्दम् । कधं अणुगहीदह्मि । उत्थाय । इयं आलिङ्गामि । दंसणं उण पिअसहीए वाप्फोप्पीड़णेन पच्चक्खं (१) न लब्भीअदि । आलिङ्ग्य सानन्दम् । सहि ! कठोरकमलगब्भ-पह्मलो असारिसो ज्जेव्व दे अज्ज णिव्वावेदि मं सन्तप्पमाणं पिअसहीए (२) सरीरप्फंसो । सास्रम् । किञ्च मउलिविणि वेसिदञ्जली मम वअणेन विस्सावेहि तं जणं । जह ण मए मन्दभाइणीए (३) विअसन्त-सदवत्त-(४)लच्छीविलासहारिणो

(ध) कथमनुगृहीतास्मि । इयमालिङ्गामि । दर्शनं पुनः प्रियसख्याः वाष्पोत्-पीड़नेन प्रत्यक्षं न लभ्यते । सखि ! कठोर-कमल-गर्भ पक्ष्मलोऽसादृश एव ते अद्य निर्वापयति मां सन्तप्यमानां प्रियसख्याः शरीरस्पर्शः । किञ्च मौलिविनिवेशिताञ्जलि मम वचनेन विज्ञापय तं जनम् । यथा न मया मन्दभागिन्या विकसच्छतपत्र लक्ष्मी-

अत्रापि पूर्ववदेव सर्वोपपत्तिरूहणीया । "माधवं संज्ञया समाह्वयति" इत्यादावेतदन्त सन्दर्भे छलेन माधवाभिलाषाभिसन्धानादधिवलं नाम गर्भसन्धिरङ्गम् । यथा दर्पणे—

"अधिवलमभिसन्धिश्छलेन यः ।" ॥ ११ ॥

(ध) मालतीति । 'कामं कुरु' इत्यनेन स्वमरणे लवङ्गिकाया अनुमोदनं जात-मिति मन्यमाना सानन्दमाह कथमित्यादि । सम्भावनायां कथं शब्दः । अनुगृहीतास्मि प्रार्थितमरणानुमोदनेनेति भावः । वाष्पोत्पीड़नेन अश्रुप्रवाहकर्त्तृकदृष्टिनिरोधेन प्रियसख्यास्तव दर्शनं दर्शनात्मकं प्रत्यक्षं चाक्षुषप्रत्यक्षमित्यर्थः । एतेन दृष्ट्यापि

(१) वाप्फोपीड़ेण णिरुद्धं पच्चिमं इति पाठान्तरम् ।

(२) सन्तप्पमाणं पिअसहीए इत्यंशः क्वचिन्नास्ति ।

(३) मन्दभाआए इति पाठभेदः । (४)...पुण्डरीअ...इति पाठोऽपि ।

सम्पूस-चन्दमण्डलाहिरामस्स मुहस्स दे सच्छन्ददंसणेण सम्भाविदो चिरं महूसवो लोअणाणं (१)। मुहामणोरहेहिं अ अविरद-विअम्भमाण दुव्वारुव्वेअ (२) व्वइअर व्वत्तमाण-बन्धणं धारिअं हि अअं। गमिआ अ वारं वारं सविसेअदूसहारम्भ-दुम्मणाइद-सही अणा (३) सरीरसन्दाव। कधं वि अदिवाहिदा चन्दादव-मलअमारुदप्पमुहा अणत्थपरम्परा सम्पदं

विलासहारिणः सम्पूर्ण-चन्द्रमण्डलाभिरामस्य मुखस्य ते स्वच्छन्ददर्शनेन सम्भावित श्चिरं महोत्सवो लोचनयोः। मुधामनोरथैश्च अविरतविजृम्भमाण-दुर्व्वारोद्वेग-व्यतिकरोद्वर्त्तमानबन्धनं धारितं हृदयम्। गमिताश्च वारं वारं सविशेषदुःसहारम्भ-दुर्म्मनायित-सखीजनाः शरीर-सन्तापाः। कथमप्यतिवाहिता चन्द्रातप-मलयमारुतप्रमुखा अनर्थ-परम्पराः। साम्प्रतं पुनर्निराशास्मि संवृत्तेति। त्वयाऽपि प्रियसखि! सर्वदा स्मर्त्तव्यास्मि,

माधवो न परिचित इति सूचितम्। इत्थं लवङ्गिकाभ्रमेण माधवमालिङ्ग्य सुधासरसि निमग्नेव सातिशयमानन्दमनुभवन्ती ब्रवीति सखीति। काठोरकमलगर्भवत् परिणत-पद्मवीजकोषवत् पक्ष्मलः रोमाञ्चविषमीकृतः, अन्यादृशः पूर्वानुभूतादिभिन्नरूपः। निर्वापयति शीतलतां करोति। विज्ञापनीयमभिधातुमाह किञ्चेति। तं जनं माधवं। अत्र माधवनामानुच्चारणेन स एव मनसा पतित्वेन वृत इति व्यज्यते। विकसत् प्रकाशमानं शतपत्रं पद्ममिव लक्ष्मीविलासैश्च शोभाप्रकाशैश्च हारि सुन्दरं तस्य। स्वच्छन्ददर्शनेन यथेष्टावलोकनेन, लोचनयो र्मम नेत्रयोः, महोत्सवो महानन्दो न सम्भावितः नोत्पादितः। अनुभूतं दुःखं विज्ञापयितुमाह मुधेत्यादि। मुधा मनोरथैः

(१) ...मुहचन्दमण्डलस्स...लोअणमहोसवो, इति क्वचित् पाठः।

(२) ...दुव्वार-दुक्खावेअ...इति भिन्नः पाठः।

(३) सविसेसदूसहाआसधूमाविदसहीअणा इति पाठभेदः।

उण णिरासह्मि संवुत्तेत्ति। तुए वि पिअसहि! सव्वदा सुमरिदव्वह्मि, एसाअ माहव-सिरीहत्थ (१) णिम्माणमणोहरा बउलमाला मालदीणिव्विसेसं (२) पिअसहीए दट्ठव्वा, सव्वदा हिअएण (३) धारणिज्जा अ त्ति। इति स्वकण्ठादुन्मुच्य (४) माधवस्य हृदि विन्यस्यन्ती सहसाऽपसृत्य साध्वसोत्कम्पं, नाटयति। (थ)

एषा च माधवश्रीहस्त-निर्म्माणमनोहरा वकुलमालामालतीनिर्व्विशेषं प्रियसख्या द्रष्टव्या, सर्व्वदा हृदयेन धारणीया चेति।

'पत्या सता माधवेन सममीदृशमाचरिष्यामि' इत्यादि वृथाभिलाषैः, इदानीं तदभिलाषस्य निष्फलत्वाद्वृथात्वमितिभावः, अविरतं विजृम्भमानो वर्द्धमानो यो दुर्वारोद्वेगः, दुरुपशममन्मथोद्वेगः तस्य व्यतिकरेण सम्पर्केण सम्बन्धेन उद्वर्त्तमानं उत्सिष्ठत्प्रायं बन्धनं मूलबन्धो यस्य तत्तथोक्तम्। धारितं एतावन्तं कालं यावत् अवस्थापितं रक्षितमिति तात्पर्य्यम्। इतरथा तादृशोद्वेगेनैव मम हृदयमुन्मूलितमभूदिति भावः। सविशेषः सातिशयो दुःसहश्च य आरम्भो भूतलविलुण्ठन नलिनीदलधारणादिव्यापारः, तेन दुर्म्मनायिताः तदपनयनोपायाभावात् दुःखितीकृताः सखीजना यैस्ते; गमिता अनुभूय अतिक्रान्ताः। कथमपि अतिकष्टेनेत्यर्थः। चन्द्रकिरणानां सन्तापकरत्वात् चन्द्रातपेत्युक्तम्। अनर्थपरम्पराः निरवच्छिन्नदुःखकारणानि तत्तज्जनितदुःखानीत्यर्थः। सर्व्वमेतत् त्वत्प्राप्तिप्रत्याशयैव कृतमिति भावः। पुनः किन्तु। निराशा नन्दनाय

---

(१) सिरीमाहवहत्थ...इत्यपि पाठः।

(२) मालदीओविदणिव्विसेसं इति क्वचित् पाठः।

(३) हिअए इति पाठान्तरम्। (४) स्वकण्ठादपनीय इति भिन्नः पाठः।

माध। अपवार्य्य। हन्त (द)

एकीकृतस्त्वचि निषिक्त इवावपीड्य
निर्भुग्नपीनकुचकुट्मलया नया मे।
कर्पूर-हार-हरिचन्दन-चन्द्रकान्त-
निष्यन्द-शैवल-मृणाल-हिमादिवर्गः ॥१२॥

दानादयोगात् त्वत्प्राप्ताविति शेषः। अतएव स्वजीवनेऽपि निराशास्मीति भावः। इति विज्ञापयेत्यन्वयः। शोकसमाकुलतया सङ्कल्पनिर्व्वर्त्तपतिपत्नीभावविस्मरणात् माधवेति नामोच्चारणमिति बोध्यम्। मालतीनिर्व्विशेषं मालत्यास्तुल्यं। उन्मुच्य अवतार्य्य। साध्वसोत्कम्पं भयवशाद्वेपथुं, नाटयति अभिनयति। तथा च मालार्पणकाले स्तनहीनत्व-व्यूढोरस्कत्वानुभवादालिङ्गनसमयानुभूत-कठिनस्पर्शसंवादाच्च प्रथमं पुरुष इति ज्ञानं, समनन्तरञ्च आलिङ्गने सुधासागरसन्तरणसुखानुभवादन्यस्यासम्भवेन कामन्दकीकौशलात्तदुपस्थितेरेव सम्भवेन कथञ्चिच्चाक्षुषप्रत्यक्षेण च माधव एवायमिति ज्ञानं जातं; ततश्च तादृशनिभृतदेशे माधवेन सहावस्थानात् पित्रादितो भयेन तदालिङ्गनादेः सात्त्विकभावोदयेन चोत्कम्पं नाटयतीति बोध्यम्।

अत्र 'न मया मन्दभागिन्या' इत्यादिवाक्येनानुतापप्रतीतेः पश्चात्तापो नाम नाट्यालङ्कारः। यथा तत्रैव "मोहादवधीरितार्थस्य पश्चात्तापः स एव तु।"

(द) माधेति। अत्र हर्षे हन्तशब्दः।

एकीकृत इति। निर्भुग्नौ गाढालिङ्गने मदीयवक्षसा विदलनात् स्वकीयवक्षसि अवरोपितौ, अतएव पीनौ उन्मुक्तसुखाभावात् किञ्चित्पीवरतां गतौ कुचौ कुट्मलौ मुकुलाविव यस्याः तया, अनया मालत्या अवपीड्य मां गाढमालिङ्ग्य मे मम त्वचि गात्रचर्म्मणि कर्पूरः हारो मुक्ताहारः हरिचन्दनं देवदारुविशेषश्च तेषां निष्यन्दो रसः, तथा शैवलं शैवालं मृणालं विसं हिमं तुषारश्च, आदिशब्देन चन्द्रकिरणचन्दनादीनां

माल। स्वगतम् (१)। **अम्हो! (२) लवङ्गिआए मालदी विप्पलद्धा। (ध)**

माध:। **अयि स्ववेदनामात्रवेदिनि! (३) परव्यथानभिज्ञे! (४) इयमुपालभ्यसे। (न)**

**उद्दामदेहपरिदाहमहाज्वराणि**

**सङ्कल्पसङ्गमविनोदितवेदनानि।**

---

(ध) अहो! लवङ्गिकया मालती विप्रलब्धा।

ग्रहणं, तदादीनां वर्गः समूहः, एकीकृतो मिश्रितः सन् निषिक्त इव लिप्त इव प्रतीयत इति शेषः। अतीवशैत्यानुभवादिति भावः।

अत्र भावाभिमानिनी वाच्या क्रियोत्प्रेक्षाऽलङ्कारः, तेन च मालत्याः स्पर्शोऽतीवशीतल इति व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

वसन्ततिलका वृत्तम्॥ १२॥

(ध) मालेति। अहो इति विस्मये। विप्रलब्धा स्वयमपसृत्य अमुष्योपस्थापितत्वेन प्रतारिता।

(न) माधेति। परस्य मम व्यथानभिज्ञे इत्यर्थः। इयं त्वम् उपालभ्यसे मया निन्द्यसे। उक्तसम्बोधनद्वयेनैवेति भावः।

ननु का तव व्यथेत्याह उद्दामेति। मयापि, उद्दामः प्रौढ़: देहपरिदाहो मदनजनितशरीरसन्ताप एव महाज्वरो येषु तानि, सङ्कल्पसङ्गमेन मनोवृत्तिनिष्पादितत्वत्-संसर्गेण विनोदिता अपनीता वेदना विरहव्यथा येषु तानि। तथा त्वत्सहसंविदा तवानुरागो मयि विद्यत एव इति ज्ञानेन, अवलम्बितं धृतं जीवितं जीवनं येषु तानि,

(१) क्वचित् स्वगतमिति पाठो नास्ति। (२) अम्महे इति पाठान्तरम्।

(३)...निवेदिनि इति पाठभेदः। (४) परव्यसनानभिज्ञे! इति भिन्नः पाठः।

त्वत्स्नेहसंविदवलम्बितजीवितानि
किंवा मयापि न दिनान्यतिवाहितानि ॥ १३ ॥

लव। सहि! उवालम्भणिज्जेव (१) उवालद्धासि। (प)

(प) सखि! उपालम्भनीयैवोपालब्धासि।

नहि तवानुरागो विद्यत एव इति ज्ञानञ्चेन्नाभविष्यत् तदा जीवनमेव धारयितुं नाशक्ष्य-मिति भावः। तथाभूतानि दिनानि किंवा न अतिवाहितानि त्वयेव किं नातिक्रान्तानि अपि तु अतिवाहितान्येवेत्यर्थः। सुतरां स्ववेदनामात्रप्रकटनात् 'ममापि त्वद्विरहवेदना-ऽस्ती'त्यनुमानाभावेन तदप्रकाशात् एकदेशदर्शिता रूपेयं तव निन्दा क्रियत इति भावः।

अत्र प्रथमचरणे देहदाहेति व्यञ्जनसङ्घस्य सकृत्साम्याच्छेकानुप्रासः, परिदाह एव महाज्वर इति निरङ्गं केवलरूपकञ्च, अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः, तथा द्वितीय-चरणे एकसकारयोः सकृत् साम्यात् 'नोदि दने' त्यनेकव्यञ्जनस्यैकधा साम्याच्च वृत्त्यनु-प्रासः, चतुर्थचरणे अर्थापत्तिश्चेति समुदाये परस्परनैरपेक्ष्यात् संसृष्टिः।

आख्यानं नाम नाट्यालङ्कारश्च "आख्यानं पूर्ववृत्तोक्तिः" इति दर्पणलक्षणात्।

"प्रत्ययोपलब्धिश्चित् संवित्" इत्यमरः।

वसन्ततिलका वृत्तम् ॥ १३ ॥

(प) सखेति। उपालम्भनीयैव निन्दनीयैव त्वम् उपालब्धासि अनेन निन्दितासि। तथा च "अनुरागोऽनुरागेण प्रत्येष्टव्य" इति महाजनसंवादात् अभिन्नात्मन इवास्याप्या-त्मनि महानुरागस्य निर्व्यूढत्वेन विरहवेदनायाः समानत्वानुमानादुभयोरपि तन्निवेदनौ-चित्ये केवलस्ववेदनानिवेदनात् अनुरागस्वभावानभिज्ञताप्रकाशेन त्वं निन्दनीयैव जातासी-त्यनेन निन्दितः, सुतरां निर्दोषस्य दोषाविष्करणरूपदोषोऽप्यस्य न सम्भावनीय इति भावः।

---

(१) उवालम्भणिज्जं इति पाठान्तरम्।

कल। अहो! सरसरमणिज्जदा संविहाणस्स। (फ)

मक। महाभागे! एवमेतत्। (ब)

त्वं वत्सलेति कथमप्यवलम्बितात्मा
सत्यं जनोऽयमियतो दिवसाननैषीत्।
आवद्ध कङ्कण-कर-प्रणय-प्रसाद-
मासाद्य नन्दतु, चिराय फलन्तु कामाः॥ १४॥

---

(फ) अहो! सरसरमणीयता संविधानस्य।

---

(फ) कलेति। संविधानस्य अनयोरत सम्मेलनरूपस्य विधिव्यापारस्य, सरसं सानुरागम्, अतएव रमणीयं मनोहरमिति सरसरमणीयं तस्य भावः सा। विधेरिदमनयो र्योजनमन्योन्यानुरागप्रयुक्तम् अतएव मनोहरं सुतरां विचित्रमित्यर्थः। दूरस्थस्य स्वगत-वदुक्तिरियम्।

(ब) लकेति। महाभागे! मालति! एतत् लवङ्गिकोक्तम्, एवं सत्यमित्यर्थः।

त्वमिति। त्वं वत्सला अस्मिन्ननुरागवती इति हेतोरेव कथमप्यतिकष्टेन अवलम्बितः विरहावस्थायां धृत आत्मा जीवनं येन स तादृशोऽयं जनो माधवः इयतो दिवसान् तव प्रथमदर्शनादारभ्य एतावन्ति दिनानि अनैषीत् अतिवाहितवानिति सत्यम्। तवानुराग एवास्य जीवनधारणे हेतुरिति त्वयैवास्येतः परमपि जीवनरक्षणे सर्व्वथा यतितव्यमिति भावः। अतएव आवद्धं धृतं कङ्कणं विवाहसूत्रं येन तस्य करस्य तव पाणेः प्रणयः परिग्रहः एव प्रसादोऽनुग्रहः तम्, आसाद्य प्राप्य नन्दतु माधवः प्रीतो भवतु, तथा कामा अस्याक-मभिलाषाश्च चिराय फलन्तु सफला भवन्तु।

अत्र चतुर्थपादे द्वितीयवाक्ये समुच्चयार्थक-चकाराभावाच्च न्यूनपदतादोषः, स च 'चिराय फलन्तु चेच्छा' इति पाठेन समाधेयः।

लव । महाणुहाव ! हिअए वि अप्पडिहद-सअंगाह साहसो अअं जणो किं दाणिं करग्गहणे विआरेदि (१) । (भ)

माल । हद्धि ! कण्णआजणविरुद्धं किं वि उवण्णसादि (२) । (म)

(भ) महानुभाव ! हृदयेऽपि अप्रतिहतस्वयंग्राहसाहसोऽयं जनः किमिदानीं करग्रहणे विचारयति ।

(म) हा धिक् ! कन्यकाजनविरुद्धं किमप्युपन्यस्यति ।

"कङ्कणं करभूषायां सूत्रमङ्गनयोरपि ।" इति मेदिनी ।

वसन्ततिलका वृत्तम् ॥ १४ ॥

(भ) लवेति । अपरिवार्य्ये । हृदयेऽपि निजवक्षस्येव अप्रतिहतम् अनिवारितम् अङ्गीकृतमित्यर्थः स्वयंग्राह एव इतः पूर्व्वमालिङ्गनसमये स्वयं त्वदीयवक्षोधारणमेव साहसं येन स तादृशोऽयं जनो मालती, इदानीं करग्रहणे त्वत्कर्तृकनिजपाणिग्रहणे किं विचारयति कर्त्तव्याकर्त्तव्यतया किं वितर्कयिष्यति किमपि नेत्यर्थः । या खलितःपूर्व्वं त्वदीयवक्षसि स्वकीयकुचयुगलमेव निधाय गाढ़मालिङ्गितुमर्हति स्म, तस्या मालत्या इदानीं त्वत्कर्तृकनिजपाणिग्रहणे किमपि न वितर्कणीयमस्ति पाणिग्रहणफलस्यालिङ्गनस्य पूर्व्वमेव निष्पन्नत्वात् । सुतरां त्वमिदानीं निःशङ्कमस्याः पाणिग्रहणं कर्त्तुमर्हसीति भावः ।

विचारयतीति भविष्यत् सामीप्ये वर्त्तमाना । "हृदयं वक्षसि स्वान्ते" इति हेमः ।

(म) मालेति । कन्यकाजनविरुद्धं पुरुषस्पर्शरूपत्वात् । आलिङ्गनन्तु

(१)···किं दाणिं कङ्कणाभरणं करं विआरेदि महाभाओ इति क्वचित् पाठः ।

(२) माल । ( स्वगतम् ) हा हद्धी ! हद्धी ! इदाणिं कण्णआअणविरुद्धं किम्पि एसा उवण्णसदि । इति पाठान्तरम् ।

प्रविश्य कामन्दकी। **पुत्रि! कातरि! किमेतत्।** (य)

मालती। कम्पमाना कामन्दकीमालिङ्गति।

काम। तस्याश्चिबुक (१)-मुन्नमय्य। **वत्से! (२)**

**पुरश्चक्षूरागस्तदनु मनसोऽनन्यपरता,**

**तनुग्लानि र्यस्य त्वयि समभवद् यत्र च तव।**

लवङ्गिकाश्रमेण कृतमित्यभिप्रायः। किमपि आत्मना पाणिग्राहणं उपन्यस्यति प्रलपति लवङ्गिकेति शेषः। पित्रोरननुमतत्वादितन्न शक्नोमीति भावः।

(य) प्रविश्येति। पुत्रीत्यनेन त्वयि वर्त्तते मे सम्यगिष्टानिष्टदर्शनं दानादावधिकारश्चेति व्यज्यते। कातरे! पित्रोरननुमतमिदं कथं कुर्य्यामित्यनुचितशङ्कोद्विग्नचित्ते! एतत् पाणिग्राहणानभिप्रायप्रकाशनं किं कथं क्रियत इति शेषः। शीघ्रमिदमनुमन्यतामिति भावः।

पुर इति। यस्य माधवस्य त्वयि, यत्र च माधवे तव, पुरः प्रथमं चक्षूरागः नेत्रप्रीतिः, तदनु तदनन्तरं मनसः अनन्यपरता एकाग्रता अतीवचिन्तासक्तिरित्यर्थः, परञ्च तनुग्लानिः अप्राप्तिवशान्मदनजनितदेहसन्तापः समभवत्। प्रेयान् प्रियतमः, अयं स युवा माधवः, इह अस्मिन् स्थाने वर्त्तते। अतएव हे सुवदने! जड़तामप्रतिपत्तिं कर्त्तव्याकर्त्तव्यविमूढ़तां मुञ्च परित्यज। जड़तां विहाय निःशङ्कमात्मनः पाणिं ग्राहयेति भावः! तेन च विधातुः स्रष्टुः वैदग्ध्यं युवयोर्निर्म्माणनैपुण्यं विलसत् प्रकाशतां परस्परयोग्यसमावेशादिति भावः। मदनो मन्मथश्च सकामोऽस्तु युवयोः समागमाच्चिरात् पूर्णाभिलाषो भवतु।

अत्र प्रथमार्द्धे अन्योन्याऽलङ्कारः, अप्रस्तुतानां चक्षूरागादीनां समभवदित्येकक्रियया कर्त्तृतयाऽभिसम्बन्धात् तुल्ययोगिता चेत्यनयोरेकाश्रयानुप्रवेशरूपः सङ्करः। चतुर्थचरण-

(१) तस्याश्चुचुकमिति क्वचित् पाठः। (२) क्वचित् "वत्से" इति पाठो नास्ति

युवा सोऽयं प्रेयानिह सुवदने ! मुञ्च जड़तां
विधातु वैदग्ध्यं विलसतु, सकामोऽस्तु मदनः ॥१५॥

लव । भअवदि ! किसणचउद्दसीरअणि-मसाण सञ्चरण-णिव्वत्तिद (१) विसम-व्ववसाअ-णिव्वाविद-चण्ड-पासण्ड-पअण्ड दोद्दण्ड-साहसो (२) साहसिओ क्खु एसो, अदो मे (३) पिअसही उक्कम्पिदा । (२)

---

(२) भगवति ! कृष्णचतुर्दशी-रजनी-श्मशान-सञ्चरण-निर्वर्त्तित-विषम-व्यवसाय-निर्वापित चण्ड-पाषण्ड-प्रचण्ड-दोर्दण्ड-साहसः साहसिकः खल्वेषः, अतो मे प्रियसखी उत्कम्पिता ।

---

वाक्यार्थौ प्रति 'मुञ्च जड़ताम्' इति वाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्चेति परस्परनैरपेक्ष्यात् समुदाये संसृष्टिः । तथा तच्चरणगतवाक्यद्वये आवश्यक समुच्चय-वाचक शब्दाभावात् न्यूनपदत्वमदोषः, स च 'विधातुर्वैदग्ध्यं फलतु, मदनश्चास्तु सुहितः' इति पाठेन समाधेयः ।

शिखरिणी वृत्तम् ॥ १५ ॥

(२) लवेति । कृष्णचतुर्दशी रजन्यां विषमकर्म्मानुष्ठानोपयोगित्वेन तन्त्रशास्त्र-विहितायामिति भावः श्मशानसञ्चरणेन निर्वार्त्तितौ मालतीप्राप्तये निष्पादितौ विषम-व्यवसायौ महामांसविक्रयात्मको दारुणाध्यवसायौ येन स चासौ, निर्वापितं नाशितं

---

(१)...सञ्चारणिव्वूढ़...इत्यपि पाठः ।

(२)...पचण्ड-पाखण्ड-दोद्दण्ड...इति पाठोऽपि ।

(३) क्वचित् मे इति पाठो नास्ति ।

मक । स्वगतम् । साधु लवङ्गिके ! साधु, अवसरे खल्वनुरागोपकारयोर्गरीयसोरुपन्यासः (१) । (ल)

माल । हा ताट ! हा अम्ब ! । (व)

काम । वत्स ! माधव ! ।

माध । आज्ञापय ।

---

(व) हा तात ! हा अम्ब ! ।

---

निवारितं चण्डपाषण्डस्य भीषण-निषिद्धकर्मकारिणः कापालिकस्याघोरघण्टस्य प्रचण्ड-दोर्दण्डयोः दारुणभुजदण्डयोः साहसं मालतीहत्यारूपं साहसकर्म्म येन स तथोक्तश्चेति कर्म्मधारयः । एष माधवः साहसिकः खलु । उत्कम्पिता साहसिकपाणिग्रहणे विवस्रा । प्रचण्डस्वभावात् साहसिकात् सर्व्व एव बिभेतीत्याशयः । एतेन तत्तद्घटना-स्मारकतया येन अनुरागातिशयात् तादृशरजन्यां महाश्मशाने मालतीलाभायैव पिशाचेभ्यो महामांसविक्रयरूपं दारुणसाहसिकं कर्म्माध्यवसितं, येन चातिभयङ्करादघोरघण्टादात्म-नैरपेक्ष्येणापि मालती परित्राता , तेनानुरागातिशयवता निरतिशयोपकारिणा माधवे-नात्मपाणिग्रहणं पित्रोरनुमत्यभावेऽपि मालत्या अवश्यकर्त्तव्यमिति व्यज्यते ।

(ल) मकेति । अवसरे उपयुक्तसमये । गरीयसोरतिमहतोः । उपन्यास उप-स्थापनं स्मारणमित्यर्थः । विषमव्यवसायेत्यन्तेन महानुरागस्योपन्यासः, दोर्दण्डसाहसेत्यन्तेन च महोपकारस्योपन्यास इति बोध्यम् ।

(व) मालेति । हा तात ! हा अम्ब ! युवयोरनुमतेरप्यनपेक्षया ईदृशाचरणात् कथं पुनर्वदनं दर्शयेयमिति भावः । एतेन माधवपाणिग्रहणे सम्मतिरुत्पन्नेति व्यज्यते ।

(१) "लवङ्गिके ! स्थाने..." इति पाठभेदः

काम । इयमशेषसामन्तमस्तकोत्तंसपरागरञ्जितचरणाङ्गुले-रमात्यभूरिवसोरेकमपत्यरत्नं (१) मालती, भगवता सदृश-संयोगरसिकेन वेधसा, मन्मथेन, मया च तुभ्यं प्रदीयते।
इति रोदिति। (श)

मक। फलितं हि न स्तर्हि (२) भगवतीपादप्रसादेन। (ष)

(श) कामेति। अशेषाणां सामन्तानामधिकृतभूस्वामिनां ये मस्तकोत्तंसाः शिरो-भूषणीभूतानि कुसुमानि तेषां परागै रजोभिः, रञ्जिताश्चरणाङ्गुलयो यस्य तस्य। अपत्यञ्च तत् रत्नमिव रत्नञ्चेति अपत्यरत्नम्। एतेन एकतो महैश्वर्य्यशालिनः कन्या, द्वितीयत एकापत्यतया पित्रोरतीववात्सल्यभाजनीभूता,तृतीयतश्च नानागुणवत्त्वात् रत्नभूता मालती, सुतरां तवादरातिशयः करणीय इति सूच्यते। सदृशसंयोगरसिकेन योग्ययोजनानुराग-शालिना वेधसा विधात्रा ललाटलिखनात्, मन्मथेन परस्परासक्तिजननात्, मया च लौकिकोपायावलम्बनात् तुभ्यं प्रदीयते। एतेन भूरिवसुना कामन्दक्यां रहसि मालती-दानाधिकारो न्यस्त इति प्रतीयते। मातृस्थानपातिनी कामन्दकी दानेन भाविविरहसम्भा-वनया वात्सल्यात् रोदितीति बोध्यम्।

अत्र संग्रहो नाम गर्भसन्धेरङ्गम्। "संग्रहः पुनः। सामदानार्थसम्पन्नः..." इति साहित्यदर्पणात्।

(ष) मकेति। तर्हि माधवाय मालत्या दाननिष्पत्तौ सत्याम्। फलितमिति भावे क्तप्रत्ययः, तेन सफलेन जातमित्यर्थः।

(१) एकापत्यरत्नमिति समस्तः पाठः क्वचित्

(२) नस्तर्हीत्यत्र केवलं तर्हीति पाठोऽपि।

माध। तत्किमिति वाष्पायितं भगवत्या? (१)। (स)

काम। चीवराञ्चलेन नेत्रे परिमृज्य। विज्ञापयामि कल्याणिनम्(२)। (ह)

माध। नन्वाज्ञापय (३)।

काम। परिणतिरमणीयाः प्रीतयस्त्वद्विधाना-
महमपि तव मान्या हेतुभिस्तैश्च तैश्च।

(स) माधेति। वाष्पायितं वाष्पोद्गमनं कृतम्। "वाष्पादिभ्य उद्गमने" इत्याद्युक्ताद्भावे क्तः।

(ह) कामेति। कल्याणिनं मङ्गलास्पदं त्वां विज्ञापयामि वाष्पोद्गमनकारणमिति शेषः।

परिणतीति। हे तात! पुत्र! वत्स! त्वद्विधानां त्वादृशानां नानागुणरमणीयानां जनानां प्रीतयः यत्र कुत्रचिदपि स्नेहाः परिणतिरमणीयाः परिपाकेण मनोहराः क्रमिकवर्द्धमानावस्थया क्रमशो गाढ़रूपा भवन्तीत्यर्थः। अयमेव स्वभाव इति भावः। तथा अहमपि तैश्च तैश्च हेतुभिः पितृश्वशुरसहाध्यायित्व-तत्सौहार्द-मातृवत्वात्सल्यवत्त्वप्रभृतिभिः कारणैः मान्या सम्मानार्हा। अतएव मम वचनं त्वया नातिक्रमणीयमिति भावः। तत्तस्मात् मत्तः परस्तात् परस्मिन् काले मत्परोक्षमात इत्यर्थः, इह अस्यां सुवदनायां मालत्यां परिचय प्रणय एव करुणा दया तस्याः सकाशात् सर्वथा

(१) तत्किमित्यतिवाष्पायितमाननं भगवत्या इति पाठान्तरम्।

(२) वत्स! किमपि कल्याणं वक्तुकामास्मि इत्यपि पाठः।

(३) विज्ञापयामीत्यादि कामन्दक्युक्तेः परम्।
माधवः। तत् किम्।
कामन्दकी। विज्ञापयामि।
माधवः। आज्ञापय।
इत्येवं पाठाः पुस्तकान्तरे।

तदिह सुवदनयां तात ! मत्तः परस्तात् (१)
परिचयकरुणायाः (२) सर्व्वथा मा विरंसीः ॥१६॥

इति पादयोः पतितुमिच्छति। (च)

माध। निवारयन्(३)। अहो ! वात्सल्यादतिक्रामति प्रसङ्गः (क)

श्लाघ्यान्वयेति, नयनोत्सवकारिणीति,
निर्व्यूढ़सौहृदभरेति, (४) गुणोज्ज्वलेति।

---

मा विरंसीः न विरतो भव, सर्वथैवास्यां त्वया गाढ़स्नेहरूपा दया करणीयेत्यर्थः ममायमनुरोध इति भावः।

अत्र तादृशकरुणाया अविरागं प्रति प्रथमचरणार्धरूपे एकस्मिन् कारणे सत्यपि माननीयानुरोधरूपकारणान्तरोपन्यासात् समुच्चयोऽलङ्कारः। तथा शिक्षा नाम नाट्यालङ्कारः "शिक्षा स्यादुपदेशनम्" इति लक्षणात्।

अस्यानुरूपः श्लोको यथा, शाकुन्तले—"अस्मान् साधु विचिन्त्य संयमधनान्" इत्यादिः। "पुत्रे पितरि पूज्ये च तातशब्दः प्रयुज्यते।" इति शब्दार्णवः।

"परिचयः (पुं)... प्रणयः" इति शब्दकल्पद्रुमः।

मालिनी वृत्तम्॥ १६॥

(च) इतीति। अनुरोधातिशय्यज्ञापनार्थेयं पादपतनेच्छेति बोध्यम्।

(क) माधेति। निवारयन् किञ्चिदपसृत्य हस्तधारणेनेति शेषः। प्रसङ्गः अनुरोधप्रस्तावः, वात्सल्यात् स्नेहात्, अतिक्रामति औचित्यमुल्लङ्घयति। सर्व्वेषामेव परमवन्दनीयायास्ते पुत्रकल्पस्य मम चरणधारणोद्यमो नितान्तमनुचित इति भावः।

कामन्दकीगुरुवाक्यमङ्गीकरोति श्लाघ्येति। इयं मालती, श्लाघ्यान्वयेति इतिशब्दः सर्वत्र स्वरूपार्थे प्रशस्तकुलस्वरूपा, नयनोत्सवकारिणीति निरुपमसौन्दर्य्येण नेत्रानन्द-

---

(१) परस्मादिति पाठान्तरम्। (२) परिचयकरुणायामिति पाठभेदः।

(३) क्वचिदयं पाठो नास्ति। (४) निर्व्यूढ़सौहृदरसेति भिन्नः पाठः।

एकैकमेव हि वशीकरणं गरीयो
युष्माकमेवमियमित्यथ किं ब्रवीमि (१) ॥१७॥

काम। वत्स माधव !

माध। आज्ञापय।

विधायिस्वरूपा निर्व्यूढो निष्पन्नः सौहृदभरः प्रेमातिशयो यस्यां सेति तत्स्वरूपा यथा गुणैः सुशीलता-विनयादिभिः उज्ज्वलेति निर्मलस्वरूपा च। हि यस्मात् एतेषु आभ्या-न्वयत्वादिषु एकैकमेव आभ्यान्वयत्वादिकं कारणं गरीयोऽनतिक्रमणीयं वशीकरणं परायत्तीकरणसाधनम्। विशेषतश्च युष्माकं जगन्माननीयानामस्त्वेत्यर्थः, एवं ईदृशी निरतिशयवात्सल्यभागिनीति तात्पर्य्यं, इति हेतोः, अथेति वाक्यान्तरारम्भे, किं ब्रवीमि मुखेन किं वदामि। आभ्यान्वयत्वादिगुणवशात् विशेषतश्च तत्रापि वात्सल्य भागित्वाच्चिरमेवास्यां मया गाढः प्रणयः करणीय इति भावः।

अत्रापि गाढप्रणयविधानकार्य्यं प्रति आभ्यान्वयत्वाद्यनेककारणोपन्यासात् समुच्चयो-ऽलङ्कारः। इतिशब्दस्य वारंवारमुपादानादनवीकृतत्वदोषः, किञ्च समुच्चयवाचकचकारा-नुपादानान्न्यूनपदतादोषोऽपि, एतयोः परिजिहीर्षया 'आभ्यान्वया च नयनोत्सवकारिणी च, निर्व्यूढसौहृदभरा च गुणोज्ज्वला च' इति पाठोऽङ्गीकरणीयः। नचैवमपि चकार चतुष्टयोपादानात् स दोषस्तदवस्थ एवेति वाच्यं "धिक् त्वाञ्च तञ्च मदनञ्च इमाञ्च माञ्च" इत्यादाविव अनेकचकारोपादाने सहृदयैस्तद्दोषानङ्गीकारात् सहृदयानामानन्दोद्रेक-जनकतयैव गुणदोषाभ्युपगमात्। तथा गुणकीर्त्तनं नाम नाट्यलक्षणं। यथा दर्पणे—

"गुणानां कीर्त्तनं यत्तु तदेव गुणकीर्त्तनम्।

"इति स्वरूपे सान्निध्ये" इत्यादि हैमः।

वसन्ततिलका वृत्तम् ॥ १७ ॥

---

(१) कस्मिंश्चित् पुस्तके तु "मकरन्दः। भगवति! आभ्यान्वयेति—" इति वक्तृ-व्यतिक्रमो दृश्यते।

काम। स्वीक्रियतामियम् (१)। (ख)

माध। स्वीकरोमि (२)।

काम। वत्स माधव! वत्से मालति! (३)

माध। आज्ञापय!

माल। आणवेदु भअवदी।

काम। प्रेयो मित्रं, बन्धुता वा समग्रा
सर्वे कामाः शेवधि र्जीवितञ्च।

(ग) आज्ञापयतु भगवती।

(ख) कामेति। इयं मालती स्वीक्रियतां त्वया भार्य्यारूपेण परिगृह्यताम्। एवञ्च "तुभ्यं प्रदीयते" इत्यनेनैव दानं, अयन्तु खलजनकीभूतप्रतिग्रहानुरोध इति ज्ञेयम्। अतोल्लेखो नाम नाट्यालङ्कारः। "कार्य्यग्रहणमुल्लेखः" इति दर्पणलक्षणात्।

प्रेय इति। स्वर्त्ता पतिः स्त्रीणां प्रेयो मित्रं प्रियतमः सखा, समग्रा सर्वप्रकारा बन्धुता बन्धुसमूहः, वाशब्दः समुच्चये, सर्वे, काम्यन्त इति कामा अभिलाषविषयाः, शेवधि र्निधिः, किं बहुना जीवितं जीवनञ्च। इति मालतीं प्रत्युक्तिः। तथा धर्म्मदारा धर्म्मभार्य्या च पुंसां पुरुषाणां प्रेयो मित्रं, समग्रा बन्धुता वा, सर्वे कामाः शेवधिः, किं बहुना जीवितञ्च। इयन्तु मुखं परावर्त्त्य माधवं प्रत्युक्तिः। इति इदं, वत्सयो- र्मालतीमाधवयो र्युवयोः अन्योन्यं परस्परं ज्ञातं विदितमस्तु। तथा च अद्यारभ्य त्वया मालत्या प्रियतममित्रत्वेन, सर्वप्रकारबन्धुभावेन, सर्वाभिलषितप्राप्तिरूपेण धननिधि- प्रकारेण, किं बहुना स्वकीयजीवनरूपेण च माधवो द्रष्टव्यः, तदादरणीयश्च। त्वया

क्वचित्। (१) (२)-चिह्नित पाठौ न दृश्येते।

(३) तथा तत्र 'वत्स माधव!' इत्यपि पुनः पाठो नास्ति।

स्त्रीणां भर्त्ता, धर्म्मदाराश्च पुंसा-

मित्यन्योन्यं वत्सयोर्ज्ञातमस्तु ॥ १८ ॥

मक । अथकिम् । (घ)

लव । भअवदि ! (१) जधा तुह्मे आणवेध । (ङ)

(ङ) भगवति ! यथा यूयमाज्ञापयत ।

...थवेनादि इतः प्रभृति तेन तेन रूपेण मालती द्रष्टव्या, तद्वदादरणीया च इति भावः ।

अत्रोभयगतप्रियमित्रत्वादिप्रकारकज्ञानस्य उभाभ्यां परस्परकरणादन्योन्यालङ्कारः, ...रङ्गं केवलरूपकञ्चाङ्गमित्यनयोरङ्गाङ्गिभावेन सङ्करः । तथा उपदिष्टं नाम नाट्य-लक्षणम् । यथा दर्पणे "उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः ।

"निधिर्ना शेवधि" रित्यमरः ।

बन्धुतेति "ग्रामजन"त्यादिना तल् । कामा इति कर्म्मणि घञ् । वत्सयोरिति ...समानाधिकरणयोः सौवे" इति कर्त्तरि षष्ठी ।

पतिपत्न्योः प्रियमित्रत्वादिज्ञानप्रमाणं ब्रह्मवैवर्त्तपुराणादौ द्रष्टव्यम् ।

अस्यानुरूपः श्लोको यथा, शाकुन्तले "शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्ति"मित्यादिः ।

शालिनीवृत्तम् "मात्तौ गौ चेच्छालिनी वेदलोकै"रिति लक्षणात् ॥१८॥

(घ) मकेति । लज्जावशान्माधवस्य तूष्णीम्भावमवलोक्य मकरन्दः प्रतिनिधिभावेन ...मन्दस्युपदिष्टमङ्गीकरोति अथकिमिति । अथकिमित्येकमेवाव्ययमङ्गीकारार्थे इत्युक्त-मेव ।

(ङ) लवेति । मालत्या अपि तथैव तूष्णीम्भावात् लवङ्गिकाङ्गीकरोति भगवतीति ।

(१) क्वचित् 'भअवदि' इति नास्ति ।

काम। वत्स मकरन्द ! अनेनैव वैवाहिकेन मालतीनेपथ्येनापवारितः प्रवर्त्तस्व परिणयायात्मनः। इति पटलकमर्पयति (१) (च)

मक। यदाज्ञापयति भगवती। यावदितश्चित्रयवनिकामन्तर्धाय नेपथ्यं धारयामि। तथा करोति। (छ)

माध। भगवति ! शुभमपि बह्वनर्थक (२) मतिसङ्कटमेतद् वयस्यस्य। (ज)

(च) कामेति। वैवाहिकेन विवाहसंसृष्टेन राजप्रेषितेन, मालत्या नेपथ्येन वेशेन, अपवारितः तिरोहितः परैरनवगतमकरन्दभाव इत्यर्थः। प्रतारणापक्षे आत्मनो मालतीभावेन नन्दनेन सह परिणयाय, वास्तविकपक्षे तु मालतीवेशेन मन्दभाग्यं नन्दनं वञ्चयित्वा आत्मनः स्वस्यैव मदयन्तिकया सह परिणयायेत्यर्थः। पटलकं मालती परिच्छदं। "अथ पटलं पिटके च परिच्छदे।" इति मेदिनी।

अयमेव मकरन्दविवाहवृत्तान्तः पताका नाम। "व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते।" इति लक्षणात्।

(छ) मकेति। इतो गत्वा, चित्रयवनिकां मन्दिराभ्यन्तरैकपार्श्वविलम्बिनीं विचित्रतिरस्करिणीं, अन्तर्धाय मम एषाञ्च मध्ये निधाय, चित्रयवनिकान्तराले स्थित्वेत्यर्थः। अन्यथा आसां स्त्रीणामन्तिके प्रायनग्नत्वासम्भवेन सम्यक् परिधानासम्भव इति भावः।

(ज) माधेति। एतत् मालतीवेशेन नन्दनवञ्चनपूर्वकमदयन्तिकापरिणयनं, शुभमपि सत् बह्वनर्थकं बहुविपत्सङ्कुलं, अतिसङ्कटं सुदुष्करम्। सुतरामितो मे

(१)...त्वमनेनैव...प्रसाधितः परिणाययात्मानमिति पाठान्तरम्।

(२) सुलभमपि बह्वनर्थकं, सुलभबह्वनर्थं इति पाठभेदौ।

काम । आः (१) कस्त्वमस्यां चिन्तायाम् ? । (झ)

माध । एवं भगवत्येव जानाति । (ञ)

प्रविश्य मकरन्दः । विहसन् । एषोऽस्मि मालती संवृत्तः (२) । (ट)

सर्वे । सविस्मयं सकौतुकञ्च पश्यन्ति । (३)

माध । मकरन्दं परिष्वज्य सोपहासम् (४) । भगवति ! कृतपुण्य एव

---

महती विपदाशङ्का विद्यत इति भावः । एतेनासम्यक्कृतया मन्यमाने तव कौशलं माधवस्य ऽभत्यं व्यज्यते ।

(झ) कामेति । नाधिकारात्यर्थः । युष्माकं सर्वविधमङ्गलामङ्गलानां मय्येव न्यस्तत्वात्, मयैव च विपदनागमोपायोद्भावनात् नास्ति ते कापि विपदाशङ्केति भावः ।

अत्राक्षमा नाम नाट्यालङ्कारः "अक्षमा सा परिभवः स्वल्पोऽपि नाभिसह्यते ।" इति लक्षणात् ।

(ञ) माधेति । एवं अनेन व्यापारेण मङ्गलममङ्गलं वा, भगवत्येव नत्वह-मित्यर्थः । एतेन ससंशया सम्मतिः सूच्यते ।

(ट) प्रविश्येति । अत्र विगूढं नाम लास्याङ्गं, कपटं नाम नाट्यालङ्कारश्च । यदा दर्पणे—

"स्त्रीवेशधारिणां पुंसां नाट्यं श्लक्ष्णं विगूढकम् ।"

"कपटं मायया यत्र रूपमन्यद्विभाव्यते ।"

---

(१) आः इत्यपि क्वचिन्नास्ति ।

(२) वयस्य ! मालत्यस्मि इति भिन्नः पाठः ।

(३) सर्वे सकौतुकं पश्यन्ति इत्यपि पाठः ।

(४) गाढं मकरन्दं परिष्वज्य इति क्वचित् पाठः ।

नन्दनः यः प्रियामीदृशीं (१) मनसा मुहूर्त्तमपि कामयिष्यते (२)। (ठ)

माध। वत्सौ मालतीमाधवौ! इतो निर्गत्य दृढगहनेन गम्यतामुद्वाहमङ्गलार्थम् अस्मद्‌विहारिकायाः (३) पश्चादुद्यानवाटः, कुर्विहितञ्च तत्रैव वैवाहिकं द्रव्यजातमवलोकितया। भूयश्च (ड)

गाढ़ोत्कण्ठकठोर-केरलवधू-गण्डाच्छपाण्डुच्छदैः (४)
ताम्बूलीपटलैः पिनद्धफलित (५)-व्यानम्रपूगद्रुमाः।

(ठ) माधीत। ईदृशीं परमसुन्दरीं मनसैत्यनेन 'न वपुषा' इति सूच्यते।... कामयिष्यते "नाल्पेन तपसा लभ्यः सुन्दरस्त्रीसमागम" इत्युक्तेरिति भावः। एतेन मकरन्दस्यातिवैशविन्यासेनपुण्यं व्यज्यते।

(ड) कामीत। उद्वाहमङ्गलार्थं वैवाहिकमङ्गलाचरणार्थं। तदाचरणन्तु देशभेदेन भिन्नं प्रायेण स्त्रीजनविषयं तत्तद्देशीयैः स्वयमेवानुसन्धेयम्। विहारः बौद्धाश्रमः, क्षुद्रो विहार इति विहारिका तस्याः। उद्यानवाटं उपवनप्रदेशः। सुविहितसायोजितं तत्रैव उद्यानवाट एव। द्रव्यजातं मङ्गलादद्रव्यसमूहः, अवलोकितया तदाख्यया मम शिष्यया। भूयश्च पुनश्च।

गाढ़ोत्कण्ठे ति। गाढ़ा सातिशया उत्कण्ठा प्रियविच्छेदनौत्सुक्यं यासां ता गाढ़ा

(१) यतः प्रियवयस्यमीदृशं इति पाठोऽपि।

(२) कामयिष्यति इति वा पाठः।

(३) अस्ति तत्र दीर्घिकायाः, इति पाठान्तरम्।

(४)...गण्डावपाण्डुच्छदैरिति पाठभेदः।

(५) पिनद्धफलिन...इत्यपि पाठः।

कक्कोलीफलजग्धि (१)-मुग्ध विकिर-व्याहारिण स्तद्भुवो
भागाः प्रेङ्खितमातुलुङ्गवृतयः प्रीयो विधास्यन्ति वाम् ॥ १९

उत्कण्ठाः, कठोराः प्रौढाः, याः केरलवध्वः केरलदेशीयाः स्त्रियः तासां गण्डवत् कपोलवत् अच्छपाण्डवः निर्मलपाण्डुवर्णाः छदाः पत्राणि येषां तैः, ताम्बूलीपटलैः ताम्बूललतासमूहैः, पिनद्धाः परिवेष्टिताः, फलिताः फलवन्तः, अतएव श्यानम्राः फलभारावनताः पूगद्रुमा गुवाकवृक्षा येषु ते । कक्कोलीफलानां कोलकफलानां (कांकला इति प्रसिद्धानां) जग्ध्या भक्षणेन मुग्धा मनोहरा विकिराणां पक्षिणां व्याहारा रवाः सन्त्येषामिति ते तथोक्ताः, तथा प्रेङ्खिता वायुना सञ्चालिता मातुलुङ्गानां कोलङ्गवृक्षाणां वृतिर्वेष्टनं येषु ते, तथाभूताः तद्भुवो भागाः अस्मद्विहारिकादृश्यादवस्थितोद्यानभूमेः प्रदेशाः, वां युवयोः मालतीमाधवयोः प्रियः प्रीतिं विधास्यन्ति करिष्यन्ति ;

अत्र प्रथमचरणे समासगतोपमाऽलङ्कारः, तथा एककाकारणामसकृत् साम्यादवृत्त्यनुप्रासः, गण्डपाण्डुति व्यञ्जनसङ्घस्यानेकधा सकृत्साम्यात् छेकानुप्रासश्च, इत्येतेषामेकाश्रयानुप्रवेशरूपः सङ्करः । सम्भोगसाधनाऽत्रत्यसिद्धताम्बूलपूगलाभः, विहङ्गकोलाहलेन स्वकीयालापस्य परैरश्रवणं, मातुलुङ्गवृतिसत्त्वादन्येनात्मनोरदर्शनञ्च व्यज्यत इति वस्तुना वस्तुध्वनिः ।

पाण्डुत्वातिशयद्योतनार्थानि गाढोत्कण्ठ-कठोर-केरलपदानि । ननु "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः" इत्यभिधानात् कर्मधारयपदस्य च बहुव्रीहौ तत्समासपरत्वात् कथं '...व्याहारिण' इत्यत्र मत्वर्थीय इन्प्रत्ययः, सत्य, यत्र निन्दाप्रशंसातिशयाद्यर्थो विवक्ष्यते तत्र मत्वर्थीयप्रत्ययो भवत्येव, बहुव्रीहिणा तत्तदर्थानां प्रतिपादयितुमशक्यत्वात मत्वर्थीयप्रत्ययमन्तरेण तादृशार्थप्रत्यायनोपायाभावात्, ईदृगाशय-

(१) कङ्कोलीफलजग्धि, कक्कोलीफलजग्ध, इति पाठभेदौ

गत्वा च (१) तत्रैव मदयन्तिकामकरन्दयोर्यावदागमनं (२) स्थातव्यम्। (ढ)

माध। सहर्षम्। कल्याणान्तरावर्तमा हि (३) कल्याणसम्प-दुपरिष्टाद्भवतु (४)। (ण)

कल। दिट्ठिआ इदं वि पिअं (५) णो हविस्सदि ?। (त)

(त) दिष्ट्या इदमपि प्रियं नो भविष्यति ?।

---

ज्ञापनार्थैव 'बहुव्रीहिरप्यर्थप्रतिपत्तिकर' इत्यभिधानाच्च। अत त्वतिशयार्थे इनप्रत्यय इति ध्येयम।

शार्दूलविक्रीडितं वृत्तम् ॥ १९ ॥

(ढ) गत्वेति। तथा च तत्र युवयोर्मदयन्तिकामकरन्दयोश्च युगपदेव विवाहो निष्पादयितव्य इत्यभिप्रायः।

(ण) माधेति। कल्याणसम्पत् मालतीप्राप्तिरूपा ममैषा मङ्गलसम्पत्तिः, उपरिष्टात् परस्मिन् काले, कल्याणान्तरं मकरन्देन मदयन्तिकालाभरूपमपरं मङ्गलम् आवर्तं सोऽन्त-~~कुर्वो मम्म~~ मा, हि निश्चितं भवतु।

(त) कलेति। इदमपि मकरन्देन मदयन्तिकालाभरूपमपि नोऽस्माकं प्रियं प्रीतिकरं कार्यं भविष्यति किमिति काकुः।

---

(१) अतः इत्यपि पाठः।

(२) मकरन्दमदयन्तिकागमनं यावत्, इति क्वचित् पाठः।

(३) कुत्रचित् हिशब्दो नास्ति।

(४) भवति इति पाठान्तरम्।

(५) पिअं इति क्वचिन्नास्ति।

काम। कथं सन्देहो भवतः (१)। (थ)

लव। सुदं पिअसहीए ?। (द)

काम। वत्स ! मकरन्द ! भद्रे (२) लवङ्गिके ! इतः (३) प्रतिष्ठामहे। (ध)

माल। सहि ! तुए वि गन्तव्वं ?। (न)

(द) श्रुतं प्रियसख्या ?

(न) सखि ! त्वयाऽपि गन्तव्यम् ?।

(थ) कामेति। मत्कौशलादिदमप्यवश्यमेव भविष्यतीति भावः।

(द) लवेति। कामन्दक्या गमनादेशे कृतेऽपि तथैवावस्थितिमवलोक्य त्वरयितुमाह श्रुतमिति। अत्रापि काकुः, श्रुतं ? भगवत्या स्वकीयविहारिकापश्चादवस्थितोद्यानगमनाय मदयन्तिकामकरन्दागमनप्रतीक्षणाय च यदुक्तं तच्छ्रुतं किमित्यर्थः। तदेवानुष्ठीयतामिति भावः।

(ध) कामेति। भद्रे ! साधुस्वभावे !। प्रतिष्ठामहे गच्छामः अन्यथा बहुकालावस्थाने यद्यन्यो जानीयादिति भावः।

(न) मालेति। गन्तव्यं ? मामेकाकिनीमपहाय गन्तव्यं किमित्यर्थः। नैतदुचितमिति भावः।

(१) माध। कथं सन्देह एवात्रभवत इति पुस्तकान्तरे पाठः।

(२) वत्से इति पाठोऽपि।

(३) इत इत इति द्विरुक्तिः क्वचित्।

लव । विहस्य । सम्पदं क्खु अह्मे एत्थ ओसरह्म (१) । (प)

इति निष्क्रान्ताः कामन्दकी-लवङ्गिका-मकरन्दाः ।

माध । अयमहमिदानीं—

आमूल-कण्टकित-कोमल-बाहुनाल-

मार्द्राङ्गुलीदलमनङ्गनिदाघतप्तः ।

(प) साम्प्रतं खलु वयमवापसरामः ।

(प) लवेति । भीषणसङ्कटजीवनं रक्षितवतः समीपेऽयं काकिनीत्यभिप्रायप्रकाशाद्विहसितं कृत्वा । अवास्मिन्नेव समये, अपसराम इतो गच्छामः । अवाधेन युवयोरभिप्रेतसम्पादनार्थमिति भावः ।

आमूलेति । अनङ्गो मदनो निदाघो ग्रीष्म इव तेन तप्तोऽयमहं करेण पाणिना युष्मया च, आमूलं अंसदेशात् अग्रदेशावावधि, कण्टकितः कामावेशात् रोमाञ्चितः स्वभावात् सञ्जातकण्टकश्च, बाहुर्भुजो नालं नालदण्ड इव यस्य तं, तच्च, आर्द्राः स्वेदजलेन स्तिमिताः तरङ्गजलेन स्तिमितानि च अङ्गुल्यो दलानि पर्णानीव यस्य तं, तच्च, कान्तं मनोरमं, अस्या मालत्याः करं पाणिं, सरस्याः पद्माकरस्य आरक्तपङ्कजं ग्रीष्मलोहितपद्मं द्विरदो हस्तीव आकलयामि गृह्णामि । सानन्दोच्छासोक्तिरियम् ।

अवारक्तपङ्कजमिवेत्युपमानुसारेण सर्वत्रोपमितसमासस्यैवौचित्यादुपमाऽलङ्कार एव नतु रूपकं तत्साधकाभावादिति ध्येयम् ।

(१) तुवरामो इति पाठभेदः ।

अस्याः करेण करमाकलयामि कान्त-
मारक्तपङ्कजमिव द्विरदः सरस्याः ॥ २०॥

इति निष्क्रान्ताः सर्वे । (फ)

# मालत्युपहारोनाम षष्ठोऽङ्कः (१) ॥ (ब)

"रोमाञ्चे चुट्‌शली च द्रुमाङ्गे कण्टकोऽस्त्रिया"मिति त्रिकाण्डशेषः ।

वसन्ततिलका वृत्तम् ॥ २० ॥

( फ ) इतीति सर्वे मालती-माधव-कलहंसाः ।

( ब ) मालेति । पाणिग्रहणानिष्पत्तेः साङ्गविवाहनिष्पत्त्यभावात् विवाह इति नामासम्भवेन निष्पन्नयोरपि च दानप्रतिग्रहयोर्दानस्यैव प्राधान्यात् मालत्युपहारो नामेति बोध्यम् ।

इति श्रीहरिदास-सिद्धान्तवागीशविरचितायां मालतीमाधवटीकायां
भावमनोहरायां षष्ठाङ्कविवरणं समाप्तम् ॥ ६ ॥

(१) चौरिकाविवाहो नाम इति क्वचित् पाठः, क्वचित्तु 'षष्ठोऽङ्कः' इतिमात्रः पाठः ।

# सप्तमोऽङ्कः ।



ततः प्रविशति बुद्धरक्षिता । (क)

बुद्ध । अम्महे ! सुसिलिट्ठ-मालदी-णेवत्थ-लच्छी-विप्पलद्ध-णन्दण-किद-करग्गहो (१) अमच्चभूरिवसुमन्दिरे भअवदी-वअण-संविहाणेहिं (२) खेमेण गोवाइदो मअरन्दो । अज्ज अह्मे वि (३) णन्दणावासं उवगदा । तदो (४) भअवदी णन्दणं आपुच्छिअ णिआवसहं गदा (५) । अअं अ णववह्

---

(ख) अहो ! सुश्लिष्टमालतीनेपथ्यलक्ष्मी-विप्रलब्ध नन्दन-कृत-करग्रहोऽमात्य-भूरिवसु-मन्दिरे भगवतीवचन-संविधानैः क्षेमेण गोपायितो मकरन्दः । अद्य वयमपि नन्दनावासमुपगता । ततो भगवती नन्दनमापृच्छ्य निजावसथं गता । अयञ्च नव-

---

(क) तत इति । "नियुक्तैव तव मया प्रियसखी बुद्धरक्षिता" इत्यनेन पूर्व-मेवास्याः प्रवेशः सूचितः ।

(ख) बुद्धेति । अम्महे इति हर्षविस्मयार्थकमव्ययम् । मकरन्देन मालती-वेशग्रहणपूर्वक-विवाह-सम्पादनात् हर्षो विषादश्च । संश्लिष्टं मकरन्दस्य मालतीसमान-

(१) नन्दनकरग्गहो इति पाठान्तरम् ।

(२) भअवदीए संविहाणेण इत्यपि पाठः ।

(३) वि. इति क्वचिन्नास्ति । (४) भदो इति पाठभेदः ।

(५) गदा आवराहं इति पाठोऽपि ।

घरप्पवेस-विरइदाकालकोमुदीमहूसव-प्पमत्त (१)-पज्जाउला सेस-परिअणो पदोसो अणुवत्तइस्सदि अज्ज णो ववसिदं। सम्पदं अ (२) तुवरन्तकामो कामिदुं सपादपडणं (३) अब्भत्थिअ पुणो वञ्चाणीदिअ अहिद्दवन्तो मअरन्देण णिट्ठुरं पडिहदो जामादा! तदो सो क्खु अधिअ वेलक्ख-खलन्त अक्खरो सरोस-णिब्भर-दुक्खिदो मदप्पप्फुरन्त वअणो "ण मे

---

वधूगृहप्रवेश-विरचिताकालकौमुदीमहोत्सव-प्रमत्त-पर्य्याकुलाशेष परिजनः प्रदोषोऽनुवर्त्तिष्यति अद्य नो व्यवसितम्। साम्प्रतञ्च त्वरमाणकामः कामयितुं सपादपतनमभ्यर्थ्य पुनर्वञ्चितकारिकाभिद्रवन् मकरन्देन निष्ठुरं प्रतिहतो जामाता। ततः स खल्वधिकवैलक्ष्यस्खलदुत्तरः सरोषनिर्भरदुःखितो मदप्रस्फुरद्वदनो "न मे वर्णाकृतिसत्त्वान् निपुणभावेन निकृत्तमस्तुल्याविहिताङ्गरागत्वाच्च समस्मिन्गिलितं यत मालत्या नेपथ्यं वेशः, तस्य लक्ष्म्या शोभया विप्रलब्धेन वञ्चितेन नन्दनेन कृतो मालतीज्ञानेन सम्पादितः करग्रहः पाणिग्रहणं यस्य सः तथोक्तो मकरन्दः, भगवत्याः कामन्दक्या वचनैः 'नगरदेवतामाराध्य समागतेयं मालती' इत्यादिरूपैर्वाक्यैः, विधानैः विवाहदिवसीय-कन्यासमुचित तत्तदाचारसम्पादनैश्च तेनैव कुशलेन निरुपद्रवेण गोपायितो लोकाचारात् परिरक्षितः। आपृच्छ्य आभाष्य स्वाश्रमगमनार्थं सम्भाषणं कृत्वेत्यर्थः। निजावसथं स्वकीयाश्रमम्। कौमुदी कार्त्तिकी पूर्णिमा तस्यामनुष्ठेयो यो महोत्सवः स कौमुदीमहोत्सवः। नववध्वा गृहप्रवेशात् विरचितेन सम्पादितेन अकाले तत्कालव्यतिरिक्ते ग्रीष्मे, कौमुदीमहोत्सवेन प्रमत्ताः व्यापारान्तरेऽनवधानाः पर्य्याकुला व्यतिव्यस्ता

---

(१)...प्पउत्ति...इति क्वचित् पाठः।

(२) क्वचित् 'अ' इति नास्ति।

(३)...कामिणिं कामिदुं बहुसो सपादवन्दणं...इति पाठान्तरम्।

**सम्पदं तुए कोमारबन्धईए (१) पओअणं"त्ति ससवहं पइस्सं काउण वासभवणादो णिग्गदो त्ति (२)। एदिणा पसङ्गेण**

साम्प्रतं त्वया कौमारबन्धक्या प्रयोजनम्" इति सशपथं प्रतिज्ञां कृत्वा वासभवनान्निर्गत इति। एतेन प्रसङ्गेन मदयन्तिकामानीय मकरन्देन सह संयोजयिष्ये।

अशेषा सकलाः परिजना यस्मिन् स तादृशः प्रदोषो रजनीमुखम्. अद्य नोऽस्माकं व्यवसितम् अध्यवसितं मदयन्तिकामकरन्दयोः कुशलेन निष्क्रमणादिकम् अनुकूलयिष्यति समीहितसिद्धिं प्रति साधकीकरिष्यति। कौमुदीमहोत्सवेन प्रमत्ततया पर्य्याकुलतया च परिजनानां तन्निष्क्रमणादौ सम्यगवधानदानाऽसम्भवादिति भावः।

त्वरमाणकामः नववधूसम्भोगौत्सुक्यजनितमदनावेगः। सपादपतनं यथा तथा अभ्यर्थ्य सुरतं याचित्वा, अननुमोदिताभ्यर्थनः सन्नित्यर्थः, बलात्कारेण बलेन अभिद्रवन् आक्रामन् निष्ठुरं यथा तथा जामाता वरो नन्दनः प्रतिहतः पादेन ताडितः। स नन्दनः। अधिकेन सातिशयेन, वैलक्ष्येण अप्रतिभतया नववध्वा एव सहसाद्भुतकार्य्य-दर्शनात् किङ्कर्त्तव्यताविमूढतयेत्यर्थः स्खलदक्षरो विकलवचनः, सरोषयासौ निर्व्वेददुःखितः सञ्जातभ्रंशदुःखश्चेति सः, मदेन क्रोधमत्ततया प्रस्फुरन्तो भृशस्पन्दमाने नयने यस्य तादृशः सन्। कौमारे कन्यावस्थायामेव बन्धकी असती तया। असतीं विना ईदृशस्वभावाऽसम्भवादिति भावः। शपथोऽत्र गालिः तत्सहितः यथा तथा। एतेन प्रसङ्गेन मालत्याः प्रतिकूलतानिरसनप्रस्तावेन।

"पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी।" इत्यमरः। "शपथः (पुं) गालिः।" इति शब्दकल्पद्रुमः।

---

(१) सोअ वेलक्ख-रोसावेस-खलन्त-अक्खरो ओदइद णअण प्पप्फुरन्त-अअणो... कोमारबड्ढईए इति पाठभेदः।

(२) 'त्ति' इति क्वचिन्नास्ति।

मदअन्तिअं आणोअ मअरन्देण सह संजोअइस्सं। (ख)
इति निष्क्रान्ता।

## प्रवेशकः। (ग)

ततः प्रविशति शय्यागतो मालतीवेशो (१) मकरन्दो लवङ्गिका च। (घ)

मक। लवङ्गिके! अपि नाम बुद्धरक्षिताभिक्रान्ता भगवतो-नीतिर्विजेष्यते (२)। (ङ)

लव। को सन्देहो एत्थ महाणुभाअस्स (३)। किं बहुणा जह एसो मञ्जीरसद्दो सुणीअदि, (४) तहा जाणामि तेण व्वव-

---

(च) क. सन्देहोऽत्र महानुभावस्य। किं बहुना, यथैष मञ्जीरशब्दः श्रूयते,

(ग) प्रेति। निर्गत इत्यनेन वृत्तकथांशस्य, संयोजयिष्य इत्यनेन च वर्णिष्यमाणकथांशस्य निदर्शनं प्रत्येतव्यम्।

(घ) तत इति। शय्यागतो वासभवने सम्भोगार्थरचित-शय्यास्थितः।

(ङ) मकेति। अपिः प्रश्ने। बुद्धरक्षितायां संक्रान्ता सञ्चरिता भगवत्येव न्यस्ता, भगवत्या नीतिः कौशलं अपि विजेष्यते उत्कर्षेण वर्त्तिष्यते किं, मम मदयन्तिकालाभरूपं कार्य्यं साधयितुं शक्ष्यति किमित्यर्थः।

(च) लवेति। मञ्जीरशब्दो नपुरनिनादः। तेन व्यपदेशेन मालत्याः प्रबोधन-

---

(१) मालतीवेश इति पाठः क्वचिन्नास्ति।

(२) विपर्य्येष्यति इति पाठान्तरम्।

(३) को सन्देहो महाभाअस्स इति भिन्नः पाठः।

(४) क्वचित् 'सुनीयदि' इति पाठो नास्ति।

देसेण आणीदा बुद्धरक्खिदाए मदअन्तिआ त्ति। ता उत्तरीआवबारिदा पसुत्तलक्खणो चिट्ठ। (च)

मकरन्दः। तथा करोति।

ततः प्रविशति मदयन्तिका बुद्धरक्षिता च।

मद। सहि! सच्चं ज्जेव परिकाविदो मे भादा मालदीए ?(छ)

बुद्ध। अधइं। (ज)

मद। अहो अच्चाहिदं। ता एहि वामसीलं मालदिं णिब्भच्छेम्ह। (झ)

इति परिक्रामतः।

तथा जानामि तेन व्यपदेशेन आनीता बुद्धरक्षितया मदयन्तिकेति। तदुत्तरीयापवारितः प्रसुप्तलक्षणस्तिष्ठ।

(छ) सखि! सत्यमेव परिकोपितो मे भाता मालत्या ?।

(ज) अथकिम्।

(झ) अहो अत्याहितम्। तदेहि वामशीलां मालतीं निर्भर्त्सयावः।

छलेन तत्तस्मात् उत्तरीयेण प्रावारकेण अपवारित आवृतदेहः, प्रसुप्तलक्षणो निद्रितस्वरूपः।

(छ) मदेति। अत्र स्वरवैकृतेन प्रश्नो व्यज्यते।

(झ) मदेति। अत्याहितं महाभीतिः। उपस्थितमिति शेषः। मालत्या ईदृशदुराचरणेनातीवकोपितो मे भ्राता किमिदानीं व्यवस्येत् तदनिश्चयादिति भावः।

बुद्ध । इदं वासभवणदुवारं (१)। (ज)

इति (२) प्रविशतः ।

मद । सहि ! लवङ्गिए ! जाणीअदि पसुत्ता दे पिअसही णवेत्ति ? (३)। (ट)

लव । सहि ! (४) मा णं पड़िबोधेहि । जदो (५) एसा

(ज) इदं वासभवनद्वारम् ।

(ट) सखि ! लवङ्गिके ! ज्ञायते प्रसुप्ता ते प्रियसखी नवेति ? ।

(ठ) सखि ! मा एनां प्रतिबोधय । यत एषा चिरं दुर्मनायमाना इदानीमेव ईषत्प्रसुप्तेति । अतः शनैरिहैव शयनार्द्धे उपविश ।

वालशीलां भर्त्तारं प्रति प्रतिकूलस्वभावां, निर्भत् मयावः तस्मिन्नतीवान्याय्याचरणात् तिरस्कुर्वः । अनुकूलयितुमिति भावः ।

(ट) मदेति । प्रियसखी मालती, प्रसुप्ता निद्रिता । काकुवशात् ज्ञायते किमित्यर्थः ।

(ठ) लवेति । मा प्रतिबोधय उच्चैर्वचारणेन न जागरय । दुर्मनायमाना दुःखितमनस्का । ईषत्प्रसुप्ता स्तोकं निद्रिता, इति मन्ये ।

---

(१) क्वचित् दुवारमिति नास्ति । (२) उभे इत्यपि पाठः ।

(३) पिअसही त्ति इतिमात्र; पाठः क्वचित् । (४) एहि इति क्वचित् पाठः ।

(५) जदो इति क्वचिन्नास्ति ।

चिरं दुम्मणाअन्दो दाणिं ज्जेव ईस मणो पसुत्ते त्ति। अदो सणिअं इध ज्जेव सअणइम्मि उवविस (१)। (ठ)

मद। तथा कृत्वा। दुम्मणाअदि कधं वामसीला ? (२) (ड)

लव। कधं णाम णववहू-विस्सम्भणोवाअजाणुअं लड़हं विसड्ढं महुरभासिणं ससिणिद्धं अरोसणं अ दे भादरं भत्तारं आसादिअ ण दुम्मणाइस्सदि मे पिअसही ? (३)। (ढ)

---

(ड) दुर्म्मनायते कथमियं वामशीला ?

(ढ) कथं नाम नववधू-विस्रम्भणोपायाभिज्ञं लडहं विदग्धं मधुरभाषिणं सस्नेहं अरोषणञ्च ते भ्रातरं भर्त्तारमासाद्य न दुर्म्मनायिष्यते मे प्रियसखी ?

---

(ढ) लवेति। मे मम प्रियसखी मालती नववध्वा विस्रम्भणे आत्मानं प्रति विश्वासोत्पादने ये उपायाः चित्तवृत्त्यनुसरणादयः तदभिज्ञम्। "उपकृतं बहु तत्र किमुच्यते" इत्यादिवद्विपरीतलक्षणया सर्व्वथैव तदनभिज्ञमिति सोल्लुण्ठनोक्तिः। अन्यथाप्येवम्। ब्रह्मचर्य्यावलम्बनोपयोगिविवाहविरावमध्य एव नायिकाचित्तवृत्ति-प्रतिकूलभावेन रमणाय प्रसह्यप्रवर्त्तनादिति भावः। लड़हं सुन्दरं। अतावकुरूप-मित्याशयः। विदग्धं सुरतकलानिपुणं। सर्व्वथैव गोमूर्खमित्यभिप्रायः। मधुर-भाषिणं। एकान्तकर्कशभाषिणमिति भावः। सस्नेहं। स्नेहलेशेनापि शून्यं किसलयकोमलां प्रति सहसैव बलप्रयोगोपक्रमादित्याशयः। अरोषणं अकोपन-

---

(१)...ईस मणं उज्झिअ पसुत्तेत्ति। तदो सणिअं इध ज्जेव सअणप्पन्ते .. इति पाठान्तरम्।

(२) सहि ! दुम्मणाअदि इअं वामसीला इति पाठोऽपि।

(३)...विदड्ढमहुरभासिणं...समासादिअ...इति पाठोऽपि।

मद। पेक्ख बुद्धरक्खिदे ! विप्पदीवं उवलद्धह्म (१)। (ण)

बुद्ध। विप्पदीअं ण विप्पदीअं वा । (त)

मद। कधं विअ । (थ)

(ण) प्रेक्षस्व बुद्धरक्षिते ! विप्रतीपमुपालब्धाः स्मः ।

(त) विप्रतीपं न विप्रतीपं वा ।

(थ) कथमिव ।

---

स्वभावं । रोषेण नितान्तखरतरस्वभावमिति भावः । आसाद्य प्राप्य, कथं नाम न दुर्म्मनायिष्यते दुःखितचित्ता भविष्यति, अपितु भविष्यत्येवेत्यर्थः । मम प्रियसख्या दुर्म्मनस्कतां प्रति तव भ्रातुर्नववधूविस्रम्भणोपायानभिज्ञत्वादिकमेव हेतुरिति भावः ।

अत्र उत्प्रासनं नाम नाट्यालङ्कारः "उत्प्रासनन्तूपहासो योऽसाधौ साधुमानिनि ।" इति लक्षणात्

"लड़हः ( वि ) सुन्दरः ।" इति शब्दकल्पद्रुमः ।

( ण) मदेति । विप्रतीपं विपरीतं, उपालब्धास्तिरस्कृताः । मालत्यैवान्याय्याचरणाद्स्माभिरेव तस्यामुपालम्भनीयायां प्रत्युत ततपक्षगतया लवङ्गिकया वयमेवोपालब्धा इत्यर्थः । इदमप्यन्याय्यमिति भावः ।

(त) बुद्धेति । विप्रतीपं न विप्रतीपं वा इदं लवङ्गिकाकृतमुपालम्भनं विपरीतमविपरीतं वा वक्तुं शक्यत इत्यर्थः । अंशत उभयोरपि दोषसत्त्वादिति भावः

(१) बुद्धरक्खिदे ! पेक्ख, विप्पदीअं आह्म किं उवालम्भीआमो इति पाठभेदः ।

५६। जं दाव चलणपड़िदो वि (१) भत्ता ण बहुमाणिदो, एत्थ लज्जादोसेण एसो जणो उवालम्भणिज्जो (२)। जं वि पिअसहि! णवबहू-विरुद्ध-साहसावक्कम (३)-क्खलण-वेलक्ख-विच्छड्डिद-महाणुभावत्तणस्स भादुणो दे वाआगदं किं वि अपरिट्ठाणं, (४) तेण जाणीअदि किआवराहा उवालम्भणिज्जा अह्मे त्ति (५)। संस्कृतमाश्रित्य (६)। किञ्च

---

(८) यत् तावच्चरणपतितोऽपि भर्त्ता न बहु मानितः, अत्र लज्जादोषेण एष जन उपालम्भनीयः। यदपि प्रियसखि! नववधू-विरुद्ध-साहसोपक्रम-स्खलन-वैलक्ष्य-विच्छर्दित-महानुभावत्वस्य भ्रातुस्ते वाचागतं किमपि अपरिष्ठानं, तेन ज्ञायते कृतापराधा उपालम्भनीया वयमिति।

---

(८) जमिति। यत्, चरणपतितोऽपि सम्भोगसम्मतिप्रदानाय पादपतनेन कृतानुनयोऽपि भर्त्ता नन्दनः न बहुमानितः सम्मतिप्रदानेन मालत्या नादृतः। अत्र समादरविषये, एष जनो मालती, उपालम्भनीयो दोषसत्त्वान्निन्दनीयः। अस्मिन्नंशे मालत्यामेव निन्दनीयायां प्रत्युत तत्पक्षगतलवङ्गिकया कृतं नन्दननिन्दनं विप्रतीपमेवेति भावः। लज्जादोषेणेत्यनेन लज्जैव बहुमानाकरणकारणं न पुनरन्यत्-किञ्चिदिति ध्वन्यते। नववध्वां सान्त्ववाद-सुमधुरव्यवहारादिभिरायत्तीकर्त्तव्यायां नवोढ़ायां मालत्यां विरुद्धः प्रतिकूलः, यः साहसोपक्रमो बलप्रयोगपूर्व्वकरमणोद्यमः, तेन यत् स्खलनं मालतीकृतप्रत्याख्यानरूपो व्यतिक्रमः, तस्मादयद्वैलक्ष्यं दोषवशादप्रतिभत्वं तेन विच्छर्दितं विवर्ज्जितं महानुभावत्वं धैर्य्यं येन तस्य तथोक्तस्य, ते तव भ्रातुर्नन्दनस्य

(१) 'वि' इति क्वचिन्नास्ति। (२) ण उवालम्भणिज्जो इति क्वचित् पाठः।

(३) अहिणव-बहू विरुद्ध रहसोवक्कम इति पाठान्तरम्।

(४) अप्पदिट्ठाणं इति पाठभेदः। (५) तेण तुह्मे त्ति इतिमात्रः पाठः क्वचित्

(६) क्वचिदयं पाठो नास्ति।

"कुसुमसधर्म्माणो हि योषितः सुकुमारोपक्रमाः। तास्त्वनधिगतविश्वासैः प्रसभमुपक्रम्यमाणाः सद्यः (१) सम्प्रयोगविद्वेषिण्यो भवन्ति।"

---

वाच्यागतं वाक्यगतं वचसा सम्पादितमिति तात्पर्य्यं, किमपि श्रोतुमप्ययोग्यं, परिष्ठानं स्थितिर्मर्य्यादेति यावत् अपरिष्ठानं महाकुलीनपन्नाया मालत्या मर्य्यादालङ्घनमित्यर्थः। तेन कृतापराधा अतएव वयं नन्दनपक्षगता उपालम्भनीया इति ज्ञायते। सुतरामवांशे सर्वाङ्गिकाकृतं नन्दननिन्दनमविप्रतीपमेवेति भावः। अत्रापि महाजनवाक्यं प्रमाणत्वेनोपन्यस्यति किञ्चेति।

कुसुमेति। कुसुमैः समानो धर्म्मो मृदुत्वादिगुणो यासां ताः कुसुमसधर्म्माणः, योषितो नवोढ़ादिसामान्याः स्त्रियः, सुकुमारः सुमधुरव्यवहारादिना कोमलः कोमलभावेन कर्त्तव्य इत्यर्थः उपक्रमो रमणारम्भो यासां तास्तथाविधा भवन्ति। तु किन्तु अनधिगतो नवविवाहादौ सम्यगपरिचयाभावात् नवोढ़ादिभिरप्राप्तो विश्वासो येषु तादृशैः पुरुषैः प्रसभं बलेन उपक्रम्यमाणा रमणायानिच्छयाक्रियमाणाः, ता नवोढ़ादिस्त्रियः, सद्यस्तत्क्षणात् उपक्रमसमय एवेत्यर्थः सम्प्रयोगस्य रमणस्य विद्वेषिण्यो भवन्ति विद्वेषान्निवर्त्तितुं चेष्टन्ते।

तथा च यथा कुसुमानि मृदुमन्दस्पर्शेन सौरभमुद्गिरन्ति, सहामर्द्दनेन तु विरक्तिकरतिक्तगन्धं प्रकटयन्ति; तथा ललना अपि

"कविता वनिता चैव स्वायाता रसदायिनी।
बलादानीयमाना चेत् सरसा विरसायते॥"

इति न्यायात् सुमधुरव्यवहारेणानुमोदने सत्यतीवमधुराः, अन्ते प्रसभमारम्भे तु प्रत्युतोद्वेगकारिण्यो भवन्तीति सरलार्थः।

(१) क्वचित् 'सद्यः' इत्यपि न दृश्यते।

एवं किल कामसुत्तआरा आमणन्ति (१) । (ट)

लव। मा(त्रम् (२)। घरे घरे पुरिसा कुलकसआओ उव्वहन्ति, ण अ को वि लज्जापराहोणं अणवरद्धं मुद्ध-लड़ह-सहावं (३) कुलकुमारीअणं पहवामि त्ति आआणलेण पज्जालेदि। एदे

एवं किल कामसूत्रकारा आमनन्ति ।

(ध) गृहे गृहे पुरुषाः कुलकन्यका उद्वहन्ति, न च कोऽपि लज्जापराधीनं अनपराद्धं मुग्धलड़हस्वभावं कुलकुमारीजनं 'प्रभवामी'ति वाचानलेन प्रज्वलयति ।

---

कामसूत्रकारा वात्स्यायनादयः, एवं उक्तरूपं आमनन्ति ब्रुवन्ति । किलेत्यैतिह्ये । सुतरां नन्दनस्यायं प्रसभमुपक्रमो दोषायैव जात इति भावः ।

अत्रार्थविशेषणं नाम नाट्यालङ्कारः । यथा साहित्यदर्पणे—

"उक्तस्यार्थस्य यत् स्यादुत्कीर्तनमनेकधा ।
उपालम्भस्वरूपेण तत् स्यादर्थविशेषणम् ॥"

वाचेति— "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
टापञ्चापि हलन्तानां यथा वाचा निशा गिरा ॥"

इत्युक्तेर्वाक्शब्दात् टाप् । एवमुत्तरत्रापि । वात्स्यायनसूत्रानुकरणार्थं संस्कृतमाश्रित्येत्युक्तम् ।

(ध) लवेति । परिणयरजन्यामेव प्राणसख्या मालत्या ईदृशदुर्दशादर्शनेन शोकोद्रेकादस्मिन् अमुना सहेति सासमाहित्यर्थः । कोऽपि पुरुषः, लज्जायाः पर एकान्तोऽधीनस्तं, मुग्धः सरलः लड़हः सुन्दरश्च स्वभावो यस्य तं प्रभवामि समर्थोऽस्मि, पतित्वादस्य विषये यत्किमपि कर्तुं शक्नोमीति मत्वेत्यर्थः वाचानलेन अवाच्यवचनरूपेण वह्निना न प्रज्वलयति न सन्तापयति । किन्त्वेव नन्दनेन तथाकृतत्वादतीवदुःखकारणमेतदिति

---

(१) मन्तीति इति भिन्न पाठः । (२) क्वचित् 'साम्र' मिति पाठो नास्ति ।

(३) ण क्खु को वि लज्जापराहीणं अणवरद्धं मुद्धसहावं इत्यपि क्वचित् पाठः ।

**कधु दे हिअअ-सल्लणिक्खेवा आमरणं सुमरिज्जन्त-दूसहा पदि-घरणिवासवेरग्गकारिणो (१) महापरिहवा; जाणं किदे इत्थिआणं जम्मलाहं (२) जुउच्छन्ति बान्धवा। (ध)**

मद। **बुद्धरक्खिदे! अदिदुम्मणाइदा (३) पिअसही लवङ्गिआ। अदिमहन्तो (४) को वि मे भादुणा बाआवराहो से (५) किदो। (न)**

एते खलु हृदयशल्यनिक्षेपा आमरणं स्मर्यमाणदुःसहाः पतिगृहनिवासवैराग्यकारिणो महापरिभवाः; येषां कृते स्त्रीणां जन्मलाभं जुगुप्सन्ते बान्धवाः।

(न) बुद्धरक्षिते! अतिदुर्मनायिता प्रियसखी लवङ्गिका। अतिमहान् कोऽपि मे भ्राता वाचापराधोऽस्याः कृतः।

भावः। हृदयशल्यनिक्षेपाः वक्षसि शङ्कुसमारोपसदृशाः। स्मर्यमाणाः सन्तोऽपि दुःसहाः, स्वयमनुभवे तु का कथेत्याशयः। पतिगृहनिवासे वैराग्यं अवश्यमेव तादृश-सम्भ्रात् वैतृष्ण्यं कर्त्तुं शीलं येषां ते, महापरिभवाः विशालतिरस्काराः। येषां महा-परिभवाणां कृते निमित्ते बान्धवाः तत्तत्स्त्रीणामेव पितादयः। जुगुप्सन्ते दुःसहतिर-स्कारसहनास्पदं कन्याजन्म धिगित्येवंरूपेण निन्दन्ति।

(न) मदेति। अस्या मालत्याः सम्बन्धे। कृतो भवेदिति शेषः। अन्यथा लवङ्गिकाया ईदृशी दुर्मनस्कता न स्यादिति भावः।

(१)...आमलणसंभरिज्जन्तदूसह-परघरणिवास-वेरग्गकारिणो इति पाठान्तरम्।

(२) इत्थिआजम्मलाहं इति पाठोऽपि।

(३) अदिक्खिदा, अदिदूमिआ इति पाठभेदौ।

(४) महन्तो इतिमात्रः पाठोऽपि।

(५) क्वचित् 'से' इति पाठो नास्ति।

बुद्ध। अधइं। सुदं अह्मेहिं जधा "मम ण तुए संपदं कोमारवन्धईए पओअणं"त्ति (१)। (प)

मद। कर्णौ पिधाय। अह्नो (२) अदिक्कमो, अहो पमादो। सहि लवङ्गिए! असमत्थह्मि दे मुहं वि संपदं दंसिदुं, (३) तहवि पहवामि त्ति किम्पि मन्तइस्सं। (फ)

लव। साहिणो दे अअं जणो। (ब)

---

(प) अथकिम्। श्रुतमस्माभिर्यथा "मम न त्वया साम्प्रतं कौमारबन्धक्या प्रयोजन" मिति।

(फ) अहो अतिक्रमः, अहो प्रमादः! सखि! लवङ्गिके। असमर्थास्मि ते मुखमपि साम्प्रतं दर्शयितुं, तथापि प्रभवामीति किमपि मन्त्रयिष्ये।

(ब) स्वाधीनस्तेऽयं जनः।

(प) बुद्धेति। अथकिं वाचापराधः कृत एवेत्यर्थः। कोऽसावित्याह श्रुत मित्यादि।

(फ) मदेति। निन्दायामहोशब्दद्वयम्। अतिक्रमो नन्दनेन मालत्या मर्य्यादा-लङ्घनं। प्रमादो नन्दनस्यानवधानता। मितान्तनिर्म्मलां मालतीं प्रतीदृशवाक्प्रयोगादि-त्युभयत्रापि भावः। प्रभवामि परमवात्सल्यात् त्वयि मे प्रभुत्वमस्तीत्यर्थः। इति हेतोः। मन्त्रयिष्ये वच्मि।

(ब) लवेति। अयं जनः अहमिति तात्पर्य्यं, ते तव स्वस्या आत्मनः अधीनः परमवात्सल्यादायत्तः सुतरां यथेष्टं वक्तुमर्हसीति भावः।

(१)...सुदं एव्व अह्मेहिं ण मे सम्पदं इमाए कोमारवड्‌टईए पओअणंति ससपहं पइस्सं काडण वासभवणादो णिग्गदो इति पाठान्तरम्।

(२) अम्महे इत्यपि पाठः। (३) दट्ठुं इति पाठोऽपि।

मद। चिट्ठदु दाव (१) मह भादुणो दुस्सीलदा अवरिट्ठाणं अ। तुह्मेहिं वि (२) ईदिसो वि एसो सम्पदं जहचित्तं अणुवट्टणीओ, जेण भत्ता एसो त्ति। अस्सं अ। तुह्मे इमस्स अणहिजादक्खराहिक्खेवोवालम्भदूसणस्स (३) जं मूलं तं ण जाणध। (भ)

(भ) तिष्ठतु तावन्मम भ्रातुर्दुःशीलता, अपरिष्ठानञ्च। युष्माभिरपीदृशोऽप्येष साम्प्रतं यथाचित्तमनुवर्त्तनीयः, येन भर्त्ता एष इति। अन्यच्च। यूयमस्य अनभिजाताक्षराधिक्षेपोपालम्भदूषणस्य यन्मूलं तन्न जानीथ।

(भ) मदेति। युष्माभिरपि मालती-तत्पक्षगताभिरपि, ईदृशोऽपि उक्तदुश्चरित्रा मर्य्यादालङ्घनकारी सन्नपि, एष नन्दनः, चित्तं चित्तवृत्तिः यथाचित्तं चित्तवृत्तिमनतिक्रम्य अनुवर्त्तनीयः "भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गम" इत्युक्तेरनुसरणीयः। भर्त्ता पतिः एष नन्दनः। "कोऽपि देवः कुलस्त्रीणां पतिरेव पतन्नपीति" स्मृतेरिति भावः। अनभिजाताक्षराणां 'मम न त्वया' इत्याद्यन्याय्यवाक्यस्येत्यर्थः अधिक्षेपेण प्रयोगेण उपालम्भस्तिरस्कार एव दूषणं तस्य, मूलं कारणम्।

अत्र येन भर्त्तैष इति हेतुप्रदर्शनात् हेतुर्नाम नाट्यलक्षणं यथा दर्पणे—

"हेतुर्वाक्यं समासोक्तमिष्टकृद्धेतुदर्शनात्।"

"न्याय्ये कुलीनयोरुभयोरभिजातपदं विदुः।" इति शाश्वतः।

---

(१) च्चिट्ठदु इति क्वचित् पाठः।

(२) क्वचित् 'वि' इति नास्ति।

(३) ...उवालम्भस्स इतिमात्रः पाठोऽपि।

लव। कधं अह्मे असन्तं जाणीमो (१)। (म)

मद। जं दाणिं तस्सिं महाणुहावे माहवे किम्पि किल मालदीए तारामित्तअं आसी, तस्सिं (२) सब्बलोअस्स अदिभूमिं गदो पवादो। तं क्खु एदं विअम्भदि। ता पिअसहि! जह

(म) कथं वयमसत् जानीमः।

(य) यदिदानीं तस्मिन् महानुभावे माधवे किमपि किल मालत्यास्तारामैत्रकमासीत्, तत्र सर्वलोकस्यातिभूमिं गतः प्रवादः। तत् खलु तदविजृम्भते। तत् प्रिय सखि! यथा एष भर्त्तुरपत्याभिनिवेशो निरवशेषं हृदयादुद्ध्रियते, तथा कुरुत।

(म) लवेति। असत् अविद्यमानं मूलमित्यर्थः। चिरमसद्भूतमाकाशकुसुमं को जानातीति भावः। एतेन तादृशोपालम्भकारणं किमपि मालतीगतं नासीत्, किन्तु नन्दनेन स्वभावादेवोपालब्धा मालतीति व्यज्यते।

(य) मदेति। यत्, तारयोः कनीनिकयोः मैत्रकं मिलनमात्रोत्पन्नः स्नेहः, मालतीमाधवयोः परस्परदृष्टिमिलनमात्रसञ्जातं प्रेमेत्यर्थः। तत्र तारामैत्रकविषये प्रवादः सर्व्वलोकस्य समीपे अतिभूमिमाधिक्यं गतः। तत् तारामैत्रकं इदं विजृम्भते प्रकाशते नन्दनं प्रति विरक्तिरूपं फलं प्रकटयतीत्यर्थः। भर्त्तुर्नन्दनस्य अपत्ये विपत्ते माधवे अभिनिवेशः चित्ताग्रहः माधवं प्रत्यनुराग इति निष्कर्षः निरवशेषं सम्पूर्णं यथा तथा मालत्या हृदयादुद्ध्रियते, तथा यूयं कुरुत। महादोषो भवेदिति ज्ञातं युष्माकं विदितं भवतु इदानीमपि माधवानुरागात्, नन्दनस्यापि तदवमानेन चिरदारुणविद्वेषादिति भावः। निष्कम्पा महति भर्त्तृविद्वेषभये सत्यपि तज्जन्यचित्तचाञ्चल्यहीना अतएव दारुणाः

(१) कधं बाआ मन्तिदंवि णाम ण जाणीमो इति पाठभेदः।

(२) ...बाआमेत्तं आसी, सो एसो...इति पाठभेदः।

एसा भत्तुणो अवक्खाहिणिवेसो णिरवसेसं हिअआदो उद्धरी-अदि, तह करेध। अस्सधा महादोसो त्ति जाणिदं भोदु। णिक्कम्पदारुणा कस्सआओ दूम्मावेन्ति हिअअं मणुस्साणं ईदिसादो दुरहिसङ्गादो त्ति। माणं भणिस्सध मदअन्तिआए कधिदं त्ति (१)। (य)

लव। अइ असावधाणे! (२) असंबद्धलोअप्पवादमो-हिदे! अवेहि। ण तुए सह जप्पिस्सं (३)। (र)

अन्यथा महादोष इति ज्ञातं भवतु। निष्कम्पदारुणाः कन्यका दावयन्ति हृदयं मनुष्याणां ईदृशाद् दुरभिषङ्गादिति। मा एनां भणिष्यथ मदयन्तिकया कथितमिति

(र) अयि असावधाने! असम्बद्धलोकप्रवादमोहिते! अपेहि न त्वया सह जल्पिष्यामि।

कन्यका ईदृशात् दुरभिषङ्गात् परपुरुषानुरागरूपाङ्गतोः मनुष्याणां भर्तृभूतपुरुषाणां हृदयं दावयन्ति सन्तापयन्ति। सुतरामिदानीमपि मालत्या माधवानुरागान्नन्दनस्य चित्तसन्तापः सम्भवत्येव, स एव च तदुपालम्भस्य मूलमिति भावः। इदं वृत्तं मदयन्तिकया कथितमिति एनां मालतीं मा भणिष्यथ। तथा सति मालती मय्यपि विद्वेषं कुर्य्यादिति भावः।

(र) लवेति। इमं वृत्तान्तं वक्तुं मां निवारयसि, अथ च स्वयमेव तत्

(१)...उवेक्खाहिणिवेसो णिरवसेसो...तह करेहि।...महान्तो पसादो।... णिक्कम्पदारुणासु कुलकण्णकासु...दूरमिति...त्ति जाणह। मा भण...इति पाठान्तरम्।

(२) क्वचिदेष पाठो नास्ति।

(३) मन्तइस्सं इति पाठभेदः।

मद॰। सहि! पसोद। अहवा ण तुह्मे फुड़ं (१) भणिदाओ चिट्ठध। किन्तु अह्मे सच्चं एव्व माहवेक्कमअजीविदं (२) मालदीं जाणीमो केण वा कठोर-केदअ-(३) गब्भ-विब्भमा-वअव-दोब्बल्ल-णिव्वट्टिद (४) सुन्दरत्तणविसेसं माहव-सहत्य णिम्मा।विदवउलावली-विरइद-कण्ठावलम्बमेत्त सन्धारिद-

(ल) सखि! प्रसीद। अथवा न यूयं स्फुटं भणितास्तिष्ठथ। किन्तु वयं सत्यमेव माधवैकमयजीवितां मालतीं जानीमः। केन वा कठोर-केतक गर्भ-विभ्रमावयव-दौर्ब्बल्य-निर्वर्त्तित-सुन्दरत्वविशेषं माधव-स्वहस्त-निर्म्मित-वकुलावली-विरचित-कण्ठावलम्ब-

सन्निधौ ब्रवीषि, यदि तु जागरितनिभृता सती मालती स्वयमेवेदं शृणुयात्तदा किं कुर्य्या इत्यभिप्रायेण 'असावधान' इति सम्बोधनमुक्तम्। असम्बद्धेत्यनेन तत्प्रवादस्य मिथ्यात्वं सूचितम्। अपेहि दूरं गच्छ।

(ल) सदेति। प्रसीद मां प्रति कोपं मा कुरु इत्यर्थः। अथवेत्युक्तपक्षान्तरे। भणिता इमं वृत्तान्तमिति शेषः। अयं वृत्तान्तः केनापि युष्माकमन्तिके न कथित इति सरलार्थः। स्वयं वक्तुमुपक्रमते किन्त्विति। कठोरस्य परिणतस्य पूर्णावयवस्य केतकस्य केतकीकुसुमस्य गर्भवत् मध्यदेशवत् विभ्रमो विलासः शोभा येषु तेषां तथोक्तानां अवयवानां हस्तपदादीनां दौर्ब्बल्येन विरहजनितदुर्बलतया निर्वर्त्तितो निष्पादितः सुन्दरत्वविशेषः सौन्दर्य्यबाहुल्यं यत्र तत् तथोक्तं, तथा माधवस्वहस्त-निर्म्मितया वकुलावल्या वकुलकुसुममालया विरचितः कृतो यः कण्ठावलम्बो गल-देशाश्रयः तन्मात्रेण सन्धारितं जीवनं येन तादृशं मालत्याः शरीरं, तथा प्रभात-

(१) अफुड़ं इति क्वचित् पाठः। (२)—जीअलोअं इत्यपि पाठः।
(३) केदई इति पाठोऽपि। (४) णिव्वट्टिद इति भिन्नः पाठः।

जीवएं (१) मालदीए, माहवस्स अ पहाद-चन्दमण्डलापाण्डुर-परिक्खाम रमणिज्जदंसणं ण विभाविदं सरीरं ?। किं अ, तस्सिं दिअसे (२) कुसुमाअरुज्जाण-पेरन्त रच्छामुह समाअमे सविब्भमुल्लसिद-कोदूहलुप्फुल्ल-पसरन्त णअणुप्पल बहल बिलास-मसिण सञ्चार चारुतारआ-बिराअन्त-बिब्भमा,अणङ्ग-णट्टाआरिअ सव्वाआरोवदेस-णिम्माबिअ-बिअड्ढ-मुद्ध-महुरा मए वि ( ३ ) णिरूविदा इमाणं दिट्ठिसम्भेदा ?। किं अ, मम भादुणो दाण-

भाव-सम्भावित-जीवनं मालत्याः, माधवस्य च प्रभात-चन्द्र-मण्डलापाण्डुर-परिक्षाम-रमणीय-दर्शनं न विभावितं शरीरम् ?। किञ्च, तस्मिन् दिवसे कुसुमाकरोद्यान-पर्यन्त-रथ्या-मुख-समागमे सविभ्रमोल्लसित-कौतूहलोत्फुल्ल-प्रसन्ननयनोत्पल-बहल-विलास-मसृण-सञ्चार-चारुतारका-विराजमान-विभ्रमाः, अनङ्ग-नाट्याचार्य-सर्वाकारोपदेश-निर्मित विदग्ध-मुग्ध-मधुरा मयापि न निरूपिता अनयोर्दृष्टिसम्भेदाः ?। किञ्च मम भ्रातृ-

चन्द्रमण्डलमिव आपाण्डुरं विरहेण ईषद्धवलं परिक्षामं सततचिन्तया नितान्तक्षीणं तथापि रमणीयदर्शनं मनोहरदृष्टिकञ्च तत् तथाभूतं माधवस्य च शरीरं केन वा जनेन न विभावितं न लक्षितम् ? अपितु सर्वेणैव लक्षितमित्यर्थः । तथापि कथं गोपयितुमिच्छसीति भावः ।

किञ्चेति । अपि चेति चार्थः । कुसुमाकरोद्यानस्य पर्यन्ते प्रान्तभागे यत् रथ्या-मुखं तत्र समागमे सम्मिलने सति सविभ्रमं सविलासं नानाविधविकारसहितं यथा

(१)...कण्ठावलम्बणसित्तसंजीवणं इत्यपि पाठः। (२) तद्दिअसे इति पाठभेदः।

( ३ )...परिसक्कन्तुव्वेल्लमाण-सविलास-मसिण-सिणिद्ध-संचरण-चारुतारआ-विअम्भमा-णाणङ्ग-मिङ्गाराआ विअ-सव्वाअमोवदेस...तुए वि...इति पाठान्तरम् ।

**वुत्तन्तं सुणिअ तक्खणुच्छलिअ-गम्भीरावेअ-व्वइअर मिलाअन्त-देहसोहाणं उक्खणिज्जमाण मूलबन्धणं (१) विअ ण लक्खिदं हिअअं ?। किं अ एदम्मि अवरं सुमरिदं मए (२)। ल।**

दान-वृत्तान्तं श्रुत्वा तत्क्षणोच्छलित-गम्भीरावेग-व्यतिकर-म्लायमान देहशोभयोः उत्खण्ड्यमान-मूलबन्धनमिव न लक्षितं हृदयम् ?। किञ्च, एतदप्यपरं स्मृतं मया।

तथा उल्लसितयोः उत्क्षिप्तयोः, कौतूहलेन उत्फुल्लयोः विकसितयोः, प्रसरतोः गन्तव्यदेशं गच्छतोः नयनोत्पलयोः ये बहलविलासेन प्रचुरविभ्रमेण ... कोमलचलनेन च चारू मनोहरे तारके कनीनिकाद्वयं, ताभ्यां विराजमानाः प्रकाशमानाः विभ्रमा नानाविधविकारा येषु, ते तथोक्ताः, तथा अनङ्गो मदन एव नाट्याचार्यः तस्य सर्वाकारोपदेशैः सर्वप्रकारशिक्षादानैः निर्म्मिताः कृता अतएव विदग्धाः भावविशेषप्रकाशे चतुराः, मुग्धा मनोहराः मधुरा लोभनीयाश्च ते तथाभूताः, अनयोर्मालतीमाधवयोः, दृष्टिसम्भेदाः परस्परनयनसम्मेलनानि मयापि किं न निरूपिताः दृष्टाः ? अपि तु निरूपिता एवेत्यर्थः। तथापि ममान्तिक एव कथं ... निह्नोतुमिच्छसीति भावः।

किञ्चेति। अत्रापि, अपि चेति चार्थः। भानुनन्दनस्य "चतुर्थ्यर्थे षष्ठी"ति पिङ्गलसूत्रात् चतुर्थ्यर्थे षष्ठी। तत्क्षणे नन्दनाय दानवृत्तान्तश्रवणक्षण एव उच्छलितस्य उद्गतस्य गम्भीरावेगस्य महाविषादवेगस्य व्यतिकरेण सम्पर्केण म्लायमाना मलिनीक्रियमाणा देहशोभा ययोः तयोर्मालतीमाधवयोः, उत्खण्ड्यमानं केनापि छिद्यमान मूलबन्धनं धारणकारणीभूतं देहेन सह बन्धनं यस्य तत् तादृशमिव भूतं हृदयं किं न लक्षितं मयापीत्यन्वयः; अपितु लक्षितमेवेत्यर्थः। तथापि कथं तद्गोपनेच्छेति भावः। किञ्च अन्यच्च। अपरं वृत्तान्तान्तरम्।

(१) उव्वत्तमाणमूलं इति क्वचित् पाठः।

(२) किं अ मए एदं अवरं विसुमरिदं इति भिन्नः पाठः।

लव। किं दाणिं अवरं ?। (व)

मद। जं क्खु मम तस्स (१) जीविदप्पदाइणो महाणुहावस्स चेदणापडिलम्भ-पिअणिवेदिआए मालदाए भअवदो-विअड्ढ-वअणोवण्णास-बोधिदेण (२) हिअअं जीविदं अ माहवेण पारितोसिअरुणेण सअंगाहे (३) णिउत्तं। अहअ (४) लवङ्गिए! तहिं तुए क्खु एव्वं (५) भणिदं "पडिच्छिदो क्खु णो पिअसहीए अअं पसादो" त्ति। (श)

(व) किमिदानीमपरम्?।

(श) यत् खलु मम तस्य जीवितप्रदायिनो महानुभावस्य चेतनाप्रतिलम्भ-प्रियनिवेदिकाया मालत्या भगवती-विदग्ध-वचनोपन्यास-बोधितेन हृदयं जीवितञ्च माधवेन स्वयंग्राहे नियुक्तम्। अथ च लवङ्गिके! तस्मिन् त्वया खलु एवं भणितं, "प्रतीष्टः खलु नः प्रियसख्या अयं प्रसाद" इति।

---

(व) अवेति। अपरं किं स्मृतं तद्ब्रूहीत्यर्थः।

(श) मदेति। चेतनाप्रतिलम्भप्रियनिवेदिकायाः शार्दूलकृतप्रहारजनितमूर्च्छाऽपगमात् परं चैतन्यलाभरूप-सन्तोषसंवाददायिन्याः। भगवत्याः कामन्दक्या विदग्ध-वचनोपन्यासेन "वत्स! माधव! दिष्ट्या सुहृच्छ्रिया वर्द्धितोऽसि मालत्या, तदयमवसरः प्रतिग्राह्यस्य" इति चतुर्थाङ्कगतेन निपुणवाक्यप्रयोगेण बोधितः उपयुक्तमभिधाय मन्दं निवर्त्तितेन माधवेन। स्वयंग्राहे दानान्मालत्या आत्मनैव ग्रहणे, नियुक्तम "यद्रामन्त्राणी"त्यादिवाक्येन व्यापारितम्। अथ च तदनन्तरञ्च।

---

(१) क्वचित् 'तस्स' इति पाठो नास्ति। (२) …बोहिदेण इत्यपि पाठः।

(३) सअंगाहसाहसे इति पाठभेदः। (४) अह इतिमात्रः पाठः क्वचित्।

(५) ज्जेव इति पाठान्तरम्।

लव। सहि! कदमो उण सो महाणुहावो त्ति विसुमरिदं मए (१)। (ष)

मद। सहि! सुमर सुमर। जेण तस्सिं दिअसे विअड़-दुट्ठसावद-विणिवाद-गोअरं गदा असरणा तक्कालसंणिहिदेण पोअर-भुअत्थम्भेण णिक्कारणबन्धवेण सअल-भुवणेक्कसार-णिअदेहो-वहारसाहसं कदुअ परिरक्खिदह्मि। जेण अ दिढ़-विअड़-मंस-लुत्ताण-परिणाहि-वक्खत्थल लञ्छण जज्जरिद-जवापीड़-धारिणा करुणाधणेण मम किदे विसहिदा अदिदुट्ठसद्दूल-णह सिहा-वज्जप्पहारा मारिदो अ सो दुट्ठसावदमहारक्खसो त्ति (२)। (स)

(ष) सखि! कतमः पुनः स महानुभाव इति विस्मृतं मया।

(स) सखि! स्मर स्मर। येन तस्मिन् दिवसे विकट-दुष्ट-श्वापदविनिपात-गोचरं गता अशरणा तत्कालसन्निहितेन पीवरभुजस्तम्भेन निष्कारणबान्धवेन सकल-भुवनैकसार निजदेहोपहार-साहसं कृत्वा परिरक्षितास्मि। येन च दृढ़विकट मांसलोत्तान-परिणाहि-वक्षःस्थल-लाञ्छनजर्जरित-जवापीड़धारिणा करुणाधनेन मम कृते विसहिता अतिदुष्टशार्दूलनख-शिखावज्रप्रहाराः, मारितश्च स दुष्टश्वापद-महा-राक्षस इति।

(ष) लवेति। मदयन्तिकामुखादेव तस्या मकरन्दं प्रत्यनुरागप्रकारमवगन्तुं स्मरणे सत्यपि कौतुकेन विस्मरणभानं दर्शयति सखीत्यादिना।

(स) मदेति। विकटो भयङ्करः, दुष्टः पोषितोऽपि चण्डस्वभावः श्वापदो

(१) कदमो उण महाभाओ त्ति विसुमरिदं मए ईदृशः पाठः क्वचित्।

(२) सहि! सुमर। ...सावदावदेसगोअरं —सुत्वगासण्णिहिदेण...त्थम्भेण

लव । **हुं, मअरन्दो । (ह)**

मद । सानन्दम् । **पिअसहि ! किं किं (१) भणासि । (च)**

( ह ) हुं, मकरन्दः ।

( च ) प्रियसखि ! किं किं भणसि

हिंस्रः शार्दूलः, तस्य विनिपातगोचरं आक्रमणविषयतां गता प्राप्ता, अशरणा अन्यरक्षकरहिता । पीवरो भुजः स्थूलो बाहुः स्तम्भ इव तेन । सकलेषु भुवनेषु एकोऽद्वितीयः सारः स्वप्रियतमत्वात् श्रेष्ठः, यो निजदेहः, तस्य उपहारः शार्दूलाय समर्पणमेव साहसं तत् तथोक्तं कृत्वा स्वविनाशसम्भवेऽपि तव रक्षणमकार्षीत्यर्थः । दृढं कठिनं, विकटं प्रहारक्षताङ्कयुक्तं, मांसलं बलवत् उत्तानं उन्नतं, परिणाहि विशालं, यत् वक्षःस्थलं, तत्र लाञ्छनं शार्दूलनखप्रहारचिह्नं तज्जनितरक्तक्लिन्नभिन्नौ जवापीडौ जवापुष्पशेखर इव तं धारयतीति स तथोक्तस्तेन । करुणा दयैव धनं यस्य तेन अतीव दयालुनेत्यर्थः । अन्यथा निःसम्पर्कां मां रक्षितुमेतावत्कष्टसहिष्णुता न स्यादिति भावः । अतिदुष्टशार्दूलस्य नखशिखा एव नखराग्रभागा एव वज्राः नितान्तकठिनत्वात् कुलिशानि तेषां प्रहाराः । दुष्टश्वापद एव महाराक्षसः सः । तं स्मर इत्यर्थः ।

( ह ) लवेति । हुमिति स्मरणार्थद्योतकमव्ययं । "हुं स्मृतावप्यपाकृतौ"-इत्यादि मेदिनी । अत्रापि कौतुकं व्यज्यते ।

( च ) मदेति । प्रियतमनामश्रवणात् सानन्दम् । आनन्दादेव च किं किमिति द्विरुक्तिः । एतेन पुनर्मकरन्दनामश्रवणे महती व्यग्रता व्यज्यते ।

संभाविदा...। दिढ़ दाढ़ा—विदारिअ...वकवत्थलेण अवटजज्जरिद । जवापीडहारिणा करुणेक्कसर्णेण मम किदे विणिमज्जन्त-मअल-णह-णिआअ-वज्ज-पञ्जर-प्पहारो...इति पाठभेदाः ।

( १ ) क्वचित् 'किं किं' इति द्विरुक्ति नास्ति

वयं तथा नाम यदात्थ किं वदा-
म्ययं त्वकस्माद् (२) विकल: कथान्तरे।
कदम्बगोलाकृतिमाश्रित: कथं
विशुद्धमुग्ध: कुलकन्यकाजन: ॥१॥

लव: णं भणामि मअरन्दो त्ति। सस्मितं (१) शरीरमस्या: स्पृशन्ती संस्कृतमाश्रित्य। (क)

(क) ननु भणामि मकरन्द इति।

---

(क) लवेति: मकरन्दनामश्रवणायैव व्यग्रतातिशयदर्शनात् स्मितम्। रोमाञ्च-परीक्षणाय शरीरस्पर्श:। लवङ्गिकाया: सखीरूपत्वाद् वैदग्ध्यार्थं संस्कृताश्रयणं। यथा दर्पणे—

"योषित्सखीबालवेश्याकितवाप्सरसां तथा।
"वैदग्ध्यार्थं प्रदातव्यं संस्कृतञ्चान्तरान्तरा॥"

वयमिति। यत् आत्थ 'वयं माधवे अनुरक्ता' इति यत् त्वं ब्रवीषि, वयं मालती तत्पक्षगताश्च जना:, तथा माधवे अनुरक्ता एव इति नाम स्वीकरोमीत्यर्थ:। नाम-शब्दोऽयनभ्युपगमे। तु किन्तु, किं वदामि अहमपि त्वद्विषये किं ब्रवीमि; विशुद्ध: परपुरुषानुरागकलङ्कराहित्येन निर्मल:, प्रत्युत परपुरुषे नितान्तानुरागशालिनि ध्वन्यते, मुग्ध: कार्यवशजनितकपटताशून्यतया मूढ: सरल:, सातिशयकामावेशदर्शनात् कपट इत्यपि व्यज्यते। विशुद्धश्चासौ मुग्धश्चेति स विशुद्धमुग्ध: अयं हस्तेन स्पृश्यमान: कुलकन्यकाजन: केवलपरदोषाविष्कारिणी भदयन्तिका त्वमितार्थ:, कथान्तरे कस्यचित् पुरुषस्य कथाप्रसङ्गमध्य एव विकल: कुतश्चिदावेशाद्विह्वल. सन् कथं केन हेतुना कदम्ब-

(१) सस्पृहमिति पाठान्तरम्।

(२)...स्वयञ्च कस्मादिति भिन्न: पाठ:।

मद। सलज्जम्। सहि! किं मं उवहससि। णं भणामि णिव्वावदि तारिसस्स अप्पणिरवेक्ख-व्ववसाइणो किदन्त-कव-लिज्जन्त-जीविद-बलामोडिअ-पच्चाणअण-गुरुओवआरिणो जणस्स संकहासु णामग्गहणं सुमरणं अ (१)। तधा अ तुएवि गाढ़-गुरु-णह-प्पहार-वेअणारम्भ--विह्मलाविद-सरीर-सङ्कलिद-

(ख) सखि! किं मामुपहससि। ननु भणामि निर्वापयति तादृशस्य आत्म-निरपेक्षव्यवसायिनः कृतान्त-कवल्यमान जीवित-बलात्कार-प्रत्यानयन-गुरूकोपकारिणो जनस्य सङ्कथासु नामग्रहणं स्मरणञ्च। तथा च त्वयापि गाढ़-गुरु-नख प्रहार-वेदनारम्भ-

गोलस्य कदम्बपुष्पगोलकस्य आकृतिमिवाकृतिमाकारम् आश्रितः अवलम्बितवान् रोमा-ञ्चित इत्यर्थः। यथेयं कुलकन्यका कुमारी सत्येव, कांश्चित् पुरुषं परममनुरक्ता, मालत्यपि तथा, सुतरां तव केवलं दोषारोपो नितान्तमनुचित इति भावः। सोपहासेयमुक्तिः।

अत्रेदृशमङ्गोविशेषेण मदन्तिकायाः पुरुषविशेषानुरागस्याभिधानात् पर्य्यायोक्त-मलङ्कारः समासगतार्थोपमया सङ्कीर्य्यते। तथा यदास्य इति वाक्यस्य परत्र पाठात् "न्यक्कारो ह्ययमेव मे यदरयः" इति दर्पणोदाहृतवत् वाक्यगतविधेयाविमर्शदोषः, स च 'यदास्य एवं वयमेव' इति पाठेन समाधेयः। ईदृशपाठे तु आस्य इति व्याधातोऽरत्य-तन्त्राः सौ प्रयोगः। एवम् इत्थम्भूता इत्यर्थः।

अत्र लेशो नाम नाट्यलक्षणम्। "स लेशो भण्यते वाक्यं यत् सादृश्यपुरःसरम्।" इति दर्पणलक्षणात्। वंशस्थविलं वृत्तम् ॥१॥

(ख) मदेति। लवङ्गिकया स्वरोमाञ्चप्रत्यक्षीकरणात् सलज्जमाहेत्यर्थः। आत्म-निरपेक्षेण आत्मरक्षणापेक्षामकृत्वा, व्यवसायिनः मां रक्षितुमुद्यमिनः, कृतान्तेन यमेन कवल्यमानं शार्दूलाक्रमणेनैव ग्रस्यमानं यत् जीवितं मम जीवनं तस्य बलात्कारेण

---

(१) सहि! कीस···णिव्वावअन्ति ··णामग्गहण-सुमरणाइं। इति पाठान्तराणि।

सेअ-सलिलुप्पोलो, मोह-मउलाअन्त-णेत्त कन्दोट्टजुअलो, भूमि-विलग्गिदासि-लदा-विट्टम्भ-धोर-धारिद-सरीरभारो, पच्चक्खी-किदो ज्जेव मदयन्तिआ-णिमित्त-मेत्त विच्छड्डिदमहामहग्घ-जीवलोओ महाभाओ त्ति (१)। स्वेदादीन् विकारानाटयति। (ख)

विह्वलित-शरीर-सङ्कलित-स्वेद-सलीलोत्पीडः, मोह-मुकुलायमान-नेत्रकन्दोटयुगलः, भूमि-विलग्नासिलता-विष्टम्भ-धीर-धारित-शरीरभारः, प्रत्यक्षीकृत एव मदयन्तिका-निमित्तमात्र-विच्छर्दितमहामहार्घजीवलोको महाभाग इति।

बलप्रकाशेन यत् प्रत्यानयनं प्रत्युद्धरणं तेन गुरुकं महत् उपकरणं शोभनं यस्य तस्य। सङ्कथासु कथाप्रसङ्गेष्वपि नामग्रहणं नामोच्चारणं स्मरणञ्च कर्त्तृ, निर्वापयति सन्ताप-हीनां करोति। गाढ़गुरुनखप्रहारेण कठिनमहानखराघातेन या वेदनारम्भस्तेन विह्वलितात् विकलीकृतात् शरीरात् सङ्कलितः स्वेदसलिलोत्पीड़ो घर्म्मजलप्रवाहो यस्य सः। मोहेन मूर्च्छया मुकुलायमान मुद्रितीभवत् नेत्रकन्दोटयुगल नयननीलोत्पल-द्वयं यस्य सः। भूमौ विलग्नायाः स्थितायाः असिलतायाः विष्टम्भेन अवलम्बनेन धीरं स्थिरं यथा स्यात् तथा धारितो धृतः शरीरभारो येन सः। तथा मदयन्तिकानिमित्त-मात्रे केवलमदयन्तिकानिमित्ते विच्छर्द्दितः परित्यक्तः शार्दूलसन्निधौ स्वदेहस्यार्पणेन मरणावश्यम्भावात् परित्यज्यमान इत्यर्थः महामहार्घः जीवने नानाविधसुखसम्भोग-सम्भवादतीवमहामूल्यः जीवलोको येन स तथोक्तः, महाभागो नानागुणशालित्वाद-तीवभाग्यवान् मकरन्दः, त्वयापि प्रत्यक्षीकृत एव। सुतरां तत्कृतोपकारे न मे मिथ्यावादित्वमाशङ्कनीयमिति भावः।

"कन्दोटं (क्लो) नीलोत्पल" मिति शब्दकल्पद्रुमः।

(१)…सो तुए वि गाढ़-प्पहार-वेअणारम्भ-विह्मारिद-सरीर-सङ्कलिद-सेअसलिल-ग्गमो…भमि-विगलिदासि-षट्टि…परिधारिअ… मदअन्तिआमेत्त- विच्छड्डिअ-महग्घ-जीविदो महाणहावो त्ति इति पाठभेदाः।

बुद्ध । शरीरमस्याः स्पृशन्ती । अस्सत्थसरीरे ! किं वाआ, दंसिदं सरीरेण मअरन्द-समाअमोच्छुकं (१)। (ग)

मद । मलज्जम् । सहि ! अवेहि अवेहि। उब्भिस्सह्मि सहवासिणीए मालदीए (२)। (घ)

लव । सहि मदअन्तिए ! अह्मे वि जाणिदव्वं जाणीमो ता पसीद, विरम व्ववदेसादो। एहि, विस्सम्भ-गब्भ-कधा-बन्धसरिसं (३) सुहं चिट्ठह्म। (ङ)

(ग) अस्वस्थशरीरे ! किं वाचा, दर्शितं शरीरेण मकरन्दसमागमोत्सुकत्वम्।

(घ) सखि ! अपेहि अपेहि। उद्भिन्नास्मि सहवासिन्या मालत्या।

(ङ) सखि मदयन्तिके ! वयमपि ज्ञातव्यं जानीमः। तत् प्रसीद, विरम व्यपदेशात्। एहि, विस्रम्भगर्भ-कथा-बन्धसदृशं सुखं तिष्ठामः।

(ग) बुद्धेति। अस्वस्थशरीरे ! मदनपीड़ावशादसुस्थदेहे ! वाचा किं निजावस्थागोपनवचसा किं फलम् अपि तु किमपि नेत्यर्थः। कथमेतदित्याह दर्शितमिति। शरीरेण मकरन्दस्य स्मरणमात्रेणैव रोमाञ्चितेनेत्यभिप्रायः। दर्शितं प्रकटितम्।

(घ) सहीति। उद्भिन्ना रोमाञ्चिता। तथा च प्रियसख्या मालत्याः सहवासेनानन्दादेवामी रोमाञ्चाः सञ्जाताः, न पुन र्मकरन्दस्य स्मरणादिति भावः।

अत्र व्याजोक्तिरलङ्कारः "व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुन" इति लक्षणात्।

( ङ ) लवेति। व्यपदेशात् आत्मभावगोपनच्छलात्। विस्रम्भः प्रणयो गर्भे

(१) बुद्ध। व्ववसिदं पिअसहीए सरीरेण इति पाठान्तरम्।

(२)···पिअसहि ! अव्वहि। उब्भिस्सह्मि सहवासिणीए वीसम्भेण इति पाठभेदः।

(३)···विस्सम्भगब्भकहापबन्ध सरसं इति क्वचित् पाठः।

बुद्ध। सहि ! सोहणं लवङ्गिआए भणिदं (१)। (च)

मद। विधेअह्मि संपदं सहीणं (२)। (छ)

लव। जइ एव्वं, ता कधेहि कधं णु दे कालो गच्छदि त्ति।(ज)

मद। णिसामेहि पिअसहि !। मम बुद्धरक्खिदा-पक्खवाद-पच्चएण पढमं ज्जेव तस्सिं जणे अदिभूमिं गदो अणुराओ।

(च) सखि ! शोभनं लवङ्गिकया भणितम्।

(छ) विधेयास्मि साम्प्रतं सख्योः।

(ज) यद्येवं, तत् कथय, कथं नु ते कालो गच्छतीति।

(झ) निशामय प्रियसखि !। मम बुद्धरक्षिता-पक्षपात-प्रत्ययेन प्रथममेव तस्मिन्

यस्य तस्य तादृशस्य कथाबन्धस्य संलापपरम्परायाः सदृशं योग्यं तादृशालापपरम्परया यादृशं सुखं भवितुमर्हति तादृशं सुखं निरतिशयनिर्म्मलसुखं यथा स्यात्तथेत्यर्थः।

( च ) बुद्धेति। शोभनं युक्तियुक्तत्वात् साधुभूतम्। सुतरां तदेव कुर्म्म इति भावः।

( छ ) मदेति ! सख्योर्युवयोः। विधेयास्मि अतीवस्नेहवशात् वाक्याधीनास्मि। तथा च यदादिश्यते तदेव मया करणीयमिति भावः। "विधेयो विनयग्राही वचनेस्थित आश्रव" इत्यमरः।

( ज ) लवेति। कथं केन प्रकारेण।

( झ ) मदेति। हे प्रियसखि ! लवङ्गिके ! निशामय आकर्णय। बुद्धरक्षिताया अवगतसर्व्ववृत्तान्ततया लवङ्गिकाया एवेदं सम्बोधनं तत एव चैकवचनमिति बोध्यम्। बुद्धरक्षितायाः पक्षपातो गुणवर्णनादिना मकरन्दपक्षग्रहणं तत्र प्रत्ययेन

(१) बुद्ध। सोहणं लवङ्गिआ भणादि। इति भिन्नः पाठः।

(२)...पिअसहीओ इत्यपि पाठः।

अवि अ, तस्सिं जणे भरिदुव्वरन्त-कोदूहलुक्कण्ठा-मनोरहं हिअअं आसी (१)। (झ)

तदो विहि-णिओअ-णिव्वुत्त-दंसणा भविअ (२) दुव्वार-दारुणाआस-दुक्ख-सन्दाव-दज्झन्त-चित्त-विहडन्त-जीविदासा, दूर-विअम्भिआपुव्व-सव्वङ्ग-प्पज्जलण-मअण-हुदवहुद्दाम-दाह-

जने अतिभूमिं गतोऽनुरागः। अपि च, तस्मिन् जने भृतोद्वर्त्तमानकौतूहलोत्कण्ठा-मनोरथं हृदयमासीत्।

(ञ) ततो विधिनियोग-निर्वृत्त-दर्शना भूत्वा, दुर्वार-दारुणायास-दुःख-सन्ताप-दह्यमान-चित्त-विघटमान-जीविताशा, दूर-विजृम्भितापूर्व-सर्वाङ्ग-प्रज्वलन-मदन-हुतवहो-

विश्वासेन। गुणज्ञा बुद्धरचिता न खलु निर्गुणस्य पक्षपातिनी भवितुमर्हतीति तद्विश्वासः सम्भवपर एवेति भावः। यस्मिन् जने मकरन्दे। मनसा पतिभावनिर्वर्णनात् मकरन्द-नामग्रहणमकृत्वा तस्मिन् जन इत्युक्तम्। अतिभूमिमर्यादिकाम्। भृतमिति भावे क्तः, ततश्च भृतात् हृदयपरिपूरणात् परम् उद्वर्त्तमाना अतिरिक्तीभवन्तः, अतीवबहुला इत्यर्थः, कौतूहलोत्कण्ठामनोरथा दर्शनालापादौ कौतुकौत्सुक्याभिलाषा यत्र तादृशम्।

(ञ) तत इति। विधिनियोगेन दैवप्रेरणेन निर्वृत्तं प्राद्दुर्लाक्रमणकाले निष्पन्नं दर्शनं साक्षात्कारो यस्याः सा। दुर्वारी वल्लभान्तरेण दुरुपशमौ दारुणश्च य आयासो मन्मथपीड़ा, तस्य दुःखसन्तापाभ्यां तज्जनितकष्टपरितापाभ्यां दह्यमानात् चित्तात् विघटमाना अपसरन्ती विनश्यन्ती जीविताशा जीवनप्रत्याशा यस्याः सा। दूर-विजृम्भितः अतीववृद्धिं गतः, अपूर्व आश्चर्यः, सर्वाङ्गप्रज्वलनः सकलदेहावयवसन्तापकः,

---

(१)...पच्चएण पढमं एव्व तस्सिं जणे अविरल-कोऊहलुक्कण्ठा मणहरं···इति पाठभेदः।

(२) तदो विहि-णिओइअ-चिर-णिउत्त-दंसणा भविअ इत्यपि पाठः।

दूसहाआस-दुम्मणाअन्त-परिअणा, (१) पच्चासा-विमोक्खमेत्त-सुलह-मित्तु-णिव्वाण--पड़िऊल--बुद्धरक्खिदा--वअण--विवड्ढिआवेअ-व्वइअर-विसंठला इमं जीवलोअ-परिवत्तं अणुहोमि। (ञ)

द्दाम-दाह-दुःसहायास-दुर्म्मनायमान-परिजना,प्रत्याशा-विमोचमात्र सुलभ-मृत्यु-निर्वाण-प्रतिकूल-बुद्धरचिता-वचन-विवर्द्धिताबेग-व्यतिकर-विसंस्थुला, इमं जीवलोकपरिवर्त्त-मनुभवामि।

यो मदनहुतवहः कामानलः, तस्य उद्दामदाहेन तत्कृत-विकटसन्तापेन यो दुःसह आयासः कष्टं, तेन दुर्म्मनायमानाः प्रतीकारोपायाऽभावात् दुःखितमनस्काः परिजनाः परिचारिकाः यस्याः सा। तथा प्रत्याशाविमोचमात्रेण तस्य प्रियतमस्य लाभाशापरित्यागमात्रेण सुलभम् अनायासप्राप्यं यत् मृत्युनिर्वाणं मरणसुखं, तस्य प्रतिकूलानि प्रतिबन्धकानि यानि बुद्धरचितायाः वचनानि 'सखि! मा म्रियस्व, अवश्यमेव तत्समागमो भविष्यति' इत्यम्भूतानि वाक्यानि, तैर्विवर्द्धितस्य आवेगस्य समागमाशावेगस्य व्यतिकरेण सम्पर्केण विसंस्थुला विषमीकृता अस्थिरचित्तीकृता सती, इमं जीवलोकस्य जगतः परिवर्त्तं क्रमिकपरिवर्त्तनम् अनुभवामि समयमतिवाहयामीत्यर्थः। किन्तु नाद्यापि तत्समागमो जात इति भावः। तस्मिन्नहमेतावदनुरक्ता, यथा तस्य लाभाशा-परित्यागमात्रेणैव ममावश्यमेव मरणं भवेत्, तथा सति च मन्मथपीड़ोपशमेन चिर-निर्वृतिः स्यात्; किन्तु बुद्धरचितायाः प्रत्याशाजनकवाक्यैर्मृत्युमपि न प्राप्नोमि, अथ च तदाशावेगेन सततसुस्थिरचित्ता सती समयमतिवाहयामीति शेषविशेषणस्य सरलार्थः। एतेनातिमहती समागमोत्कण्ठा व्यज्यते।

(१) दुव्वार-दारुणाणङ्ग-दुक्ख-मन्दाविद-कड्ढन्त-चित्त-विहड्न्त-जीविदा सभाविअम्हि। विजिम्भिदापुव्व-सव्वङ्ग पज्जलिअ-मअण-हुदवहुद्दाम-दूसहाआस इति पाठान्तरम्।

सङ्कप्प-सिविण अन्तरेसु अ (१) मणोरहुम्माद-मोहिदा पेक्खामि तं जणं। सो वि पिअसहि! मुहुत्त-णिव्वूढ़-विम्हअ-विसंठुलु-व्वेल्लन्त-वित्थरन्त--ललिद--णेत्त--पुण्डरीअ-तण्डवप्पील-डम्बर--पड़िरूढ़--मैरेअ--मद--घूम्मिअं विअ णिज्झाअदि मं (२)। (ट)

---

(ट) सङ्कल्प-स्वप्नान्तरेषु च मनोरथोन्माद-मोहिता प्रेक्षे तं जनम्। सोऽपि प्रियसखि! मुहूर्त्त-निर्व्यूढ़-विस्मय विसंष्ठुलोद्वेल्लद्विस्तार्य्यमाण-ललित-नेत्रपुण्डरीक ताण्डवोत्पीड़-डम्बर-प्रतिरूढ़ मैरेयमद-घूर्णितमिव निध्यायति माम्।

(ट) सङ्कल्पेति। अपि चेति चार्थः। सङ्कल्पाः 'तेन सहैवमालपामि, इत्थञ्च विहरामि' इत्येवं भावनाः, स्वप्ना निद्रितावस्थायां विषयानुभवाः, तेषामन्तरेषु मध्येषु व्यक्तिभेदाद्बहुवचनम्। मनोरथेन अभिलाषमात्रेण य उन्मादः कामोन्मत्तता, तेन मोहिता सती तं जनं मकरन्दं प्रेक्षे पश्यामि। सोऽपि, न केवलमहं मकरन्दोऽपि। मुहूर्त्तं निर्व्यूढ़ः सम्पन्नो यो विस्मयो दर्शनाश्चर्य्यं तेन विसंष्ठुलं विषमं सातिशयं यथा स्यात्तथा उद्वेल्लतोरुन्नमतोः, विस्तार्य्यमानयो दर्शनतृष्णया प्रसार्य्यमाणयोः ललितयोः सुन्दरयोः, नेत्रपुण्डरीकयो स्ताण्डवोत्पीड़ः नृत्यराशिः स्पन्दनसमूह इत्यर्थः स एव डम्बर आड़म्बरः, तेन प्रतिरूढ़मुत्पन्नं मैरेयमदेन मैरेयाख्यमद्यपानजनितमत्ततया घूर्णितमिव घूर्णितं घूर्णनं यस्मिन् कर्म्मणि तद् यथा तथा मां निध्यायति पश्यति।

"मैरेयं धातकीपुष्प-गुड़धानाम्लसंहितम्।" इति माधवः।

"निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्।" इत्यमरः।

(१) सङ्कप्पचिन्ताए सिविणन्तरेसु अ, इति पाठान्तरम्।

(२) तह अ, पिअसहि! मुहुत्तं उद्दूढ़-विम्हअ-विसंठुल-व्वेल्ल-वित्थारिपेरन्तणाल-रत्त-णेत्त-पुण्डरीअ-ताण्डव-उब्भट-परुढ-मैरेअ-मद-घुम्मन्तसीलं णिव्वणेदि इति पाठभेदः।

किं अ, कवलिदारविन्द-केसर-कसाअ-कण्ठ-कलहंस घोस-घग्घर-क्खलिद-गम्भीर-तार-धीर-णाद-भरिद-कण्णविवरं "पिए मदअन्तिए!" त्ति वाहरदि। अध अ, पप्फुरन्त-पओहरुच्छलन्त-उत्तरीअ-अञ्चलावलम्बण-परिभवेण ससंभमुत्तरङ्गि-धमधमाअन्त-हिअअं मं समुत्तासेदि (१)। (ठ)

---

(ठ) किञ्च, कवलितारविन्द केसर-कषायकण्ठ-कलहंस घोष-घर्घर-स्खलित-गम्भीर-तार-धीर-नाद भरित-कर्णविवरं "प्रिये मदयन्तिके!" इति व्याहरति। अथ च प्रस्फुरत्पयोधरोच्छलदुत्तरीयाञ्चलावलम्बनपरिभवेन ससंभ्रमोत्तरङ्गि-धमधमायमान-हृदयां मां समुत्त्रासयति।

---

(ठ) किञ्चेति। किञ्च अन्यच्च। कवलितैर्ग्रस्तैः खादितैः अरविन्दकेसरैः पद्मकिञ्जल्कैः कषायः सुरभि र्मनोहर इत्यर्थः कण्ठः स्वरो यस्य, तस्य तथोक्तस्य कलहंसस्य घोषो रव इव घर्घरः अस्पष्टस्वरः, स्खलितो गद्गदः "एतदुभयं साध्वसवशात्" इति जगद्धरः, गम्भीरः, तार उच्चः, धीरः अकम्पितश्च यो नादः शब्दः तेन भरिते परिपूर्णे कर्णविवरे कर्णरन्ध्रद्वयं यस्मिन् कर्मणि तद्यथा तथा। व्याहरति वदति। अथ च अनन्तरञ्च। प्रस्फुरतोः स्पर्शवशात् स्पन्दमानयोः पयोधरयोः, स्तनयोः, उच्छलत् स्पन्दनादेव विगलत् यदुत्तरीयाञ्चलं तस्यावलम्बनं धारणमेव परिभवस्तेन ससंभ्रमं सावेगम्, उत्तरङ्गि अतीवचञ्चलं, धमधमायमानं सातिशयोद्वेगवशात् 'धम धम' इत्येवं कुर्वाणं हृदयं यस्या स्तां तथाभूतां मां समुत्त्रासयति चकितां करोति।

पद्मकिञ्जल्ककवलनेन हंसानां स्वरो मधुरो भवतीति प्रसिद्धिः।

"कटु-तिक्त-कषायास्तु सौरभेऽपि प्रकीर्त्तिताः।" इति हलायुधः। "स्वरेऽपि कण्ठ

---

(१)···गम्भीर-भारई-भरिअ-कण्णविवरं···। अह पप्फुरन्तो विअ उत्तरिअञ्चलवलम्बन-पराहवेण, इति भिन्नः पाठः।

सहसा विसज्जिअंसुअ-प्पसरिदं तक्खण-कठोर-कमल-दण्डाअमाण-बाहु--बन्धणाववारिअ--पओहरुग्गमं, विहड़न्त-विअड़--मेहलावलअ-मंदाणिज्जन्त-पीवरूरु-प्पड़िसिद्ध-विप्पदीव-गमणं, पड़िऊलवादिणीं वि मं अच्चाअर-पअओ-णिव्वत्तिद-मुहुत्त-कोवोवराअ-दुक्खपरुसीकिदहिअअं, सिणिद्ध-पुणरुत्त-पल्लत्थ-लोअण-विभाविदासेस-चित्तसारं उवहसदि (१)। (ड)

(ड) सहसा विसर्जितांशुक-प्रसृतां, तत्क्षण-कठोर-कमल-दण्डायमान बाहुबन्धना-पवारित-पयोधरोद्गमां, विघटमान-विकट-मेखलावलय-मन्दायमान-पीवरोरु-प्रतिषिद्ध-विप्रतीपगमनां, प्रतिकूलवादिनीमपि मां अत्यादरप्रयत्ननिर्वर्त्तित-मुहूर्त्त-कोपापराग-दुःख-परुषीकृत हृदयां, स्निग्धपुनरुक्त-पर्य्यस्त-लोचन-विभाविताशेष-चित्तसारामुपहसति।

आख्यात" इति हारावली। "घर्घरो ना चलद्वारिध्यानोलूकनदान्तरे। स्त्री घण्ट-कण्ठ्यां वीणायां भेदे स्वरान्तरेऽपि च॥" इति मेदिनी।

धमधमायमानेति धमधमशब्दात् "अव्यक्तानुकरणा" दित्यादिना डाच्, ततश्च, "डाच्यव्यक्तानुकरणस्ये"त्यायिप्रत्ययान्तादानश्।

(ड) सहसेति। विसर्जितम् आकृष्य त्याजितम् अंशुकं परिहितवसनं यस्याः सा तथा प्रसृता लज्जावशात् प्रस्थातुं प्रवृत्ता, विसर्जितांशुका चासौ प्रसृता चेति ताम्। तत्-क्षणे तस्मिन् प्रस्थानारम्भसमये कठोरौ परिणतौ यौ कमलदण्डौ पद्मनालदण्डौ तद्वदा-चरन्तौ विपुलपुलकोदयात् तत्सदृशौ यौ बाहू भुजौ ताभ्यां बन्धनेन आलिङ्गनेन अपवा-रितस्तिरोधायित आच्छादितः पयोधरयोः, कुचयोः, उद्गम औन्नत्यं तुङ्गता यस्या स्ताम्। ईदृशारम्भे कथं न पलायितमित्याह विघटमानेत्यादि। विघटमानं वसनस्खलनादवस्रं

(१) विसज्जिअ ओसरिअ तक्खण—विहड़न्त विअल-मेहलावलअ-संधाणिज्जन्त-णिसिद्ध-पुणरुत्त···उवहसिअ इति पाठभेदाः।

दिउण-बाहुदण्डावेट्ठण-णिअन्तिदं पिअसहि ! परूढ़-सद्दूल-कठोर-कररुह-प्पहार-विअड़-पत्तावलो-पसाहनुत्ताण-वच्छत्थल-

(ढ) द्विगुण-बाहुदण्डावेष्टन-नियन्त्रितां प्रियसखि ! प्ररूढ़-शार्दूल-कठोर-कररुह-प्रहार-विकट-पत्रावली-प्रसाधनोत्तान-वक्षःस्थल-निष्ठुर-निवेश-निःसहां कृत्वा सावेग-

:समानं, विकटं विशालं, यत् मेखलावलयं वलयीकृतं काञ्चीदाम, तेन सन्दान्यमानौ बध्यमानौ संयम्यमानौ पीवरौ स्थूलौ यौ ऊरू स्वकीयमेवोरुद्वयं, ताभ्यां प्रतिषिद्धं निवारितं विप्रतीपगमनं तदभिलषित-व्यापारस्य प्रतिकूलीभूतं प्रस्थानं यस्यास्ताम्। प्रतिकूलवादिनीमपि 'मैवं विधेहि' इत्यादिनिषेधकारिणीमपि। अत्यादरेण प्रयत्नेन च तदीयेनेत्यर्थः निर्वर्त्तिते निष्पादिते ये मुहूर्त्तं मुहूर्त्तव्यापिनी तादृशारम्भेण निरतिशयसुखलाभादल्पकालस्थायिनी, कोपोपरागदुःखे 'कथमयमीदृशमाचरती'ति रोषसम्बन्धकष्टे, ताभ्यां परुषीकृतं निष्ठुरीकृतं हृदयं यस्यास्ताम्। तथा स्निग्धे सस्नेहे, पुनरुक्तपर्य्यस्ते द्विगुणनिपातिते मदङ्गेष्वतीवगाढ़निवेशिते ये लोचने चक्षुर्द्वयं ताभ्यां विभावितः अवगतः, अशेषः समस्तः, चित्तस्य चित्तवृत्तेः सारः स्थिरांशः निश्चितांशः 'मिथ्यैवायं कोपः, प्रत्युत ईदृशाचरणे सम्पूर्णसम्मतिरस्ति' इत्येवमभिप्रायो यस्यास्तां तथोक्तां माम् उपहसति 'अयि ! गन्तुमारभमाणा कथं न गच्छसि' ईदृशार्थव्यञ्जकेन मुखनयनभङ्गीविशेषेण उपहासं करोति।

सन्दानं बन्धनरज्जुरनयोरस्तीति सन्दानौ अर्शआदित्वादत् ततश्च सन्दानौ क्रियमाणाविति सन्दान्यमानौ करोत्यर्थेनन्तात् कर्म्मणि शानच्।

(ढ) द्विगुणेति। द्विगुणाभ्यां पृष्ठदेशे आकफोणिकमयहस्तस्थापनेन द्विगुणीकृताभ्यां बाहुभ्याम् आवेष्टनेन नियन्त्रितां संयमितां गाढ़ालिङ्गनेन बद्धामित्यर्थः। प्ररूढ़ं जातं शार्दूलस्य कठोरकररुहप्रहाराः कठिननखाघातचिह्नान्येव विकटपत्रावली विस्तृतपत्ररचनाश्रेणी सैव प्रसाधनं भूषणं यत्र तत्, उत्तानम् उन्नतञ्च यत् वक्षःस्थलं तत्र

निठ्ठुर-णिवेस-णोसहं कदुअ, सावेअ-विहुअ-मत्थआविद्ध (१) कवरी-णिहिद-करपरिग्गह-पुञ्जीकिदुण्णमिद-णिच्चल-मुहावअव-सच्छन्द विलसिद-विअड्ढ-वअण-कमलो, (२) वामगण्ड-मूलोवरि-णिहिद-प्पप्फुरन्त-पुञ्जिदाहर-समुग्गअ-प्फंस-णिब्भरुद्धस्सिद-सरीरसोहं, (३) उल्लसिद-सद्धसानन्द-विसम-सब्भम-वलण-मोह-मन्थर-भमन्त-लोअणं, किं वि (४) दुव्विणीद-साहसाणुरूवव्ववसाओ मं अणब्भत्थणिज्जं (५) अब्भत्थेदि। (ढ)

---

विधुत-मस्तकाविद्ध-कवरी-निहित-कर-परिग्रह-पुञ्जीकृतोन्नमित-निश्चल-मुखावयव स्वच्छन्द-विलसित-विदग्ध-वदन-कमलो वामगण्ड-मूलोपरि-निहित-प्रस्फुरत्-पुञ्जिताधर-समुद्गत-मनोहर-स्पर्श-निर्भरोद्धर्षित-शरीरशोभां, उल्लसित-साध्वसानन्द-विषम-सम्भ्रम-वलन-मोह-मन्थर-भ्रमल्लोचनां किमपि दुर्विनीत-साहसानुरूपव्यवसायी मामनभ्यर्थनीयमभ्यर्थयते।

निठुरनिवेशेन गाढ़प्रवेशनेन निःसहां जडाम् अपसरणादिसर्व्वकार्य्याक्षमामित्यर्थः। कृत्वा विधाय, सावेगं सत्वरं विधुतं तच्चुम्बनबाधाविधानाय मया विशेषेणान्दोलितं यत् मस्तकं मदीयमेव शिरः, तेन आविद्धा स्खलिता या कवरी मदीया निबद्धकेशपाशः, तस्यां निहितेन नयननासिकोपरि निपतितानां तेषां केशानामपसारणाय स्थापितेन करेण एकस्मिन् करे समावद्धीकरणव्यापृते सति अपरेण हस्तेन, यः परिग्रहो मदीय

(१)…सत्थआवविद्ध…इति पाठोऽपि।

(२) परिग्गहोवग्गिदुण्णमिद…सच्छन्द-विब्भास इत्यपि पाठः।

(३)…वामगण्डमूल-चिरविणिहिद…समुग्गम-मणहर-सहस्स-मारस्सद-मणहरुक्कस्सिद-सरीरसोहं इति पाठान्तराणि।

(४)…सम्भम-मणहर-संवलण-मन्थर-भमन्त-चेअणं किं वि किं वि इति पाठभेदः।

(५) क्वचित् 'अणब्भत्थणिज्ज' इति पाठो नास्ति।

एव्वं णाम (१) पिअसहि! समक्खं (२) सव्वं अणुभविअ झत्ति (३) पड़िबुद्धा सुण्णारण्णसंणिहं पुणो वि मन्दभाइनी विभावेमि जीअलोअं त्ति। (ण)

(ण) एवं नाम प्रियसखि! समक्षं सर्वमनुभूय झटिति प्रतिबुद्धा शून्यारण्यसन्निभं पुनरपि मन्दभागिनी विभावयामि जीवलोकमिति।

केशानामेव ग्रहणं, तेन पुञ्जीकृतेषु पृष्ठतः पुञ्जीकृत्य विधृतेषु सत्सु मम केशेष्वित्यर्थः, उन्नमिता सदाकर्षणेनेव उत्तोलिताः, नियताः तत्कोशलेन स्पन्दयितुमपि सामर्थ्याभावात् मानिशयसुखपारवश्याच्च शिराः, ये मुखावयवा नयनाधरकपोलादयो मम वदनावयवाः, तेषु स्वच्छन्दविलसिते बाधाकरणाभावात् सम्भवपरे यत्र तत्र चुम्बनादियथेष्टव्यवहारे विदग्धं चतुरं वदनकमलं यस्य स तथोक्तः। दुर्विनीतानां हठकामुकानां साहसानुरूपो हठाध्यवसायसदृशः, व्यवसायोऽध्यवसाय उद्यमो यस्य तादृशः सन्। वामगण्डमूलोपरि स्त्रीणां प्रायेण सर्वव्यवहारस्यैव वामभागे व्यवस्थापनात् मम वाम कपोलमूले निहितात् स्थापितात् चुम्बनप्रवृत्तादित्यर्थः, अतएव प्रस्फुरतः स्पन्दमानात् पुञ्जिताधरात् विन्यस्तसकलांशात् तदीयोष्ठात् समुद्गतः समुत्पन्नो यो मनोहरः स्पर्शः,तेन निर्भरं सातिशयं यथा तथा उद्धर्षिता रोमाञ्चादिभिर्नितरां प्रकाशिता शरीरशोभा यस्यास्ताम्। तथा उल्लसिताभ्यां तादृशारम्भेणोत्पन्नाभ्यां साध्वसानन्दाभ्यां भयसुखाभ्यां यो विषमसम्भ्रमो विशालावेगः, तस्य बलनेन उज्जीवनेन उत्पत्त्या यो मोहो जड़ता तेन मन्थरं मन्दं यथा स्यात्तथा भ्रमन्तौ घूर्णमाने लोचने चक्षुषी यस्यास्तां तथोक्तां मां किमपि लज्जया वक्तुमशक्याम्, अनभ्यर्थनीयं मम कन्यात्वदशावशात् केनापि न प्रार्थनीयं सुरतमित्यर्थः अभ्यर्थयते याचते। इत्यन्तः स्वप्नवृत्तान्तः।

(ण) एवमिति। एवम् इत्थम्। समक्षं प्रत्यक्षम्। झटिति तत्क्षणात्। प्रतिबुद्धा

(१) 'एवंणाम' इत्यपि कुत्रचित्पाठः।

(२) समक्खं अ इति क्वचित् पाठः। (३) तदो झत्ति इति भिन्नः पाठः।

लव । विहस्य । **सहि मदअन्तिए ! फुड़ं आचक्खेहि । अध तस्सिं अवसरे सिणेह-विब्भमुम्मीस-हास-विअसन्त-बहुरक्खिदा-लोअण-णिरूविदं परिअणादो गोवणिज्जं दे णिअम्बस्स मूलं सअणिज्ज-पच्छदवड़ावबारिदं भोदि किं ण वेत्ति (१) । (त)**

(त) सखि मदयन्तिके ! स्फुटमाचक्ष्व । अथ तस्मिन्नवसरे स्नेहविभ्रमोन्मिश्र-हास-विकसद्बुद्धरक्षिता-लोचन-निरूपितं परिजनाद्गोपनीयं ते नितम्बस्य मूलं शयनीय-प्रच्छदपटापवारितं भवति किं न वेति ।

जागरिता । शून्यारण्यसन्निभं सहसा तादृशानुपमसुखास्वादापगमादिति भावः । मन्द-भागिनी जाग्रदवस्थायां तदलाभादित्याशयः । जीवलोकं जीवलोकवैचित्र्यं, विभावयामि चिन्तयामि इतिशब्दस्य पूर्वोक्तनिशामयेत्यनेनान्वयः । एतेनातीवोत्कण्ठा व्यज्यते ।

(त) लवेति । स्फुटमाचक्ष्व स्पष्टं ब्रूहि । तस्मिन्नवसरे स्वप्नसम्भोगसमये, स्नेह-विभ्रमेण प्रेमविलासेन उन्मिश्रो युक्तो यो हासः, तत्र सुखभङ्गीप्रभृतिदर्शनेन हास्यं, तेन विकसन्ती विस्फुरन्ती भवन्ती बुद्धरक्षितायाः सतत-सहचारिण्यास्तत्कालजागरिताया इत्यर्थः ये लोचने चक्षुषी, ताभ्यां निरूपितं सम्यगवलोकितं, परिजनात् लज्जया परि-चारिकाभ्योऽपि । शयनीयप्रच्छदपटेन परिहितवसनस्योत्सारणात् शय्याया आस्तरण-वसनेन अपवारितं धातुक्षरणात् दृढसंलग्नतया आच्छादितम् । पार्श्वपरिवर्तनादाविति भावः एतेन किङ्करीजनोपयोगिप्रश्नेन मालत्यपेक्षया मदयन्तिकाया अपकृष्टत्वं प्रति-पादितम् । अत्र तु ईदृशे आलापे सत्यपि समवयस्कानां गोष्ठीवशान्न अश्लीलतादोषः । प्रत्युत गुण एव तथा चोक्तम्—

"सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः ।"

(१)···सिणेह-विब्भमुज्झिअ-हास-विअसन्त-बुद्धरक्खिदा-लोअण-णिरूविदं आमण-मऊरअं परिअणादो गोवणिज्जं होइ वा किं ण वेत्ति, इति पाठान्तरम् ।

मद। अइ असंबद्धपरिहासमोले ! अवेहि। (थ)

बुद्ध। सहि मदअन्तिए ! मालदोपिअसही क्खु ईदिसाइं ज्जेव्व मन्तिदुं जाणादि (१)। (द)

मद। सहि ! (२) मा क्खु एव्वं मालदीं उवहस। (ध)

बुद्ध। सहि मदअन्तिए ! पुच्छिस्सं दाणिं किं वि, (३) जइ ण मे विस्सामभङ्गं करेसि। (न)

---

(थ) अयि असम्बद्धपरिहासशीले ! अपेहि।

(द) सखि मदयन्तिके ! मालतीप्रियसखी खलु ईदृशान्येव मन्त्रयितुं जानाति।

(ध) सखि ! मा खल्वेवं मालतीमुपहस।

(न) सखि मदयन्तिके ! प्रक्ष्यामीदानीं किमपि, यदि न मे विश्वासभङ्गं करोषि।

---

(थ) मदेति। तत्कम्भोगस्य चुम्बनान्तत्वात् तत्परभाविसुरतविषयकः परिहासो- ऽयमसम्बद्ध एवेति भावः।

(द) बुद्धेति। मालत्याः प्रियसखी लवङ्गिका। ईदृशान्येव एवमश्लीलताद्योतकान्येव वचनानि, मन्त्रयितुं वक्तुम्। येन हि लवङ्गिका मालत्या इत्थं दृष्टवती, सुतरां तत्तुलनया त्वां प्रत्यपि तथैव पृच्छतीति भावः।

(ध) मदेति। एवमित्थम्। मालत्या नितान्तनिर्दोषत्वादिति भावः। एतेन मालत्यामतीव पक्षपाती व्यज्यते।

(१)···मालदीपिअसही एव्व इमं ईरिसाइं जाणाइ इति पाठभेदः।

(२) क्वचित् 'सहि !' इति पाठो नास्ति।

(३) भणिस्सं दाणिं दे किं वि इति कुत्रचित् पाठः।

मद। (१) किं पुणो वि पणअभङ्गेण किआवराहो अअं जणो, जेण एव्वं मन्तेसि। पिअसहि! तुमं लवङ्गिआ अ (२) सम्पदं मे हिअअं। (प)

बुद्ध। जइ दे कधं वि मअरन्दो पुणो वि दंसणपहं ओदरदि, तदा किं तुए कादव्वं? (फ)

मद। एक्केक्कावअव णिसग्ग-लग्ग-णिच्चले (३) चिरं लोअणे णिव्वावइस्सं। (ब)

---

(प) किं पुनरपि प्रणयभङ्गेन कृतापराधोऽयं जनो येनैवं मन्त्रयसि प्रियसखि! त्वं लवङ्गिका च साम्प्रतं मे हृदयम्।

(फ) यदि ते कथमपि मकरन्दः पुनरपि दर्शनपथमवतरति, ततः किं त्वया कर्तव्यम्?।

(ब) एकैकावयव-निसर्ग-लग्न-निश्चले चिरं लोचने निर्वापयिष्यामि।

(प) मदेति। प्रणयभङ्गेन विश्वासभङ्गेन विश्वासभङ्गपूर्वकत्वदनुकृताकरणेनेत्यर्थः। पुनरपीत्यनेन क्वचिदुपरचिताकृतौ मकरन्दाय स्वयमात्मार्पणानरोधो-मदयन्तिकया न रचित इति प्रतीयते। हृदयं हृदयरूपा। सुतरां युवयोर्वाक्य-मिदानीमवश्यमेव मया पालनीयमिति भावः।

"प्रणयः प्रेम्णि विश्रम्भे याच्ञाप्रसरयोरपि।" इति विश्वः।

(ब) मदेति। एकैकावयवे वदनादौ, निसर्गेण तदीयानुपमसौन्दर्य्यवशात्

(१) क्वचित् 'सहि!' इति सम्बोधनमत्र दृश्यते।

(२) तुमं लवङ्गिकाआ सह, इत्यपि पाठः।

(३)…षीसङ्गलग्गणिच्चले, इति पाठोऽपि।

बुद्ध । अध सो मम्मह-बलक्कारिदो जइ (१) कन्दप्पजणणिं तुमं रुक्किणिं विअ पुरिसोत्तमो सअंगाहसाहसेण सहधम्म-आरिणिं (२) करेदि, तदो कीरिसी (३) पड़िवत्ती ? । (भ)

मद । निःश्वस्य । कीस मं एत्तिअं आसासेसि (४) । (म)

(भ) अथ स मन्मथबलात्कारितो यदि कन्दर्पजननीं त्वां रुक्मिणीमिव पुरुषोत्तमः स्वयंग्राहसाहसेन सहधर्मचारिणीं करोति, ततः कीदृशी प्रतिपत्तिः ।

(म) केन मामेतावदाश्वासयसि ।

स्वभावेन, लग्न दृढ़संसक्ते, निश्चले नितान्तदर्शिलाभात्तेनैव चिरं स्थिते, लोचने मदीये चक्षुषी, निर्वापयिष्यामि शीतलीकरिष्यामि । एतेन महती दर्शनलालसा व्यज्यते ।

(भ) बुद्धेति । मन्मथस्य बलात्कारो बलेन प्रवृत्तिः सञ्जातोऽस्येति मन्मथबलात्कारितः नितान्तकामाविष्टः स मकरन्दः । पुरुषोत्तमः कृष्णः पुरुषश्रेष्ठश्च । कन्दर्पजननीं भाविप्रद्युम्नमातरम् कामविकारहेतुभूताञ्च । स्वयंग्राहसाहसेन अपहरणेन । सहधर्मचारिणीं पत्नीम् । ततस्तदा । प्रतिपत्तिः तव कर्त्तव्यता । तादृशापहरणे तव सम्मतिरस्ति नवेत्यर्थः ।

अत्र पूर्णोपमाऽलङ्कारः । दाक्षिण्यं नाम नाट्यलक्षणञ्च । यथा दर्पणे—

"दाक्षिण्यं चेष्टया वाचा परचित्तानुवर्त्तनम् ।"

(म) मदेति । आत्मनो मन्दभाग्यतया तादृशव्यापारोऽसम्भव एवेति मत्वा विषादेन निःश्वस्येत्यर्थः । मम मन्दभाग्यतया तन्न भविष्यतीति भावः । एतेन तादृशव्यापारे महीयानभिप्रायोऽस्तीति व्यज्यते ।

(१) क्वचित् 'सो वि' इति पाठोऽस्ति । जइ इति तु नास्ति ।

(२) सअंगाह सहधम्मचारिणिं इति पाठान्तरम् । (३) का इत्यपि पाठः

(४) किं एत्तिअं आसासिदह्मि इति पाठभेदः ।

बुद्ध। सहि ! कहेहि। (य)

लव। कहिदं ज्जेव्व हिअआवेअसूअएहिं दोहणीसासेहिं। (र)

मद। सहि ! का अहं इमस्स तेण ज्जेव्व अत्ताणं पणीकदुअ दुट्ठ सद्दूल-कबलादो कड्ढिअस्स तस्स ज्जेव्व सकेरअस्स अत्तणो सरीरस्स (१)। (ल)

(य) सखि ! कथय।

(र) कथितमेव हृदयावेगसूचकैर्दीर्घनिःश्वासैः।

(ल) सखि ! का अहमस्य तेनैवात्मानं पणीकृत्य दुष्ट-शार्दूल-कवलादाकृष्टस्य तस्यैव स्वकीयस्य आत्मनः शरीरस्य।

अतएवात्र मनोरथो नाम नाट्यलक्षणं "मनोरथस्त्वभिप्रायस्योक्तिर्भङ्ग्यन्तरेण यत्।" इति लक्षणात्।

(र) लवेति। कथितमेव सूचितमेव। अस्यास्तादृशापहरणे सम्मतिरस्त्येवेति भावः।

(ल) मदेति। तेनैव मकरन्देनैव। आत्मानं स्वदेहम्। आकृष्टस्य आकृष्य रक्षितस्य। तस्यैव मकरन्दस्यैव स्वकीयस्य स्वत्वास्पदीभूतस्य। आत्मनो मम। अहं का अपि तु कापि न, न स्वामिनीत्यर्थः। अस्य मद्देहस्य मकरन्दस्वामिकत्वात् परकीयवस्तुनः परेण विनियोगासम्भवात् अस्यापहरणे मया किं वक्तव्यमिति भावः। एतेन मदयन्तिकया स्वल्वात्मनैवात्मा मकरन्दाय प्रतिपादित इति ध्वन्यते।

(१)…मिसुकबलणादो…परएअस्स किङ्करस्स…इति पाठभेदाः

लव। सरिसं क्खु (१) महाणुभावदाए। (व)

बुद्ध। सुमरेहि (२) एदं वअणं। (श)

मद। कहं दुदिअ-आम-विच्छेद-पड़हो (३) ताड़िअदि।

---

(व) सदृशं खलु महानुभावतायाः।

(श) स्मरैतद्वचनम्।

(ष) कथं द्वितीययामविच्छेदपटहस्ताड्यते। तद् यावत् नन्दनं निभृत-मपादपतनं वा अभ्यर्थ्य मालत्या उपस्थानं कल्पयिष्यामि।

---

(व) लवेति। महानुभावताया उपकारिणः प्रत्युपकारकरणकामनावत्त्वात् महाशयचित्तवृत्तिप्रभावशालितायाः सदृशम् अनुरूपं योग्यमिदमुक्तमिति शेषः।

(श) बुद्धेति। एतत् मकरन्दकर्तृकात्मापहरणस्वीकारसूचकं वचनं, स्मर सर्वदा मनसि रक्ष। तथाच तत्समये समुपस्थिते स्वयमेव न प्रतिक्षेप्या इति भावः। तथा बुद्धरक्षितया मकरन्दमुद्दिश्यापीदमुक्तम्। तथाच हे मकरन्द! एतत् मदयन्तिकाया अपहरणस्वीकारसूचकं वचनं स्मर, स्मृत्वा चेदानीमेवैनामपहर्त्तु-मुद्यमं विधेहीति ध्वनिना सङ्केतितम्। अतएवेदमङ्कं पताकास्थानम्। तथाच दर्पणे—

"सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः।
पताकास्थानकमिदं प्रथमं परिकीर्त्तितम्॥"

(ष) मदेति। द्वितीययामस्य रात्रेर्द्वितीयप्रहरस्य विच्छेदो वियोगः अतीतता तस्य पटहः तत्सूचकध्वनिकारिणी ढक्का ताड्यते वाद्यते। तत्तस्मात् अनिद्रावशादस्वास्थ्य

---

(१) क्वचित् 'क्खु' इति नास्ति। (२) सुमरेसि इति भिन्नः पाठः

(३) कधं दुदीअ-पहर-नाड़िआ-विच्छेद-पड़हो इति पाठान्तरम्।

ता जाव णान्दणं णिब्भच्छिअ सपादपड़णं वा अब्भत्थिअ (१) मालदीए उवरि अणुऊलइस्सं। इत्युत्थातुमिच्छति (२)। (ष)

मकरन्दो गृहमहाजा तां हस्ते (३)। गृह्णाति।

मद। सहि मालदि! पड़िबुद्धामि (४)। विलोक्य सहर्षं समाध्वसञ्च। अम्मो! अरं उज्जीव्व किं पि एदं वट्टदि (५)। (स)

(ष) सखि। मालति। प्रतिबुद्धामि। अहो। अन्यदेव किमप्येतद्वर्त्तते।

सम्भवे नेदानीमवावस्थानस्यानौचित्यादित्यर्थः। निर्भर्त्स्य "ईदृशीं सुशीलां मालतीं प्रति तवायमन्याय्यो व्यवहार" इत्यं तिरस्कृत्य। गृहमतस्य ऊत्थातुनिर्भर्त्सन मन्याय्यमित्यभिप्रायाह—सपादेति। वा अथवा, सपादपतनं तस्य पादयोः पतित्वेत्यर्थः, अभ्यर्थ्य 'आर्ये! मालतीं प्रति प्रसन्ना भव' इति सानुनयं याचित्वा।

(स) मदेति। प्रतिबुद्धा जागरिता। प्रियतमदर्शनात् सहर्षं, कन्यया पुरुषस्पर्शानौचित्यात् परावगमसंशयाद्वा ससाध्वसं सभयम। अहो आश्चर्यम्। अन्यदेव मनसावधारितान्मालतीशयनाद्भिन्नमेव, किमपि असम्भवत्वादनिर्वचनीयम्, एतत् प्रकृतमस्य मकरन्दस्य शयनम।

---

(१) सं पादपड़णं अब्भत्थिअ इत्यपि पाठः।

(२) इत्युत्थाय गन्तुमिच्छति इति पाठोऽपि। (३) हस्ते न, इति क्वचित् पाठः।

(४)···विप्पबुद्धासि इति पुस्तकान्तरे पाठः।

(५) अम्महे असं एदं एब्बं वट्टइ इति पाठभेदः।

मक। रम्भोरु ! संहर भयं, चमते विसोढु-
मुत्कम्पितं स्तनभरस्य न मध्यभागः (१)
इत्थं त्वयैव कथितप्रणयप्रसादः
सङ्कल्पनिर्वृतिषु संस्तुत एष दासः ॥ २ ॥

बुद्ध। मदयन्तिकामुखमुन्नमय्य संस्कृतमाश्रित्य। (ह)

---

रम्भोरिविति। हे रम्भोरु ! कदलीस्तम्भसमानोरुयुगले ! भयं मद्भीतिं संहर परित्यज। येन हि मध्यभागः अतीव कृशस्तव कटिदेशः, स्तनभरस्य कुचभारस्य उत्कम्पितं भयवशात् सञ्चलनं विसोढुं न चमते न शक्नोति। भयं वा कथमित्याह—इत्थमिति। इत्थं पूर्व्वोक्तप्रकारेण, त्वयैव स्वयमेव कथितः प्रणयः प्रेमैव प्रसादोऽनुग्रहो यस्मिन् सः। तथा सङ्कल्पनिर्वृतिषु गाढानुरागात् बहुषु सङ्कल्पजनितसमागमसुखेषु संस्तुतः मयैव सह तत्तत्समागमात् परिचितः, एष इत्यात्मनिर्देशः दासस्तव किङ्करः। सुतरां बहुपरिचितत्वात् दासत्वाच्च मद्भयं न करणीयमिति भावः।

अत्र प्रथमवाक्यार्थं प्रति द्वितीयतृतीयवाक्यार्थयोर्हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। तथा मकरन्देनात्मनो दासत्वार्थं नियोगात् संक्षेपो नाम नाट्यलक्षणम्।

"संक्षेपो यत्तु संक्षेपादात्माऽन्यार्थे प्रयुज्यते।" इति लक्षणात्।

"संस्तवः स्यात् परिचय" इत्यमरः। वसन्ततिलका वृत्तम् ॥ २ ॥

(ह) बुद्धेति। स्नेहातिशयसूचनापूर्वकमह्लादितेषितार्थद्योतनार्थं मुखोन्नमनं, सखीरूपत्वाच्च संस्कृताश्रयणमिति बोध्यम्।

---

(१)...चमते विकार-मुत्कम्पिनः स्तनतटस्य न मध्यभागः। इति पाठभेदः

प्रेयान् मनोरथसहस्रवृतः स एष
सुप्त-प्रमत्त-जनमेतदमात्यवेश्म ।
प्रौढं (१) तमः कुरु कृतज्ञतयैव भद्र
मुत्क्षिप्त-मूकमणिनूपुरमेहि यामः ॥ ३ ॥

प्रेयानिति । यः पूर्वं मनोरथसहस्रवृतः प्रियतमत्वेन बहुतराभिलाषविषयीकृतः स एष सन्निहितः, प्रेयान् प्रियतमो मकरन्दो वर्त्तते । सुतरामनेन सह प्रस्थाने दोषस्य नास्त्येव, प्रत्युत चिरतराशायाः पूरणमेव स्यादिति भावः । ननु प्रस्थानकाले यदि कश्चिदावध्नीयादित्याह—सुप्तेत्यादि । एतत् अमात्यस्य नन्दनस्य वेश्म पुरं, सुप्ताः केचिन्निद्रिताः प्रमत्ता विवाहोत्सवमत्ततया अपरे जागरिता अपि विषयान्तरव्यग्रमनवहिता जना यत्र तादृशं वर्त्तते । अतस्तस्य किमपि भयं नास्तीति भावः । ननु सततसावधाना नगरपालकास्त्वां निगृह्णीयुरित्याह—प्रौढमिति । प्रौढं तमो गाढान्धकारो विद्यते । तेन हि नितान्तघने: प्रस्थाने तेभ्योऽपि शङ्का नास्तीति भावः । अतएव कृतज्ञतयैव शार्दूलकवलात् परित्राणेनोपकारिणः प्रत्युपकारदानेनैव भद्रं स्वकीयमङ्गलं कुरु । एतदाचरणेनात्ममङ्गलम् उपकारिणः प्रत्युपकारश्च कृतः स्यादिति भावः । अतएव उत्क्षिप्तौ उत्तोलितौ, तेन च मूकौ निःशब्दौ नूपुरौ यस्मिन् कर्म्मणि तद्यथा तथा एहि आगच्छ । याम इतो वयं प्रतिष्ठामहे ।

अत्र प्रस्थानसौकर्य्यं प्रति बहुकारणोपन्यासात् समुच्चयोऽलङ्कारः ।

वसन्ततिलका वृत्तम् ॥ ३ ॥

(१) अन्धमिति पाठान्तरम् ।

मद। सहि बुद्धरक्खिदे! कहिं उण (१) अम्हेहिं गन्तव्वं ? । (च)

बुद्ध। जहिं ज्जेव्व मालदी गदा (२) । (क)

मद। किं णिव्वुत्तसाहसा मालदी ? । (ख)

बुद्ध। अधइं । अस्सं अ, तुमं भणामि। "का अहं इमस्स" इत्यादि पठति। (ग)

मदयन्तिका। अश्रूणि पातयति। (घ)

(च) सखि ! बुद्धरक्षिते ! कस्मिन् पुनरस्माभिर्गन्तव्यम् ?

(क) यस्मिन्नेव मालती गता।

(ख) किं निर्वृत्तसाहसा मालती ?।

(ग) अथकिम्। अन्यच्च, त्वं भणसि।

(ख) मदेति। निर्वृत्तं निष्पन्नं साहसं माधवेन समभित: प्रस्थानरूपं साहसकार्य्यं यया: सा।

(ग) बुद्धेति। अथकिं ततस्त्वं निर्वृत्तसाहसैवेत्यर्थ:। सुतरां तत्सलज्जया त्वमपि तथैवानुतिष्ठेत्यभिप्राय:। भणसीत्यतीतसामीप्ये वर्त्तमाना। इत: पूर्व्वमेव त्वं "का अहं इमस्स" इत्यादि भणितवतीत्यर्थ:। तथाच मकरन्देन समभिदानीमित: प्रस्थाने तत् परिपालितं भवेदिति भाव:।

(घ) मदेति। अश्रूणि पातयति, पित्रादिना सम्प्रदानकाल इवावापि चिराय बान्धववियोगावधारणादिति बोध्यम्। एतेनात्मदानं सम्पादितमिति सूचितम्।

(१) पुणो दाणिं इत्यपि पाठ:। (२) गदा इति पाठ: क्वचिन्नास्ति।

बुद्ध। महाभाग! दिण्णं क्खु अत्ताणं पिअसहीए पडिवज्जस्स (१)। (ङ)

मक। अद्यार्जितं विजितमेव मया किमन्य-
दद्योत्सवः फलवतो मम यौवनस्य।
यन्मे प्रसादसुमुखेन समुद्यतेयं (२)
देवेन बान्धवधुरा मकरध्वजेन ॥ ४ ॥

(ङ) महाभाग! दत्तं खल्वात्मानं प्रियसख्या प्रतिपद्यस्व।

(ङ) बुद्धेति। प्रियसख्या मदयन्तिकया, दत्तं पित्रादिना सम्प्रदानकाल इव अश्रुपातनप्रदर्शनेन स्वयमेव तुभ्यमर्पितम्। प्रतिपद्यस्व गृहाण।

अद्येति। अद्य मया आर्जितं सबलम् अष्टरत्नादित्यर्थः विजितम् अन्यैः प्रियतमाया लाभादुत्कर्षो लब्धः। अन्यत् किं वाच्यमित्यर्थः। तथा अद्य फलवतः प्रियतमाया लाभादेव सकलस्य मम यौवनस्य उत्सवो महानन्दो वर्त्तते। यत् यस्मात् प्रसादसुमुखेन स्वतोऽनुग्रहप्रसन्नेन मकरध्वजेन मन्मथेन देवेन, इयं मह्यं मदयन्तिकायाः प्रतिपादनरूपा बान्धवधुरा बान्धवभारो बन्धुकर्त्तव्यं समुद्यता समुद्यम्य कृता, मन्मथेनैव नियोज्य सम्बन्धिभिः दत्तेत्यर्थः।

अत्र यच्छब्दस्योत्तरवाक्यगतत्वेन तच्छब्दानपेक्षणान्न विधेयाविमर्शदोषः।

बान्धवस्य धुरिति बान्धवधुरा "धुरनक्षे"ति राजादित्वादप्रत्यये सति स्त्रियामाप्। वसन्ततिलका वृत्तम् ॥ ४ ॥

(१) दिण्णा क्खु सम्मं अप्पा पिअसहीए इति पाठान्तरम्।

(२) यस्य प्रसादसुमुखेन समुद्धृतेव, इति पाठभेदः।

तदनेन पक्षद्वारेण निर्गत्य (१) साधयामः। (च)

निभृतं परिक्रामन्ति। (छ)

मक। अहो! निशीथ-निःसञ्चाररमणीयता राजमार्गस्य। तथाहि सम्प्रति (२)। (ज)

प्रासादानामुपरि वलभीतुङ्गवातायनेषु
भ्रान्त्वावृत्तः (३) परिणत (४)-सुरागन्धसंस्कारगर्भः।

(च) तदिति। पक्षद्वारेण खड्किकया। साधयामो गन्तव्यस्थानं गच्छामः "खड्किका (स्त्री) पक्षद्वारं। खिड्किद्वार इति भाषा।" इति शब्दकल्पद्रुमः। "प्रायेण धातवः साधिगमः स्थाने प्रयुज्यते।" इति साहित्यदर्पणः।

(छ) निभृतमिति। निभृतं मन्दं मन्दं परिक्रामन्ति अज्ञातं पादक्षेपं कुर्वन्ति।

(ज) अहो इति। निशीथे अर्द्धरात्रे निःसञ्चारेण प्राणिमात्रस्यैव सञ्चाराभावेन सञ्चौभावेनेत्यर्थः। रमणीयता सौन्दर्य्यम्।

प्रासादानामिति। प्रासादानां सौधानाम् उपरिभागेषु या वलभ्यश्चूड़ाभूता गृहाः, तासां तुङ्गवातायनेषु उच्चगवाक्षजालेषु भ्रान्त्वा मध्ये परिभ्रम्य आवृत्तः पुनर्निःसृतः। अतएव परिणतसुरायाः पानार्थं तत्रानीतस्य परिपक्वमद्यस्य, गन्धेन सौरभेण, संस्कारो वासना सुगन्धीकृतता गर्भे मध्ये यस्य सः। माल्यानां यूनामुपकरणभूतानां कुसुममालानाम्, आमोदः सौरभमस्यास्तीति माल्यामोदी। तथा मुहुः पुनः पुनः, उपचितो गृहीतः, स्फीतो विपुलः कर्पूरस्य वासः सौरभं येन स तथोक्तो वायुः, यूनां तरुणानाम् अभिमतवधूनाम् अभिलषितरमणीनां सन्निधानं तासु वलभीषु सम्भोगार्थं

(१) निर्गत्य इति पाठः क्वचिन्नास्ति। सम्प्रति हि, इति क्वचित् पाठः।

(३) प्राप्तामोदः भ्रान्त्यावृत्तः, इति पाठभेदौ। (४) परिचित...इत्यपि पाठः

माल्यामोदो मुहुरुपचित-स्फीत (१)-कर्पूरवासो
वातः (२) पूनामभिमतवधूसन्निधानं (३) व्यनक्ति ॥ ५ ॥

इति निष्क्रान्ताः सर्वे ।

——*——

# इति नन्दनविप्रलम्भो नाम (४) सप्तमोऽङ्कः ॥ (क)

—*—

सामीप्यमुपस्थितिं व्यनक्ति सूचयति । सम्भोगोपकरणानां सुरा-माल्य-कर्पूराणां सौरभादानादिति भावः ।

अत्राभिमतवधूसन्निधानसूचने वातेः सुरामोदवत्त्वं माल्यामोदित्वं स्फीत-कर्पूरवासत्वञ्च हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ।

"गन्धाक्ते वल्लभो चन्द्रशाले सौधाद्‌वेश्मनि ।" इति रभसः । "वासः (पुं) सुगन्धिः ।" इति शब्दकल्पद्रुमः ।

मन्दाक्रान्ता वृत्तम् ॥ ५ ॥

(क) इतीति । नन्दनेन करगीहि मालतीपरिणये मालती तु माधवेनैव परि-णीता, प्रत्युत पुनर्नन्दनभगिनी मालतीपतिवयस्येन मकरन्देन कलितेन निष्काम्य नीतेति नन्दनस्य विप्रलम्भो वञ्चना यत्रेति नन्दनविप्रलम्भः । अहो ! यदि पुनरयं कविः स्वयमेवात्र दान्तया सुदीर्घसमासयोजनया सामाजिकान् सम्पूर्णरसास्वादं नाभव-यिष्यत्, तदा खल्वयं नन्दनवञ्चनाङ्कः परमकौतुकावहो भविष्यत ।

इति श्रीहरिदाससिद्धान्तवागीशविरचितायां मालतीमाधवटीकायां
भावमनोहरायां सप्तमाङ्कविवरणं समाप्तम् ॥ ७ ॥

(१) ···स्फार··· इति पाठान्तरम् । (२) वात इत्यपि पाठः ।

(३) अभिनववधूसन्निधानमिति पाठोऽपि । (४) अयं पाठः क्वचिन्नास्ति

# अष्टमोऽङ्कः

ततः प्रविशत्यवलोकिता।

अव०। वन्दिदा मए णन्दणावाम (१) पडिणिउत्ता भअवदो। ता जाव मालदोमाहवसआसं गच्छामि। परिक्रम्य। एदे दे णिव्वत्तित (२) गोह्मदिअसावसाणमज्जणा दोहिआतड-(३) सिलातलं अलङ्करन्ति मालदोमाहवा(४)। ता उवसप्पामि (५)। इति निष्क्रान्ता। (क)

(क) वन्दिता मया नन्दनावासप्रतिनिवृत्ता भगवती। तद् यावन्मालतीमाधवसकाशं गच्छामि। एतौ तौ निर्वर्त्तितग्रीष्मदिवसावसानमज्जनौ दीर्घिकातटशिलातलमलङ्कुरुतो मालतीमाधवौ। तदुपसर्पामि।

(क) अवेति। भगवती कामन्दकी। निर्वर्त्तितं निष्पादितं ग्रीष्मदिवसावसानस्य मज्जनं स्नानं याभ्यां तौ। अलङ्कुरुत एकत्रोपवेशनेन शोभयतः।

इतः प्रभृति नवमाङ्कसमाप्तिपर्य्यन्तो विमर्षसन्धिः। यथा साहित्यदर्पणे—

"यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः।

शापाद्यैः सान्तरायश्च स विमर्ष इति स्मृत ॥"

(१)···णन्दणावसथ:···इति पाठभेदः। (२) परिणिउत्तिद···इत्यपि पाठः।

(३) दोहिआतीर···इति पाठोऽपि।

(४) क्वचित् 'मालदोमाहवा' इति पाठो नास्ति।

(५) ता जाव उपसप्पिस्सं इति पाठान्तरम्।

## प्रवेशकः ॥ (ख)

ततः प्रविशत उपविष्टौ मालतीमाधवौ, अवलोकिता च (१) ।

माध । स्वगतं सानन्दम् । **वर्त्तते (२) हि मन्मथप्रौढसुहृदो-निशीथस्य यौवनश्रीः । तथाहि ! (ग)**

तथाचात्र विवाहरूपमुख्यफलस्योपायीभूतो मालतीमाधवयोरन्योन्यानुरागः एकत्र-गमनादिना गर्भसन्धित आधिक्येन प्रकाशितः, स च कपालकुण्डलाकर्तृकमालत्य-पहरणेन रक्षिभटैर्माधवादीनामाक्रमणेन च सान्तराय इति ।

नन्दनसम्प्रदानकमालतीदानविषयकराजानुरोधलक्षणविघ्ने सत्यपि कामन्दकी-प्रभृतीनामसाधारणचेष्टया तस्य पराहतत्वात् निश्चितप्राप्तिलक्षणा नियताप्तिर्नाम कार्य्यावस्था निरूपिता । तथाचोक्तम्—

"अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता ।"

प्रसङ्गेनोत्पन्नं संक्षिप्तञ्च रक्षिभटानामाक्रमणलक्षणं चरितं प्रकरी नामार्थ-प्रकृतिः । यथा—

"प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता
प्रकरी नायकस्यास्ति न स्वकीयं फलान्तरम् ॥"

अन्ये च अपवादादीनि त्रयोदशाङ्गानि यथास्थानं प्रदर्श्य लक्षणानि वक्ष्यामः ।

(ख) प्रवेशक इति । अत्र तु वन्दिवचनादिवाक्येन वृत्तकथांशनिदर्शनं, तद्-गावद्धियादिभिश्च वक्ष्यमाणकथांशनिदर्शनमनुसन्धेयम् ।

(ग) माधवेति । मन्मथस्य प्रौढसुहृदः प्रधानसहायस्य । अत्र हि विशेषतः सुविधालाभेन प्रायेण यूनां रमणोद्योगात्, "सानन्दमाध्वसाः सुरतव्यवसायिन्यो भवन्ति" इति निशीथाधिकारे वात्स्यायनकामसूत्रादितो भावः ।

---

(१) ततः प्रविशतो मालतीमाधवौ । उपविष्टावलोकिता च, इति क्वचित् पाठः ।

(२) माधवः । सानन्दम् । वर्द्धते — इति भिन्नः पाठः ।

दलयति परिशुष्यत् प्रौढतालीव पाण्डु-(१)
स्तिमिरनिकरमुद्यन्नैन्दवः प्राक्प्रकाशः ।
वियति पवनवेगादुन्मुखः केतकीनां
प्रचलित इव मान्द्रो मन्दमन्दं (२) परागः ॥ ३ ॥

ततकथं वामशीलां मालतीमुपावर्त्तये । भवत्वेवं तावत् ।

प्रकाशम् । प्रिये मालति ! प्रत्यग्र-मायन्तन स्नान-विशेष-

दलयतीति । परिशुष्यन्ती आतपतापेन शुष्कतां गच्छन्ती, प्रौढा परिणता ताली (ताड़ियाल इति यस्य भाषा) तालीपत्रमिव पाण्डुः श्वेतवर्णः, उद्यन् उदयमानः, इन्दोरयमित्यैन्दवः चन्द्रसम्बन्धीयः, प्राचि पूर्वदिग्भागे प्रकाश उदयः, अथवा प्राथमिकविकाशः, तिमिरनिकरम् अन्धकारसमूहं दलयति नाशयति । तथा पवनवेगात् वियति आकाशे उन्मुखः ऊर्द्धमुखः सान्द्रो घनीभूतः पुञ्जीभूत इत्यर्थः मन्दमन्दं प्रचलितः अल्पाल्पचलनकारी केतकीनां कुसुमानां पराग इव प्रतीयत इति शेषः ।

अत्र प्रथमे श्रौत्युपमा, द्वितीयार्द्धे तु वाच्या भावाभिमानिनी जात्युत्प्रेक्षा, इत्यनयोर्मिथो नैरपेक्ष्यात् संसृष्टिः ।

एतेन तदानीं कृष्णपक्षीया अष्टमी तिथिरासीदिति प्रतीयते तत्रैवार्द्धरात्रे चन्द्रोदयात् । मालिनी वृत्तम् ॥ ३ ॥

(घ) ततकथमिति । वामशीलां प्रतिकूलस्वभावाम् आलापनेऽपि विमुखीमित्यर्थः । उपावर्त्तये प्रसादयामि । प्रत्यग्रेण अभिनवेन अचिरकृतेन सायन्तनस्नानेन अतीव ग्रीष्मतापात् रात्रावपि स्नानान्तरेणेत्यर्थः, अन्यथा दिवावसानकृतपूर्व्वस्नानजलानां तस्मिन्निशीथसमये स्थित्यसम्भवात् वक्ष्यमाणः श्लोको न सङ्गच्छत इत्यनुसन्धेयम् । विशेष-

(१)...तालीविपाण्डुरिति पाठान्तरम् । (२) स्फारस्फारमिति क्वचित् पाठः

शीतलां भवतीं निदाघसन्तापशान्तये किञ्चिद्विज्ञापयामि तत् किमित्यन्यथैव मां सम्भावयसि (१)। (च)

निश्च्योतन्ते सुतनु ! कबरीबिन्दवो यावदेते
यावन्मध्यः स्तनमुकुलयोर्नार्द्रभावं (२) जहाति।
यावत् सान्द्रप्रतनुपुलकोद्भेदवत्यङ्गयष्टि-
स्तावद् गाढं वितर सकृदप्यङ्कपालीं प्रसीद ॥ २ ॥

---

शीतलामतीव शीतलीभूतां भवतीं त्वां निदाघसन्तापशान्तये स्वाभाविकमदीयग्रीष्मतापोपशमाय। तथाच स्नानेन शीतलीभूतैरङ्गैर्मामालिङ्ग। मदीयं निदाघसन्तापमपशमयेत्यभिप्रायः। अन्यथैव इत्थमनुग्राह्यमपि अननुग्राह्यमेव। सम्भावयसि मन्यसे। नैतदुचितमिति भावः। "चाहं प्रातस्त्वाहं साय"मित्यादिवत् सायंशब्दोऽत्र रात्रिपरः।

निश्च्योतन्त इति। हे सुतनु ! शोभनशरीरे ! एते दृश्यमानाः कबरीबिन्दवः स्नानस्खलितबन्धकेशाग्रवर्त्तिनो जललवाः, यावत् निश्च्योतन्ते निपतन्ति। यावच्च स्तनमुकुलयोर्मध्यो मध्यदेशः तत्रैव निम्नतया स्नानजलावस्थानादिति भावः, आर्द्रभावं न जहाति न परित्यजति आर्द्र एव तिष्ठतीत्यर्थः। यावच्च अङ्गयष्टिः तव देहयष्टिः, सान्द्राणां घनानां प्रतनूनां सूक्ष्माणां पुलकानां स्नानशैत्येन जातानां रोमाञ्चानाम् उद्भेदवती आविर्भावशालिनी वर्त्तते। तावत् गाढं यथा स्यात्तथा अङ्कपालीमालिङ्गनं वितर देहि; प्रसीद आलिङ्गनदानेनैव प्रसन्ना भव। ईदृशनिदाघसन्तापे आर्द्रदेहेनैवालिङ्गने निरतिशयमेव सुखमुत्पद्यतेति भावः।

अत्र स्तनौ मुकुलाविव, अङ्गं यष्टिरिवेत्युपमितसमासाश्रयणात् लुप्तोपमाद्वयस्य

(१)···अत्रभवतीं निदाघतापशान्तये विज्ञापयामि···मित्यमन्यथैव··· इति पाठभेदाः।

(२)···स्तनयुगलयोर्नार्द्रभावं, स्तनमुकुलयोरार्द्रभावं, इति पाठभेदौ।

अयि निरनुक्रोशे ! (१) (ङ)

> जीवयन्निव ससूढ़साध्वस-
> स्वेदबिन्दुरधिकण्ठमर्प्यताम्।
> बाहुरैन्दवमयूखचुम्बित-
> स्यन्दिचन्द्रमणिहारविभ्रमः ॥३॥

---

परस्परनैरपेक्ष्यात् संसृष्टिरलङ्कारः। तथा परस्मैपदिनः श्रुतधातोरात्मनेपदप्रयोगात् च्युतसंस्कारतादोषः, स च 'निश्चातन्ते' इत्यत्र 'विस्रंसन्ते' इति पाठेन समाधेयः।

"अङ्कपाली परीरम्भः धावीविन्दिकर्याः स्त्रियाम्।" इति मेदिनी।

मन्दाक्रान्ता वृत्तम् ॥ २ ॥

(ङ) अयीति। निरनुक्रोशे ! निर्दये ! मदनपीड़िते मय्यनुग्रहाकरणादिति भावः।

नन्वनुग्रहेण किं करणीयमित्याह—जीवयन्निवेति। जीवयन्निव कामपीड़या गतप्रायजीवितं मां समुच्छ्वासयन्निव स्थितः, ससूढ़ा धृताः साध्वसस्वेदबिन्दवः भयजनितघर्मबिन्दवो येन सः, तथा इन्दोश्चन्द्रस्य इमे इति ऐन्दवाः, तैर्मयूखैः किरणैः चुम्बितः संस्पृष्टः अतएव स्यन्दी जलस्रावी यश्चन्द्रमणिहारः चन्द्रकान्तमणिनिर्मितो हारः तस्य विभ्रम इव विभ्रमो विलासो यस्य स तथोक्तः, बाहुर्भुजः अधिकण्ठं मम गलदेशे अर्पितो स्थाप्यताम्। तेनैव मां प्रति दया कृता स्यादिति भावः।

अत्र लुप्तोपमाऽलङ्कारः, जीवयन्निवेति क्रियोत्प्रेक्षया सङ्कीर्य्यते।

कण्ठे इत्यधिकण्ठं विभक्त्यर्थे अव्ययीभावः। चन्द्रकरस्पर्शे चन्द्रकान्तमणेर्जलं स्रवतीति प्रवादः। उत्तररामचरितेऽपि प्रायेणाविकलोऽयं श्लोकः सीतामुद्दिश्य रामेण पठितः। किन्तु तत्र 'ससूढ़साध्वस'त्यत्र 'समाश्वसयन्'निति भावभेदः।

रथोद्धता वृत्तम् ॥ ३ ॥

---

(१) अयि निरनुरोधे ! अयि मालति ! निरनुक्रोशे ! इति पाठभेदौ।

अथवा दूरे तावदेतत्। कथमालापसंविभागस्याप्यभाजनमयं जनो भवत्याः ? (च)

दग्धं चिराय मलयानिलचन्द्रपादै-
र्निर्वापितं न तु परिरभ्य वपुर्न नाम ।
आमत्त-कोकिलरुतव्यथिता तु हृद्या-
मद्य श्रुतिः पिबतु किन्नरकण्ठि ! वाचम् ॥४॥

(च) ईदृश्याः खल्वालिङ्गनसम्भवो नेति मन्यमान आह—अथवेति। एतस्मिन् काले वाक्समर्पणात्मकमालिङ्गनं, दूरे तावदास्तामिति भावः। आलापसंविभागस्यापि आलापभागस्यापि विभजनस्याप्यभाजनमपात्रमित्यर्थः।

दग्धमिति। मलयानिलचन्द्रपादैर्नितान्तमदनोद्दीपकैर्दक्षिणसमीरणचन्द्रकिरणैः चिराय बहुकालादवधि दग्धं वपुर्मदीयं शरीरं परिरभ्य आलिङ्ग्य न निर्वापितं त्वया न निर्वृतिं नीतम् इति न तु नाम, वरमभ्युपगच्छामीत्यर्थः। तादृशभाग्याभावात्तव न मे विशेषाग्रह इति भावः। तु किन्तु, हे किन्नरकण्ठि ! किन्नरसमानकण्ठस्वरशालिनि ! आमत्तानां मदमत्तानां कोकिलानां रुतेन रवेण व्यथिता नितान्तमदनोद्दीपकतया पीडिता श्रुतिर्मम कर्णः हृद्याम् चिराद्भीष्टां वाचं तव वाक्यामृतं पिबतु तत् पीडाशान्तये निगिरतु, किञ्चिदालपेत्यर्थः। अत्र त्वापत्तिर्न करणीयेति भावः।

अत्र मलयानिलचन्द्रपादैर्दग्धस्य आमत्तकोकिलरुतेन व्यथितेत्यापाततो विरोधभानाद्विरहेण च समाधानाद्विरोधाभासोऽलङ्कारः।

निश्वसितन्त इत्यादावेतदन्ते सन्दर्भे अनुनयो नाम नाट्यलक्षणम्। तदुक्तं—

"वाक्यैः स्निग्धैरनुनयो भवेदर्थस्य साधनम्।"

"नाम प्रकाश्यसम्भाव्यकुत्साभ्युपगमेषु च।" इति विश्वः।

अव। उपसृत्य (१)। **अइ अणिव्वहणसीले! जं दाणिं मुहुत्त-मेत्तन्दरिअ माहवा (२) दुम्मणाअन्ती मह पुरदो भणासि। "चिराअदि अज्जउत्तो, अवि णाम किअच्चिरेण पेक्खिस्सं, जेण विच्छड्डिआसेससद्दसा (३) विसुमरिद-णिमेस-विग्घ ओलोअन्ती णव्व भणिस्सं दिउणाबेट्टण-परिरम्भेण सम्भावइस्संत्ति। सम्पदं अस्सिं दे अअं परिणामो (४)। (छ)**

(छ) अयि अनिर्वहणशीले! यदिदानीं मुहूर्त्तमात्रान्तरितमाधवा दुर्म्मनायमाना मम पुरतो भणसि। चिरयति आर्य्यपुत्रः, अपि नाम कियच्चिरेण प्रेक्षिष्ये, येन विच्छर्दिताशेषसाध्वसा विस्मृतनिमेषविघ्नमवलोकयन्ती एवं भणिष्यामि, द्विगुणावेष्टन-परिरम्भेण सम्भावयिष्यामि इति। साम्प्रतं तस्मिन् ते अयं परिणामः।

"अभीष्टेऽभीप्सितं हृद्य" मित्यमरः।

वसन्ततिलका वृत्तम् ॥ ४ ॥

(छ) अयेति। न विद्यते निर्वहणम् अभीष्टनिर्वाह आकाङ्क्षापूरणमिति यावत् यस्मिन् तदनिर्वहणं शीलं स्वभावो यस्यास्तत्सम्बोधनम्। चिराकाङ्क्षितं माधवं प्राप्यापि अपूर्णाकाङ्क्षानुत्फुल्लचित्ते! इत्यर्थः। कयाचिदनुपपत्त्या खल्वयं मालत्या सूष्णीम्भाव इति निश्चित्येदं सम्बोधनम्। मुहूर्त्तमात्रम् अत्यल्पसमयमात्रम् अन्तरितो व्यवहितो माधवो यस्याः सा, दुर्म्मनायमाना विरहेण खिद्यमाना। चिरयति चिरं

(१) क्वचित् 'उपसृत्ये'ति नास्ति। (२) मुहूत्तं अदिट्ठमाहवा इति भिन्नः पाठः।

(३) जेण पुणो विअड्ढिआसेस-सज्झसा इत्यपि पाठः।

(४) दिउणिआवेट्टण परिरम्भणेण सम्भावइस्सं, सम्भावअसि, स एव्व अअं परिणामो इति पाठभेदाः।

मालती। सासूयमिव तां पश्यति। (ज)

माध। स्वगतम्। **अहो! भगवतीप्रधानान्तेवासिन्याः सर्वतोमुखं वैदग्ध्यं, अक्षयश्च सुभाषितरत्नकोषः (१)।** प्रकाशम्। **प्रिये! सत्यमवलोकिता वदति। (झ)**

मालती। तिर्य्यङ् मूर्द्धानं चालयति। (ञ)

करोति विलम्बते। कियच्चिरेण कियता विलम्बेन। विच्छर्द्दितं त्यक्तम् अशेषसाध्वसं सकलभयं यया सा तथोक्ता सती। विस्मृतस्त्यक्तो निमेष एव विघ्नो यस्मिन् कर्म्मणि तद् यथा तथा अवलोकयन्ती निर्निमेषं प्राणेश्वरं पश्यन्तीत्यर्थः। एवमित्थं "प्राणेश्वर! इतः परं मामपहाय कदापि न त्वया गन्तव्यं" ईदृशं किञ्चिदित्यर्थः। तथा द्विगुणावेष्टनमेव आलिङ्ग्यमानस्य पृष्ठदेशे बाहुद्वयस्याकर्षणेन स्थापनात् द्विगुणपरिवेष्टनरूपो यः परिरम्भ आलिङ्गनं तेन सम्भावयिष्यामि समादरिष्ये। इति भणामीत्यन्वयः। अयं आलापस्यापि परित्यागहेतुः, परिणामः शेषव्यवहारः। एतदतीवानुचितमिति भावः।

(ज) मालतीति। सासूयं रहस्यप्रकाशनात् भ्रुकुटीप्रभृतिबहिरसूयाव्यञ्जकभङ्गीसहितम्। इवशब्दप्रयोगेण च प्रियतमान्तिके परेण स्वकीयानुरागप्रकटनादवन्तःमानन्दमिति द्योतितम्।

(झ) माधेति। भगवतीप्रधानान्तेवासिन्याः कामन्दक्याः प्रधानशिष्याया अवलोकितायाः सर्वतोमुखं सकलदिग्गामि, वैदग्ध्यं चातुर्य्यम्। सुभाषितानि मधुरवचनान्येव रत्नानि तेषां कोष आधारः। अन्यथैवमङ्गीकारसम्भवेनेति भावः।

(ञ) मालतीति। तिर्य्यङ्मूर्द्धचालनं उक्तनिषेधद्योतनार्थम्।

---

(१) माधवः। अपवार्य्य। अहो! भगवत्याः प्रथमान्तेवासिन्या···अक्षय्य· सुभाषितरत्नसञ्चारसंस्करणम्···इति पाठान्तरम्।

माध। शापितासि मया लवङ्गिकावलोकितयोर्जीवितेन यदि वाचा न कथयसि (१)। (ट)

माल। णाहं किंवि जाणामि। इत्यर्द्धोक्ते लज्जां नाटयति। (ठ)

माध। अहो! अनवसितार्थमन्थरस्य वचसश्चारुता (२)। सहसा निरूप्य। अवलोकिते! किमेतत्। (ड)

(ठ) नाहं किमपि जानामि।

---

(ट) माधवेति। शापितासि शपथं कारितासि। वाचा स्पष्टवाक्येन। तदानीमपि स्वयं मालत्याः साक्षात् प्रियतमो जातो न वेति संशयात् सर्व्वाधिकप्रियतमत्वेन ज्ञातयोः केवलयोर्लवङ्गिकावलोकितयोर्जीवितेनैवोक्तम्। वाचेत्यनेन केवलशिरश्चालनादि सङ्केतेनाभिप्रायप्रकाशनमनभिप्रेतमिति सूचितं, तेन न पौनरुक्त्यदोषः।

(ठ) मालतीति। 'नाहं किमपि जानामि,' 'येन भवन्मनोरञ्जयामि' इति समुदायस्य पूर्ववाक्यमर्द्धमेव स्यादत उक्तमित्यर्द्धोक्त इति। अर्द्धोक्त इति भावे क्तः। प्रमादेन प्रस्फुटालापात् मुखनमनादिना लज्जामभिनयतीत्यर्थः। एतेन "तेन च निर्बध्यमाना नाहमेवं ब्रवीमीत्यनवसितार्थं वचनं ब्रूया"दिति वात्स्यायनकामसूत्रमनुसृतमिति बोध्यम्।

(ड) माधवेति। न अवसितः परिसमाप्तोऽर्थो यस्य तच्च तत् मन्थरं मन्दं शनैरुच्चरितञ्चेति तस्य, वचसः नाहमित्यादिवाक्यस्य, चारुता स्वरमाधुर्य्येण मनोहरता।

(१) माधवः। शापितासि मम लवङ्गिकावलोकितयोश्च जीवितेन, यदि मे न कथयसि। इति पाठान्तरम्।

(२) अहो! अनवसितार्थरम्यवचसश्चारुता, इति पाठभेदः।

वाष्पाम्भसा मृगदृशो विमलः कपोलः-
प्रक्षाल्यते सपदि, राजत एष यस्मिन्।
गण्डूषपेयमिव कान्त्यमृतं पिपासु-
रिन्दुर्निवेशितमयूखमृणालदण्डः ॥ ५ ॥

माध। सहि! किं दाणिं उच्छलिद-वाहुप्पीलं रोदिस्सदि? (१)। (ढ)

(ढ) सखि! किमिदानीं उच्छलितवाष्पोत्पीडं रुद्यते

वाष्पेति। वाष्पाम्भसा अश्रुजलेन विमलः स्वभावत एव निर्म्मलः मृगदृशो हरिणेक्षणाया अस्या मालत्याः कपोलः एको गण्डः सपदि सहसा नाहमित्यादिवचनोच्चारणमात्रमेवेति तात्पर्य्यम प्रक्षाल्यते प्लाव्यते ; एतत् किं किंकारणकमिति गद्येनान्वयः। यस्मिन् कपोले, गण्डूषेण प्रसृत्या आकुञ्चितपाणिनेत्यर्थः (हानिरकोष इति यस्य प्रसिद्धिः) पेयं पानयोग्यम एतेन कान्त्यमृतस्याधिक्यं सूचितं, कान्तिः कपोलशोभैव अमृतं पीयूषं तत्, पिपासुः पातुमिच्छुरिव सन् निवेशितः कपोले निहितः, मयूखः स्वकीयकिरण एव मृणालदण्डः स्वकीयमूर्त्ते कान्त्यमृताकर्षणसाधनीभतमृणाललता येन स तथोक्तः। एष इन्दुश्चन्द्रः, राजते प्रतिविम्बितमूर्त्तितया विभाति। यथा कश्चित् कटाहादौ नलं निवेश्य दूरत एव ततो दुग्धादिकमाकृष्य पिवति तद्वदिति भावः। एतेन तदानीं मालती दक्षिणकपोलं चन्द्राभिमुखीकृत्य वामकपोलन्तु वामपाणितले विन्यस्य स्थितवती, माधवस्तु दक्षिणपार्श्वगत आसीदिति प्रतीयते।

अत्र साङ्गरूपकक्रियोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करोऽलङ्कारः। यच्छब्दस्योत्तरवाक्यगतत्वेन तच्छब्दानपेक्षणान्न वाक्यगतविधेयाविमर्शदोषः।

"...गण्डूषो मुखपूरणे। गजास्ये च कराङ्गुल्या प्रसृत्यां प्रमितेऽपि च।" इति हैमः। वसन्ततिलकावृत्तम् ॥ ५ ॥

(१) वाहुप्पीलमय्यरं रोदिसि, इति भिन्नः पाठः।

माल। जनान्तिकम् (१)। सहि! केच्चिरं लवङ्गिआए असण्णिहाणदुक्खं अणुभविस्सं। पउत्तिलाहो वि से दुल्लहो (२)। (ण)

माध। अवलोकिते! किं नाम? (३)। (त)

अव। तुह ज्जेव सवधोवण्णासेण (४) एसा लवङ्गिअं सुमरिअ ताए पउत्तिलाहणिमित्तं (५) उत्तम्मदि (६)॥ (थ)

(ण) सखि! कियच्चिरं लवङ्गिकाया असन्निधानदुःखमनुभविष्यामि। प्रवृत्तिलाभोऽप्यस्या दुर्लभः।

(थ) तवैव शपथोपन्यासेन एषा लवङ्गिकां स्मृत्वा प्रवृत्तिलाभनिमित्तमुत्ताम्यति।

(ढ) अवेति। उच्छलितः अतिशयेनोद्गतः वाष्पोत्पीड़ः अश्रुप्रवाहो यस्मिन् कर्म्मणि तद् यथा तथा। किं कथम्।

(ण) मालतीति तस्या लाभस्तु दूर एवास्तां, प्रवृत्तिलाभोऽपि वृत्तान्तप्राप्तिरपि।

(त) माधेति। किं नाम, इयं ब्रवीतीति शेषः।

(थ) अवेति। शपथोपन्यासेन 'शापितासि' इत्यादौ त्वदुक्तशपथप्रयोजकवचने लवङ्गिकानामोच्चारणेनेत्यर्थः। प्रवृत्तिलाभनिमित्तं नन्दनभवने लवङ्गिकायाः किं वृत्तमिति वृत्तान्तप्राप्तिनिमित्तम्।

(१) क्वचित् 'जनान्तिक'मिति पाठो नास्ति।

(२) केच्चिरं पिअसहीए···पउत्ति लम्भो वि से सुदुल्लहो त्ति इति क्वचित् पाठः

(३) किं नामैतत्, इत्यपि पाठः। (४) वअणोवण्णासेण इति पाठोऽपि।

(५) पउत्तिणिमित्तं इति भिन्नः पाठः। (६) उत्तम्मिअदि, इति वा पाठः।

माध। नन्विदानीमेव (१) मया कलहंसः प्रहितः। गच्छ, त्वं प्रच्छन्नमुपगम्य नन्दनावमथं प्रवृत्तिमुपलभस्वेति (२)।

माधवम्। अवलोकिते! अपि नाम बुद्धरक्षिताप्रयत्नः फलोदर्क एव (३) मदयन्तिकां प्रति स्यात्?। (द)

अव। कुदो सन्देहो महाणुभाअस्स (४)। महाभाअ! पढमं ज्जेव सद्दूलणहरालङ्किदस्स मअरन्दस्स मोहविराममहूसवं णिवेदअन्तीए मालदीए, भअवदीए णिउत्तेण भवदा समं

---

(ध) कुतः सन्देहो महानुभावस्य?। महाभाग! प्रथममेव शार्दूलनखराल-ङ्कृतस्य मकरन्दस्य मोहविराममहोत्सवं निवेदयन्त्यै मालत्यै भगवत्या नियुक्तेन भवता

(द) माधेति। प्रच्छन्नं गुप्तं यथा स्यात्तथा गुप्तभावेनेत्यर्थः। फलम् अस्मादभि-लषितं मकरन्देन सह मदयन्तिकाया निर्गमनरूपम् उदर्कं उत्तरफलं यस्य सः। बुद्धरक्षितायाः प्रयत्नेन मदयन्तिका मकरन्देन सह किमिदानीं निर्गच्छेदित्यर्थः।

(ध) अवेति। महानुभावस्य तव, कुतः सन्देहः मकरन्देन सह मदयन्तिकाया निर्गमनं प्रति कथं संशयः अपि तु कुतोऽपि नेत्यर्थः। बुद्धरक्षितायाः परमचातुर्या-दवश्यमेव मदयन्तिका मकरन्देन सह निर्गमिष्यतीति भावः। मोहविरामो मूर्च्छाभङ्ग एव महोत्सवस्तम्। भगवत्या कामन्दक्या, नियुक्तेन वचोभङ्ग्या प्रेरितेन। समं सह। प्रसादीकृतम् अनुग्रहेण दत्तम्। मदयन्तिकालाभेन मकरन्दस्य मदयन्तिकालाभ-

---

(१)...एव हि इति भिन्नः पाठः।

(२) प्रच्छन्नः सन्निपत्य नन्दनावासप्रवृत्तिमुपलभस्वेति, पाठान्तरम्।

(३) सफलोदर्क एव, इति पाठोऽपि। (४) क्वचित् अयं पाठोऽपि न दृश्यते।

जीविदेण हिअअं पमादीकिदं। जइ को वि तुमं मदअन्तिआलाहेण (१) सम्पदं वड्ढावेदि, किं तस्स पारितोसिअं भविस्सदि ?। (ध)

माध। अनुयोक्तव्यमेवानुयुक्तोऽस्मि (२)। हृदयमवलोक्य। इयमस्ति मालतीप्रथमदर्शनाभिषङ्गसाक्षिणः (३) कामकाननालङ्कारस्य लक्ष्मीवतः केसरतरोः प्रसवमाला। (न)

मम जीवितेन हृदयं प्रसादीकृतम्। यदि कोऽपि त्वां मदयन्तिकालाभेन साम्प्रतं वर्द्धयति, किं तस्य पारितोषिकं भविष्यति ?।

---

हृत्ता-श्रावणेन। किं तस्य पारितोषिकं भविष्यति, तस्मै त्वया किं पारितोषिकं दातव्यमित्यर्थः।

(न) माधेति। अनुयोक्तव्यमेवानुयुक्तोऽस्मि प्रष्टव्यमेव पृष्टोऽस्मि। मम मालतीलाभस्येव मकरन्दस्य मदयन्तिकालाभस्यापि परमानन्दहेतुत्वादिति भावः। हृदयावलोकनं केवलवकुलमालास्थितिनिर्देशार्थम्। मालत्याः प्रथमदर्शनेन योऽभिषङ्ग आसक्तिः, तस्य साक्षिणः समीपे तदुद्यञ्जकभावादिनिष्पत्तेर्द्रष्टुः। कामकाननालङ्कारस्य मदनोद्यानभूषणीभूतस्य, लक्ष्मीवतः कुसुमपल्लवादिशोभाशालिनः सोपधलादन्तुः। केसरतरोर्वकुलवृक्षस्य प्रसवमाला कुसुममाल्यम्। अस्मिन् खलु जगति वितयमिदं मम प्रियं, जीवनं, हृदयम्, इयं वकुलमाला च ; तत्राद्ययोर्मालत्या एव दत्तत्वाद्वकुलमालामात्रमवशिष्यत इति भावः।

(१)···मोहविच्छेअं···मदअन्तिआलाहो···इति पाठभेदौ।

(२)···अनया इत्यधिकः पाठः। (३)···साक्षिणी इति पाठभेदः।

प्रेम्णा मद्ग्रथितेति या प्रियसखीहस्तोपनीताऽनया (१)
विस्तारि-स्तन-कुम्भ-कुड्मलभरोत्सङ्गेन सम्भाविता।
सम्प्राप्ते त्वथ (२) पाणिपीड़नविधौ मां प्रत्यपेताशया
या मय्येव लवङ्गिकेत्यवगते सर्वस्वदायीकृता (३) ॥६॥

ननु तुच्छा बकुलमाला कथं प्रियत्वे जीवनहृदययोः साम्यमर्हतीत्याह प्रेम्णेति। या बकुलमाला, अनया मालत्या, मद्ग्रथिता मया गुम्फिता इति हेतोः, प्रियसख्या लवङ्गिकाया हस्तेन उपनीता आनीता सती आनीयेत्यर्थः, प्रेम्णा स्नेहेन विस्तारिणी-र्विशालयोः स्तनकुम्भकुड्मलभरयोः भारवत् कुचकलसमुकुलयोः, उत्सङ्गेन क्रोड़ेण अभ्यन्तरेणेत्यर्थः कण्ठे समारोपणात् लम्बमानतया कुचयोरप्यभ्यन्तरावस्थापनेनेति तात्पर्य्यं, सम्भाविता सम्मानिता समादृता। तु किन्तु, अथ अनन्तरं, पाणिपीड़न-विधौ नन्दनेन सह विवाहकर्म्मणि सम्प्राप्ते राजानुरोधादुपस्थिते सति मां प्रति मत्प्राप्तिविषये अपेताशया निराशया सत्या, लवङ्गिकेत्यवगते इयं लवङ्गिका इति स्वयमवधृते, मय्येव स्वस्थाने दण्डायमानीभवितुं मां प्रति नयनेङ्गितं विधाय लवङ्गिकायामपसृतायां तत्स्थाने दण्डायमानीभूतस्य मम कण्ठे इत्यर्थः, पश्चाद्गता घटनेयमनुसन्धेया, या च बकुलमाला सर्वस्वदायीकृता स्वसर्वस्ववदपुनर्दत्ता। सुतरा-मियं बकुलमाला जीवनाधिकाया मालत्याः सर्वस्वरूपत्वात् मम प्रियत्वे जीवनहृदययोः साम्यमर्हत्येव ; तथा च इमामेव बकुलमालां मकरन्दस्य मदयन्तिकालाभनिष्पत्ति-निवेदकाय पारितोषिकत्वेन दास्यामीति भावः।

अत्र स्तनयोस्तुङ्गत्वे कुम्भसादृश्यं तथा सत्यपि पुनर्वर्द्धिष्णुत्वे च कुड्मलसादृश्य-मिति बोध्यमिति लुप्तोपमाऽलङ्कारः।

(१) प्रेम्णा मद्ग्रथितेति वा प्रियसखीहस्तोपनीतेति वा, इति पाठान्तरम्।
(२) सम्प्राप्तेऽप्यथ, इत्यपि पाठः। (३) सर्वस्वदायः कृता, इति क्वचित्पाठः।

लव। सहि मालदि ! वल्लहा क्खु दे इग्रं वउलमाला, तदो अवहिदा भव, मा दाणिं एसा सहसा ज्जेव्व परहत्थगदा भविस्सदि त्ति (१)। (प)

माल। पिअं पिअसही मे उवदिसदि (२)। (फ)

लव। कधं पदसद्दो विअ। (ब)

(प) सखि मालति ! वल्लभा खलु ते इयं वकुलमाला, ततोऽवहिता भव, मा इदानीमेषा सहसैव परहस्तगता भविष्यतीति।

(फ) प्रियं प्रियसखी मे उपदिशति।

(ब) कथं पदशब्द इव।

दीयत इति दाय: कर्म्मणि घञ्, तथा च "अप्यधिकाराच्च दायो दत्त:, लाभो लब्ध" इति कातन्त्रवृत्तौ दुर्गसिंह:। "दीयत इति व्युत्पत्त्या दायशब्द" इति दायभागे जीमूतवाहनश्च। ततश्च सर्वस्वमिव दायो दत्ता इति सर्वस्वदाय:, असर्वस्वदाय: सर्वस्वदाय: कृतेति सर्वस्वदायीकृता सर्वस्ववद्दत्तेत्यर्थ:।

शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

(प) लवेति। अवहिता मकरन्दस्य मदयन्तिकालाभप्राथमिकनिवेदनं प्रति सावधाना भव, तं वृत्तान्तमवगम्य त्वमेव प्रथमं निवेदयेरित्यर्थ:। तथा सति किं स्यादित्याह मेत्यादि।

(फ) मालतीति। यत: प्रियमुपदिशति, अतस्तदेव मया कर्त्तव्यमिति भाव:।

(ब) लवेति। श्रूयत इति शेष:।

---

(१)···एसा दाणिं परस्सहत्थं गमिस्सदि इति भिन्न: पाठ:।

(२)···अवलोइदे ! उभअं वि तुमं एव्व उवदिस, इत्यधिक: क्वचित् पाठ:।

माधव। नेपथ्याभिमुखमवलोक्य। **अये! कलहंसः सम्प्राप्तः (१)।**

माल। **दिट्ठिआ वड्ढसि मदअन्तिआलाहेण (२)। (भ)**

माध। सहर्षं परिष्वज्य। **प्रियं नः।** आत्मनः कण्ठादवतार्य्य बकुलमालां ददाति (३)। (म)

अव। **णिव्वूढ़ो क्खु (४) भअवदीए सम्भावणाभारो बुद्धरक्खिदाए। (य)**

---

(भ) दिष्ट्या वर्द्धसे मदयन्तिकालाभेन।

(य) निर्व्यूढः खलु भगवत्याः सम्भावनाभारो बुद्धरक्षितया।

(भ) मालतीति। मदयन्तिकालाभेन मकरन्दस्येति शेषः। पुनर्वकुलमालालाभाभिलाषोत्सुकेन कलहंसमुखान्मदयन्तिकालाभवृत्तान्तश्रवणविलम्बमप्यसहमानाया मालत्याः सम्भावनाविशेषेणेदं निवेदनमिति बोध्यम्।

(म) माधेति। परिष्वज्य तन्निवेदितवार्त्तां मालतीमालिङ्ग्य। प्रियम् इदं मदयन्तिकाया लाभनिवेदनमिति शेषः। ददाति मालत्याः कण्ठे समर्पयति। इदमेव तत्र पारितोषिकदानमिति ज्ञेयम्।

(य) अवेति। बुद्धरक्षितया, भगवत्याः कामन्दक्याः सम्भावनाभारः मकरन्दस्य मदयन्तिकालाभे दौत्यनियोगगुरुत्वं, निर्व्यूढो निर्वाहं नीतः सफलीकृतः। मकरन्दस्य मदयन्तिकालाभनिष्पत्तिरिति भावः।

(१) कलहंसकः प्राप्तः, इत्यपि पाठः।

(२) मदअन्तिआलम्भेण इति क्वचित् पाठः।

(३)···इति बकुलमालां कण्ठे ददाति, इति पाठान्तरम्।

(४) क्वचित् 'क्खु' इति नास्ति।

माल। सहर्षम्। अम्महे! (१) पिअसही लवङ्गिआ वि दीसइ। (२)। (र)

सर्वे। उत्तिष्ठन्ति (३)। (ल)

ततः प्रविशन्ति सम्भ्रान्ताः कलहंस-मदयन्तिका बुद्धरक्षिता-लवङ्गिकाः (४)। (व)

लव। परित्ताअदु परित्ताअदु महाभाओ (५)। अद्धमग्गे क्खु णअररक्खि-पुरिसाभिओओ मअरन्दस्स जादो। तदो तक्कालमिलिदेण कलहंसएण महिदा (६) अह्मे अणुप्पेसिदाओ (७)। (श)

(र) अहो! प्रियसखि लवङ्गिका दृश्यते।

(श) परित्रायतां परित्रायतां महाभागः। अर्द्धमार्गे खलु नगररक्षिपुरुषाभियोगो मकरन्दस्य जातः। ततस्तत्कालमिलितेन कलहंसकेन महिता वयमनुप्रेषिताः।

---

(र) मालति। अम्महे इति शौरसेन्यां भाषायां हर्षविस्मयसूचकमव्ययम्।

(ल) सर्वे इति। उत्तिष्ठन्ति मदयन्तिकालाभहेत्वाश्रवणौत्सुक्येन दण्डाय-माना भवन्ति।

(व) तत इति। सम्भ्रान्ता वित्रस्ताः।

(श) अर्द्धेति। नगररक्षिपुरुषैः (पाहारार्थीआला. इति येषां प्रसिद्धिः

---

(१) अह्महे इति भिन्नः पाठः।

(२) इत्युत्तिष्ठति, कुत्रचित् पाठोऽयम्। (३) क्वचिदयं पाठो नास्ति।

(४) ततः प्रविशति सम्भ्रान्ता कलहंसी बुद्धरक्षिता लवङ्गिका मदयन्तिका चेति वा पाठः।

(५) परित्ताअदु महाभाओ इतिमात्रः पाठोऽपि।

(६) समं इति भिन्नः पाठः। अणुप्पेसिदाओ त्ति, इति पाठोऽपि दृश्यते।

कल। जधा इदोमुहागदेहिं अम्हेहिं कलअलो सुदो, तधा तक्केमि, अस्सं वि पारक्किअं बलं उवागदं त्ति (१)। (ष)

मालत्यवलोकिते। हद्धी। समं एव्व हरिसुव्वेअ-संभेदो उवागदो (२)। (स)

माध। सखि मदयन्तिके ! स्वागतम्। अनुगृहीतमस्मद्गृहं

(ष) यथा इतोमुखागतैरस्माभिः कलकलः श्रुतः तथा तर्कयामि अन्यदपि पारक्यं बलमुपागतमिति।

(स) हा धिक् ! सममेव हर्षोद्वेगसम्भेद उपनतः।

---

अभियोगः सङ्घर्षः। तत्काले तस्मिन् सङ्घर्षसमये मिलितेन यदृच्छया अस्माभिः सह सङ्गतेन। अनुप्रेषिताः मकरन्देन तत्संवादप्रदानार्थं तवान्तिकं प्रेरिताः।

(ष) कलेति। पारक्यं परकीयं। "इयं देशी। पार इति लोके" इति नान्यदेव।

(स) मालेति। समं युगपदेव, हर्षोद्वेगयोः सम्भेदः सम्मिलनम्, उपनत उपस्थितः। मदयन्तिकालाभेन हर्षः, राजभटैर्मकरन्दाक्रमणेन चोद्वेग इति बोध्यम्।

(ह) माधेति। स्वागतं सुखेनागमनं कृतं किमिति काकुः। अनुगृहीत मागमनेनेति भावः। अनुनयं ननुशब्दः। स्वस्थाः सुस्थचित्ता उद्वेगरहिताः।

(१)...महन्तो जोधकलकलो···पारक्कअ···उवगदं त्ति, इति पाठभेदाः।

(२)···माल। अवलोइदे। हद्धी ! हद्धी ! समकालं ज्जेव्व···उवगदो, इति पाठान्तराणि।

भवत्या। ननु स्वस्था भवन्तु भवत्यः। एकाकिनोऽपि बहुभिरभियोग इति यत्किञ्चिदेतद्वयस्यस्य (१)। पश्य (२)। (ह)

हरेरतुलविक्रमप्रणयलालसस्याहवे (३)
स एव (४) भवति कणत्कररुहप्रचण्डः सखा।
स्फुरत्करट-(५) कोटर-स्खलितदानसिक्तानन-
द्विपेश्वरशिरःस्थिरास्थि-(६) दलनैकवीरः करः ॥७॥

नन्वेकाकिनो मकरन्दस्य बहुभिराक्रमणादनिष्टाशङ्कायां सत्यामपि कथं वयं सुस्थचित्ता भवाम इत्याह एकाकिनोऽपीति। एकाकिनोऽपि सहायहीनस्यापि वयस्यस्य मकरन्दस्य बहुभिरभियोग आक्रमणमित्येतत् यत् किञ्चित् तुच्छं न गण्यमित्यर्थः। कथमेतदित्याह पश्येति।

हरेरिति। आहवे युद्धे, अतुलविक्रमे निरूपमपराक्रमप्रकाशे प्रणयः सन्तोष अतएव लालसा महानभिलाषो यस्य तस्य हरेः सिंहस्य, कणद्भिः गजास्थिप सङ्घर्षात् शब्दायमानैः कररुहैर्नखैः, प्रचण्डो भयङ्करः, तथा स्फुरतोः रोषवशात् स्पन्दमानयोः करटयोर्गण्डयोः कोटरात् रन्ध्रात् स्खलितेन निःसृतेन दानेन मदजलेन सिक्तमाननं मुखं यस्य तस्य, द्विपेश्वरस्य गजेन्द्रस्य शिरसो मस्तकस्य स्थिराणि दृढानि यानि अस्थीनि तेषां दलने मर्द्दने एकोऽद्वितीयो वीरः शूरः समर्थ इत्यर्थः, स प्रसिद्धः, करः स्वकीयपाणिरेव सखा सहायो भवति, न तु

(१)···स्वागतमिह्येहि।···ननु स एवासौ, माभूत् परिभवोद्वेगः, किमित्यस्वस्था भवती, एकाकिनो बहुभिरभियोग इति न किञ्चिदेतद्वयस्यस्य, इति क्वचित् पाठः।
(२) क्वचित् 'पश्य' इति पाठो नास्ति। (३)···प्रणयलालसः साहसे इति पाठः।
(४) स एष, इति भिन्नः पाठः। (५) स्फुटत्करट··· इति पाठोऽपि दृश्यते।
(६)···स्थितास्थि···इति पुस्तकान्तरे पाठः।

तदहमपि विक्रमानुरूपं विलसतः प्रियसुहृदः प्रत्यनन्तरो भवामि (१)। इति विकटं परिक्रामन् कलहंसकेन सह निष्क्रान्तः। (२)। (च)

अवलोकिता-लवङ्गिका-बुद्धरक्षिताः। अवि णाम अणाहदा पड़िणिअत्तिस्सन्ति एदे महाणुभाआ ? (३)। (क)

(क) अपि नाम अनाहतौ प्रतिनिवर्त्तिष्येते एतौ महानुभावौ ?।

शस्त्रान्तरापेक्षा वर्त्तत इत्यर्थः। यथा गजेन्द्रविमर्द्दने सिंहस्य पाणिरेव समर्थतया न शस्त्रान्तरापेक्षा, तथा मकरन्दस्य राजभटपराभवे स्वकीयभुजयोरेव सक्षमतया न सहायान्तरापेक्षा वर्त्तते; सुतरामस्याक्रमणस्य नगण्यत्वात् भवतः सुस्थचित्ता भवितुमर्हन्तीति भावः।

अतएवात्र समादप्रस्तुतात् प्रस्तुतस्य समस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः। तेन च मकरन्दस्यातीववाहुबलं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

"काकिभगण्डौ करटा"वित्यमरः। पृथ्वी वृत्तम्॥ १॥

(च) तदहमिति। विक्रमानुरूपं स्वकीयविक्रमयोग्यं विलसतश्चेष्टमानस्य युध्यमानस्य। प्रति प्रकाशभावेन, अनन्तरः अव्यवहितः सहाय इत्यर्थः।

"प्रकारे सम्भवे प्राहुः प्रधानसदृशे प्रति।" इति हलायुधः।

अत्र साहाय्यं नाम नाट्यालङ्कारः "साहाय्यं सङ्कटे यत् स्यात् सानुकूल्यं परस्य च।" इति लक्षणात्।

(१) ·· विक्रान्तिपूतं···प्रत्यनन्तरीभवामि, इति पाठभेदौ।

(२) परिक्रम्य इत्यपि पाठः।

(३) अवलोकितादयः। अवि णाम अपड़िहदा पड़िणिव्वट्टिस्सन्दि महाणुहावा इति क्वचित्पाठः।

माल। सहिओ अवलोइदा बुद्धरक्खिदाओ! तुरिअं गदुअ भअवदोए इमं (१) वुत्तन्तं णिवेदह। तुमं वि पिअसहि लवङ्गिए! तुरिअं विस्सवेहि अज्जउत्तं, जइ दाव तुह्माणं अह्मे अणुकम्पणोआ तदो अप्पमत्ता * परिक्कमधे त्ति। (ख)

मालतीमदयन्तिकावर्जं सर्वाः। तह। (ग) इति निष्क्रान्ताः (२)

माल। हद्धी हद्धी! ण आणोअदि लवङ्गिआ किं चिराअदि। कधं एत्तिआ वेला गमिअदु त्ति, भोदु, पिअसहि मदअन्तिए!

(ख) सख्यौ अवलोकिताबुद्धरक्षिते! त्वरितं गत्वा भगवत्या इमं वृत्तान्तं निवेदयतम्। त्वमपि प्रियसखि लवङ्गिके! त्वरितं विज्ञापय आर्यपुत्रं, यदि तावद्युष्माकं वयमनुकम्पनीयास्ततोऽप्रमत्ताः परिक्रामतेति।

(ग) तथा।

(घ) हा धिक्! हा धिक्! न ज्ञायते लवङ्गिका किं चिरयति। कथमेतावती

---

(ख) मालति। युष्माकमिति गौरवाद्बहुवचनम्। ततस्तदा, अप्रमत्ताः सावधानाः।

(घ) मालति। चिरयति प्रत्यावर्त्तितुं विलम्ब्यते। एतावती वेला लवङ्गिकायाः प्रत्यावर्त्तनपर्य्यन्तः समयः, कथं केन प्रकारेण गम्यतां मया अतिवाह्यता इत्यपि न ज्ञायत इत्यन्वयः। तयोर्महानुभावयोर्विपदाशङ्कावशादिति भावः। प्रतिनिर्गमनमार्गं प्रत्यावर्त्तनपथम् अनुगमिष्यामि। सत्वरं ततो वृत्तान्तमवगन्तुमिति भावः। परिक्रा-

(१) एदं इति पाठोऽपि। * अप्पमत्तमिति वा पाठः।

(२) निष्क्रान्ता अवलोकिता-लवङ्गिका-बुद्धरक्षिताः। इतिमात्रः पाठोऽपि दृश्यते

**पिअसहीए लवङ्गिआए पडिणिउत्तिमग्गं अणुगमिस्सं।**

परिक्रामति। साशङ्कम्। **फुरिदं वामेदरेण लोअणेण (१)** उपविशति। (घ)

प्रविश्य कपालकुण्डला (२)। **आः पापे! तिष्ठ। (ङ)**

---

वेला गम्यतामिति, भवतु, प्रियसखि मदयन्तिके! प्रियसख्या लवङ्गिकायाः प्रतिनिवृत्तिमार्गमनुगमिष्यामि। स्फुरितं वामेतरेण लोचनेन।

---

मति लवङ्गिकायाः प्रतिनिवृत्तिमार्गमनुगन्तुं पादक्षेपान् करोति। वामेतरेण दक्षिणेन। स्फुरितं स्पन्दितम्।

स्त्रीणां दक्षिणनयनस्पन्दनममङ्गलसूचकम्। यथा गर्गः—

"दक्षिणचक्षुःस्पन्दने बन्धुदर्शनमर्थलाभं वा। वामे हानिम्।" इत्यादिलक्षणः।

"विपर्ययेण विहितं सर्वं स्त्रीणां विपर्ययम्। इति मत्स्यपुराणम्

अतएव विपदाशङ्कया कियद्दूरं गत्वैवोपविशति, न तु गन्तुं प्रवृत्तापि गच्छति। सा च विपत् कपालकुण्डलाकर्तृकापहरणेनानुपदमेव व्यक्तीभवति।

(ङ) प्रविशति। पूर्ववैरानुसारेण सततमवसरमन्विष्यन्ती कपालकुण्डला तस्यां छायासु निशीथान्धकारे स्थितामेकाकिनीं मालतीं प्राप्यापहर्तुकामा समाक्रोशति आः पाप इति।

अत्र संफेटो नाम विमर्षसन्ध्यङ्गम् "संफेटो रोषभाषणम्"मिति लक्षणात्।

मुखसन्ध्युपक्षेपादीनि वाक्यङ्गान्यपहाय इतरेषामङ्गानामालङ्कारिकपाठपौर्वापर्यविपर्ययेण विन्यासोऽपि न दोषावह इति दर्पणकृतैवाभिहितमित्यसकृदुक्तम्।

---

(१) मालती। हद्धि! ण जाणीअदि कहं इअदी वेला अदिक्कमदि। होदु, पिअसहीए लवङ्गिआए पडिणिउत्तिमग्गं ओलोअन्ती चिट्ठिस्सं···। फुरिदं मे वामं अवामणअणेण।···इति पाठान्तरम्।

(२) ततः प्रविशति कपालकुण्डला। कपालकुण्डला···इति क्वचित् पाठः।

माल। सत्रासम्। हा अज्जउत्त! इत्यर्द्धोक्ते (१) वाक्स्तम्भं नाटयति।

कपा। सक्रोधम्। नन्वाक्रन्द नन्वाक्रन्द (२)। (छ)

त्वद्वत्सलः क्व स (३) तपस्विजनस्य हन्ता
कन्याविटः पतिरसौ परिरक्षतु त्वाम्।

---

(च) हा आर्य्यपुत्र!।

(छ) कपेति। सम्बोधने ननुशब्दः। आक्रन्द आत्मानं परित्रातुमाह्वय। क्रोधात् द्विरुक्तिः। न खल्वद्य परित्रातुं कथमपि शक्नुयादिति भावः। 'क्रन्दने रोदनाह्वाने" इत्यमरः।

त्वद्वत्सल इति। तपस्विजनस्य मम गुरोरघोरघण्टस्य हन्ता। एतेन सतत-पुरश्चरणादिव्यापृतस्योपवासकृशस्य तपस्विजनस्य हननेन न खल्वसौ वीरः, अपि तु महापातकीति व्यज्यते। त्वद्वत्सलः त्वां प्रति स्नेहवान् स माधवः क्व इदानीं कुत्र वर्त्तते। कन्याविटः कन्यायां कामकलाकोविदः। एतेनातीवनिन्दनीय इति ध्वन्यते। असौ तव पतिर्माधवः त्वां परिरक्षतु अत्रागत्य परित्रायताम्। न खलु कथमपि शक्नुयादिति भावः। श्येनस्य मांसभोजिनः पक्षिविशेषस्य अवपातेन आपतनेन उपस्थित्या चकिता वस्ता, वनवर्त्तिका वन्या वर्त्तिकापक्षिणीव (वाट्भार इति यस्याः प्रसिद्धिः) किं चेष्टसे कथमात्मानं परित्रातुमीहसे। नन्वित्यवधारणे चिरात् बहुकालात् परं कवलीकृतासि मया ग्रस्तासि धृतासीत्यर्थः। सुतरां कथमपि तवेदानीमव्याहतिर्नास्तीति भावः।

(१) क्वचित् 'अर्द्धोक्ते' इति पाठो नास्ति।

(२) कपालकुण्डला। सक्रोधहासम्। नन्वाक्रन्द आक्रन्द, इत्येवं पाठः क्वचित्।

(३) त्वद्वल्लभः क्व नु इति पाठान्तरम्।

श्येनावपातचकिता वनवर्त्तिकेव (१)

किं चेष्टसे, ननु चिरात् (२) कवलीकृतासि ॥८॥

यावच्छ्रीपर्वतमुपनीय लवशो लवश एनां निकृत्य दुःखमरणां करोमि। इति मालतीमाक्षिप्य निष्क्रान्ता (३)। (ज)

मद। अहं वि मालदीं उज्जेव्व अणुगमिस्सं। परिक्रम्य: सहि! मालदि! (४)। (झ)

---

(झ) अहमपि मालतीमेवानुगमिष्यामि। सखि मालति!।

अत्र श्रौतीयमुपमालङ्कारः। तथा वनवर्त्तिका चेष्टते, त्वम् चेष्टसे इति प्रक्रमभेदात् "त्वमेव राजसे तन्वि!" इत्यादिवत् भग्नप्रक्रमतादोषः, स च 'श्येनावपातचकिताऽटवि-वर्त्तिकावत् किं चेष्टसे,···इति पाठेन समाधेयः। ईदृशपाठे तु वर्त्तिकावदिति तृतीयान्तादतिः, त्वयेति च चेष्ट्यत इत्यस्य कर्त्तृपदम् गम्यम्। वनवर्त्तिकेति वनपदं निःसहायताद्योतनार्थम्। तपस्विजनस्य हन्तेत्यादिना दोषख्यापनादपवादो नाम विमर्षसन्ध्यङ्गम्। "दोषप्रख्याऽपवादः स्यात्" इति लक्षणात्।

वसन्ततिलका वृत्तम् ॥ ८

(ज) यावदिति। एनां मालतीं, लवशो लवशः कणं कणं कृत्वा निकृत्य छित्त्वा, दुःखं रोगादिना मरणादधिकदुःखजनकं मरणं यस्याः ताम्। आक्षिप्य बलादाकृष्य गृहीत्वा।

---

(१) श्येनावपातचकिता वनवर्त्तिकेव, इति पाठभेदः।

(२) किं नेचसे ननु मया···इति भिन्नः पाठः।

(३)···उपनीय प्रतिपर्व तिलशः एनां निकृत्य दुःखमारिणीं करोमि। इति मालतीमादाय निष्क्रान्ता। इति पाठोऽपि दृश्यते।

(४)···अणुवट्टिस्सं। पियसहि!। इति पाठभेदौ।

प्रविश्य लवङ्गिका। सहि मदअन्तिए! लवङ्गिआ क्खु अहं। (ञ)

मद। अवि (१) सम्भाविदो तुए महाणुभाओ ?। (ट)

लव। णहि णहि, सो क्खु उज्जाणवाड़-णिग्गमादो ज्जेव्व कलकलं सुणिअ माक्खेवाविद्ध विअड़ोरुदण्ड-णिब्भरं पधाविअ पराणीअं पविट्ठो। तदो पड़िणिउत्तह्मि मन्दभाइणी। सुणामि अ, घरं घरं गुणाणुराअ-काअरस्स पोरलोअस्स, "हा

(ञ) सखि मदयन्तिके! लवङ्गिका खल्वहम्।

(ट) अपि सम्भावितस्त्वया महानुभाव: ?।

(ठ) नहि नहि, स खलु उद्यानवाटनिर्गमादेव कलकलं श्रुत्वा साक्षेपाविद्धविकटोरुदण्डनिर्भरं प्रधाव्य परानीकं प्रविष्ट:। तत: प्रतिनिवृत्तास्मि मन्दभागिनी। शृणोमि च, गृहे गृहे गुणानुरागकातरस्य पौरलोकस्य "हा

---

(झ) मदेति। अनुगमिष्यामि। अत्र हि मालत्या एकाकिन्या: प्रस्थानस्य, ममापि चैकाकिन्या अवस्थानस्यानौचित्यादिति भाव:। तादृशनिविडान्धकारे दृष्टिप्रसाराभावेऽपि पदशब्दमाकर्ण्य मालत्या एव सम्भाव्यमानत्वात् तामेव सम्बोधयति सखि मालतीति।

(ञ) प्रविश्येति। लवङ्गिका खल्वहं, नतु मालतीति वाक्यशेष:।

(ट) मदेति। अपिशब्द: प्रश्ने। सम्भावित: मालत्यभिहितसंवादनिवेदनार्थं सम्प्राप्त:। "भूप्राप्तावात्मनेपदी" इति चौरादिकभूधातो: प्रयोगोऽयम्।

(ठ) लवेति। नहि नहि सम्भावित इत्यनेनान्वय:। तत्र कारणमाह स खल्वित्यादि। उद्यानवाटादुपवनप्राचीरात् निर्गमस्तस्मात् परमेवेत्यर्थ:।

---

(१) अइ! इत्यपि पाठ:।

**माहव ! महाभाग्र !, हा मग्ररन्द ! साहसिग्र !" त्ति परिदेवणाओ ! महाराओवि किल एदाणं मन्तिधीमाणं विप्पलम्भवुत्तन्तं सुणिअ सञ्जाअमच्छरावेओ तक्खणविसज्जिद-पोढ़-पाइक्कणिवहो चन्दादवसोहिद-सोह-सिहरट्ठिदो पेक्खदि त्ति मन्तीअदि (१)। (ठ)**

"माधव ! महाभाग ! हा मकरन्द ! साहसिक !" इति परिदेवनाः। महाराजोऽपि किल एतयोर्मन्त्रिदुहित्रोर्विप्रलम्भवृत्तान्तं श्रुत्वा सञ्जातमत्सरावेगः तत्क्षणविसर्ज्जितप्रौढ़पदातिकनिवहश्चन्द्रातपशोभित-सौधशिखरस्थितः प्रेक्षत इति मन्त्र्यते।

"वाटी मार्गे हतिस्थाने स्यात् कुटीवास्तुनोः स्त्रियां" मिति मेदिनी। आत्तपेण शत्रुसैन्यं प्रति भर्त्सनेन संहति मातपं यथा तथा अपविद्धाभ्यां विक्षिप्ताभ्यां विकटाभ्यां विशालाभ्याम् ऊरुदण्डाभ्यां निर्भरमतिमात्रं यथा स्यात्तथा प्रधाव्य अतीव द्रुतं गत्वा। परानीकं शत्रुसैन्यम्। मालतीदत्तसंवादं निवेदयितुमशक्तत्वादेवाहं मन्दभागिनीति भावः। परिदेवनाः विलापान्। "परिदेवना (स्त्री)··· विलाप" इति शब्दकल्पद्रुमः। विप्रलम्भवृत्तान्तं प्रतारणावार्त्तां गृहात् प्रवञ्चनापूर्वकनिष्काशनवृत्तान्तमित्यर्थः। सञ्जातमत्सरावेगः समुत्पन्नविद्वेषोत्तेजनः। तस्मिन्नेव क्षणे विसर्जितः माधवमकरन्दयोराक्रमणार्थं प्रेरितः, प्रौढो निपुणः पदातिक-

(१)···उज्जाणवाड़ीवनिग्गमादो··· सावकुंखवावविद्ध-विअड़-णिब्भरदण्ड-णिठ्ठुरं··· गुणाणुराअनिब्भरस्स, हा महाहुभाव ! हा माहव ! हा मअरन्द ! हा साहसिअ ! सिञ्जाअमच्छराधिक्खव वो···तक्खणविसज्जिआणेअ···चन्दादवेण सोहसिहराट्ठिदो इति पाठान्तराणि।

मद। हा हदह्मि मन्दभाइणी। (ड)

लव। सहि! मालदी उण कहिं ?। (ढ)

मद। सहि! (१) सा क्खु पढ़मं ज्जेब्ब दे मग्गं ओलोइदुं पसरिदा। पच्चा अहं तं ण पेक्खामि। सा णाम उज्जाण-गहणं (२) पविट्टा भवे। (ण)

(ड) हा हतास्मि मन्दभागिनी।

(ढ) सखि! मालती पुनः कस्मिन् ?।

(ण) सखि! सा खलु प्रथममेव ते मार्गमवलोकयितुं प्रसृता। पश्चादहं तां न प्रेक्षे। सा नाम उद्यानगहनं प्रविष्टा भवेत्।

निवही पुनः सः। प्रेक्षते अनावृतदेशे चन्द्रालोकसत्त्वात् माधव-मकरन्दाभ्यां सह स्वसैन्यानां समरं पश्यति। इतोऽर्थं मन्यते पौरलोकैः परस्परमालप्यते। इति च प्रणामीत्यन्वयः।

(ड) मदेति। हतास्मि, स्वयं राज्ञैव क्रुध्यता सैन्यप्रेषणेन तयोरनिष्टस्या-वश्यम्भावादिति भावः।

(ढ) लवेति। कस्मिन् वर्त्तते इति शेषः।

(ण) मदेति। मार्गं प्रत्यावर्त्तनपथम्। प्रसृता गता। प्रेक्षे पश्यामि। नाम सम्भावनायाम्। उद्यानस्य गहनं पादपलताभिर्निविड़ं प्रदेशम्।

(१) क्वचित् 'सहि !' इति पाठो नास्ति।

(२) अवि णाम उज्जाणगहणे, इति पाठभेदः।

लव। सहि! तुरिदं अस्सेमह्म। अदिकादरा णो पिअसही (१) इमस्सिं अवसरे ण धारेदि अप्पाणं। (त)

लवङ्गिकामदयन्तिके त्वरितं परिक्रामन्त्यौ। सहि मालदि! णं भणामि सहि मालदि! त्ति। (थ) इतस्ततः परिक्रामतः (२)।

प्रविश्य प्रहृष्टः कलहंसः (३)। दिट्ठिआ कुसलेण ह्मि णिग्गदो संघट्टमग्गादो। हीमाणहे! पेक्खामि विअ णिम्मल-णिरन्तरुव्वित्त-तर-वारिधारा-पडिफलिद-चन्दकिरणुज्जलन्त-पिञ्जरिअ-भीसण-

(त) सखि! त्वरितम् अन्विष्यावः। अतिकातरा नः प्रियसखी अस्मिन्नवसरे न धारयत्यात्मानम्।

(थ) सखि मालति! ननु भणामि सखि मालतीति।

(द) दिष्ट्या कुशलेनास्मि निर्गतः संघट्टमार्गात्। हीमाणहे! प्रेक्ष इव निर्म्मल-निरन्तरोद्वृत्त-तरवारिधारा--प्रतिफलित--चन्द्रकिरणोज्ज्वलत्-पिञ्जरित--भीषण-

(त) लवेति। अस्मिन्नवसरे माधवस्य दुर्निवारविपदाशङ्कासमये, आत्मानं जीवनं न धारयति शोकेन न धारयितुं शक्नोतीत्यर्थः।

(थ) लवेति। अनुनये ननुशब्दः। अनुनीय ब्रवीमि तथापि नागच्छतीति भावः।

(द) प्रविश्येति। दिष्ट्या भाग्येन, कुशलेन अक्षतशरीरत्वान्मङ्गलेन।

(१) पिअसही उव्वणट्ठिदा, इति क्वचित् पाठः।

(२) लव।···अप्पाणं। त्वरितं परिक्रम्य। सहि मालदि! णं भणामि सहि मालदि! त्ति। इतस्ततः परिक्रामतः। इत्यं केवललवङ्गिकाया एव पाठः क्वचित्।

(३) कलहंसः। हृष्टः प्रविश्य। इति पाठान्तरम्।

दंसणं, मदलोला-कलिद-कामपाल-बिअड़-भुअदण्डावबिद्ध हल-हेला-बिब्भलिदुव्वेदुत्तरङ्ग-कलिन्दतणआ-सोत-सच्छिहं, बिम-ङ्कलुप्पाड़िद-णिद्दअ-अमन्द-मअरन्द-क्खोभ-बिअड़-पड़िजोध-पड़ि-बत्तणुग्गद-समत्थ-गअणङ्गणावआस-बिअसन्त-कलअलं, पारक्क-बलसमूहं (१)। (८)

---

दर्शनं मदलीला कलित-कामपाल-विकट-भुजदण्डापविद्ध--हल-हेला--विह्वलितोद्व-दुत्तरङ्ग-कलिन्दतनयास्रोत:सन्निभं विशङ्कलोन्पातित-निर्दयामन्द-मकरन्द--क्षोभ-विकट-प्रतियोध-परिवर्त्तनोद्गत-समस्त-गगनाङ्गनावकाश-विकसत्-कलकलं पारक्यबल-समूहम्।

संघट्टमार्गात् युद्धसंघर्षपथात्। हीमाणहे इति हर्षद्योतकमव्ययं शौरसेन्यादि-भाषायाम्। तथा च "हीमाणहे भयहर्षे, इति देशी"ति नान्यर्द्धव:। पश्य इव पश्यामीव पारक्यबलसमूहमिति वक्ष्यमाणेनान्वय:। निर्म्मला शानपाषा-णादौ घर्षणेन मलहीना, निरन्तरोद्गता प्रहारार्थं सततोत्थिता या तरवारिधारा असिश्रेणी, तस्यां, प्रतिफलितै: प्रतिविम्बितै: चन्द्रकिरणै: उज्ज्वलन् दीप्यमान पिञ्जरितं नानावर्णै: सङ्कीर्णं भीषणं चण्डमूर्त्तित्वात् भयङ्करं दर्शनं यस्य तत् मदलीलया बलमदक्रीड़या कलितो गृहीत: बलमदक्रीड़ासक्त इत्यर्थ: य: कामपालो बलराम:, तेन, विकटाभ्यां विशालाभ्यां भुजदण्डाभ्याम् अपविद्धम् आकर्ष-णाय व्यापारितं यत् हलं स्वकीयलाङ्गलास्त्रं तेन, हेलया अवज्ञया अवहेलयैव

(१)...अहो णिगदा समरसङ्घट्टदुग्गमादो।...पेक्खामि बिय णिम्मल-णिरन्त-रुद्गदधोद तर···किरणुज्जल बिभुरिच्छदंसणं,···दण्डाविद्ध···सन्निहं, बिअढ़ बिसङ्कल···मअरन्दव्वइअर···क्खोभ···कलअलं इति पाठान्तराणि।

अवि अ, सुमरामि, भीसण-भुअ-वज्ज-जज्जरिद-पञ्जरावम-रिद-सुभड़-हत्थावलुत्त-विविहाउह-णिवह-घादिदासेस-रिउसेस्सं, ह्द-विअड़ावसार-पाइक--सुम्म-मग्ग--सञ्चार--णिवत्तिद--विसम-समर-साहसं,-णाहमाहवं (१)। (ध)

(ध) अपि च, स्मरामि, भीषण-भुज-वज्र-जर्जरित पञ्जरापसृत-सुभट-हस्ताव-लुप्तविविधायुध-निवह-घातिताशेष-रिपुसैन्यं, हतविकटापसार-पदाति गम्यमार्ग-सञ्चार-निर्वर्त्तित-विषम-समर-साहसं नाथमाधवम्।

विहान्निता महाकर्षणेन व्याकलीकृता, अतएव उद्‌ङ्गतरङ्गा तीरोच्छलिततरङ्गा या कलिन्दतनया यमुनानदी, तस्याः स्रोतःसन्निभम् अविच्छिन्नश्रेणीकतया नील-वेशतया च गमनशीलजलप्रवाहतुल्यम्। तथा विशृङ्खलं नियमरहितम् आक्रमितु-रेवाक्रमणमिति युद्धनियमरहितं यथा तथा उत्पतितः आक्रमणाय रिपुसैन्योपरि निपतितः, निर्दय आहतस्याप्याहननात् निष्ठुरः, अमन्दो युद्धकर्म्मण्यकुण्ठो निपुण इति तात्पर्य्यं, यो मकरन्दस्तस्य चाभिग आक्रमणसङ्घर्षेण विकटानां विशालानां प्रतियोधानां प्रतिपक्षसैनिकानां परिवर्त्तने महीयसेन सम्मुखागमनसमये उद्गत अपरापरसैनिकेभ्य उत्थितः समस्ते सकले गगनाङ्गनावकाशे आकाशप्रदेशान्तराले विकसन् प्रकाशमानः प्रचरन् कलकलः कोलाहलो यस्य तत्। पारकबलसमूहं परकीयसैन्यगणं प्रेक्षे पश्यामीव। इदानीमेव तत् आगमनादिति भावः।

(ध) अपिचेति। भीषणाभ्यां भुजवज्राभ्यां जर्जरितेन दारुणप्रहारात् चूर्ण-

(१) सुमरामि अ,—भीसण-भुअवज्ज-खचित-पञ्जर-पज्जन्त-समर-विमुह-सुभड़-हत्थावलुत्त-विविहाउहोवकद्ध-असेस-रिपुसेण-विअड़ापसार--बद्दरिक्क--मग्ग--सञ्चार... साहसं णाहं माहवं। इति पाठभेदः।

अहो गुणाणुराओ णरिन्दस्स। जं दाणिं सोह-सिहरावतिस्स-पड़िहार-विणओवस्सास-समिअविरोहो, सोम्मेक्करसोवणीद माहव-मअरन्द-मुहचन्दे ओलोइअ वारं वारं पसारिद-सिणिद्ध-लोअणो कलहंसआदो अहिजणं सुणिअ णिव्वत्तिद-महग्घ-गुरु-बहुमाणो फुरन्त-मच्छरेस्सा-वेलक्ख-ससो-मलिणिअ-मुहे भूरिवसु-णन्दणे महुरवअणोवस्सासेहिं "किं दाणिं तुम्हाणं

(न) अहो! गुणानुरागो नरेन्द्रस्य। यदिदानीं सौधशिखरावतीर्ण प्रतिहार-विनयोपन्यास-प्रशमितविरोधः, सौम्यैकरसोपनीत-माधव-मकरन्दमुखचन्द्राववलोक्य वारं वारं प्रसारितस्निग्धलोचनः, कलहंसकादभिजनं श्रुत्वा निर्वर्तितमहार्घ-गुरु-बहुमानः, स्फुरन्मत्सरेर्ष्या-वैलक्ष्य-ससी-मलिनितमुखो भूरिवसुनन्दनो मधुर-

विचूर्णीकृते पञ्जरेण पार्श्वास्थिपञ्जरेण हेतुना अपसृतः पलायनीयतो|यः सुभट-सुशिक्षितो रिपुसैनिकः, तस्य हस्तात् टवल्लभेन आकृष्य गृहीतेन विविधायुधनिवहेन नानाप्रकारास्त्रसमूहेन घातिता अशेषा रिपुसैन्या येन तम्। तथा हतानां माधवमकरन्दाभ्यामाहतानां विकटानां योधानामि...: अपसारेण पलायनेन हेतुना पदातिशून्ये मार्गे तस्मिन् राजपथे, सञ्चारेण इतस्ततः परिभ्रमणेन, निर्वर्तितं निष्पादितं विषमं भयङ्करं समरसाहसं येन तम्। स्मरामि विस्मयेन चिन्तयामि।

(न) अहो इति। गुणानुरागो गुणप्रियता। सौधशिखरादवतीर्णस्य राज्ञ आदेशेनैव भूतलावरूढ़स्य प्रतीहारस्य द्वारपालस्य विनयोपन्यासेन 'हे आर्य्याः—कृपया भवन्तः समराद्विरमन्तु" इति नम्रताप्रणोदितवचनोच्चारणेन कारणेन प्रशमितो विरमितो विरोधो माधवमकरन्दाभ्यां सह स्वसैन्यानां समरो येन सः। "प्रतिहारो (प्रतीहारो) द्वारि द्वास्थे द्वाःस्थितायान्तु योषिति।" इति मेदिनी। सौम्येन शान्तभावेन, एकरसेन साहसबाहुबलदर्शनात् परमहर्षेण च उपनीतयोः तेन

भुवणाभोअ-भूसणेहिं महाणुभावेहिं णवजोव्वणगुणाहिरामेहिं जामादुएहिं परितोसो"त्ति पडिबोहिअ गदो अब्भन्तरं राआ । इमे वि माहव-मअरन्दा आअच्छन्दि । अहं वि एदं भअवदीए वुत्तन्तं णिवेदेमि । इति निष्क्रान्तः । (न)

ततः प्रविशतो माधवमकरन्दौ ।

---

वचनोपन्यासैः "किमिदानीं युवयोर्भुवनाभोगभूषणाभ्यां महानुभावाभ्यां नवयौवनगुणाभिरामाभ्यां जामातृभ्यां परितोष" इति प्रतिबोध्य गतोऽभ्यन्तरं राजा । इमावपि माधवमकरन्दावागच्छतः । अहमपि एतं भगवत्यै वृत्तान्तं निवेदयामि ।

द्वारपालेन स्वसमीप उपस्थापितयोः, माधवमकरन्दयोः यौ सुखचन्द्रौ तौ । "रसो जलं रसो हर्ष" इत्याद्यनेकार्थध्वनिमञ्जरी । कलहंसकात् मम सकाशा-दित्यर्थः । अभिजनं माधवमकरन्दयोः कुलम् । निर्वर्त्तितौ निष्पादितौ महार्घौ महामूल्यः अत्यर्थभ इत्यर्थः गुरुर्महान् बहुमानो माधवमकरन्दयोरत्यादरो येन सः । मत्सरो विद्वेषः, ईर्ष्या अक्षमा, वैलक्ष्यम् अप्रतिभत्वं कर्त्तव्यताविमूढत्व-मिति यावत् स्फुरन्ति प्रकाशमानानि मत्सरेर्ष्यावैलक्ष्याण्येव मस्यः कालयः ताभि-र्मलिनिते मलिनीकृते मुखे ययोस्तौ । व्याजाद्रिपुविशेषैर्मलिनमुखता, वस्तुतस्तु न वस्तुत एवेति बोध्यम् । "मसी (स्त्री) कालो" इति शब्दकल्पद्रुमः । भुवनाभोगस्य जगत्प्रपञ्चस्य भूषणाभ्याम् अलङ्कारस्वरूपाभ्यां महानुभावाभ्यां बाहुबलादिना विशाल-प्रभावाभ्यां, नवयौवनेन गुणैः शौर्यगाम्भीर्य-साहसविनयादिभिश्च अभिरामाभ्यां मनो-

(१) ···सोह--सिहरोत्तिस--पडिहार--विणअविलास--पडिसमिद्ध--विरोह--मङ्गलो-वणोदे ··अहिजणं जाणिअ णिव्वत्तिद महग्घ-बहुमाणो-अभिजण-दंसण-गुणा-हिरामेहिं णवचन्द-दंसण-रमणीएहिं···इति पाठान्तराणि ।

मक (१)। अहो ! प्रेयसः सर्वपुरुषातिशायि निर्व्याजमूर्जितं तेजः। तथा हि। (प)

दोर्निष्पेषविशीर्ण-सन्नयदलत्कङ्काल (२) मुन्मथ्नतः
प्राग्वीराननुपात्य(३)तत्प्रहरणान्याच्छिद्य विक्रामतः।

---

हराभ्यां, जामातृभ्यामाभ्यां माधवमकरन्दाभ्यां परितोषः वाञ्छनीयेः सर्वैरेव गुणै-रलङ्कृतत्वात् मालतीभाविन सन्तोषो जातः किम्। इति इत्थं परितोष्य सान्त्वयित्वा। राज्ञो गुणानुरागमन्तरेण ईदृशयोर्महापराधिनोर्विना दण्डेनाव्याहतिर्न स्यादिति भावः। अत्र शक्तिर्नाम विमर्षमन्धेरङ्गम्। "शक्तिः पुनर्भवेत्। विरोधस्य प्रशमनं" इति लक्षणात्।

"जामाता दुहितुः पत्यौ सूर्य्यावर्त्ते धवे पुमा"निति मेदिनीदर्शनान्नन्दनपक्षे जामातृशब्देन पतिर्भगिनीपतिरित्यर्थो ग्राह्यः स्वयं पतित्वाङ्गीकारेणैव मालती-मदयन्तिकयोरपमरणादन्यस्मै दानासम्भवात् प्रत्युत सर्वगुणाकरत्वाच्च एतावेव दुहितृभगिन्योर्भर्त्तारावश्यमङ्गीकार्य्यावित्यभिप्रेत्य राज्ञा "जामातृभ्यां परितोष" इति सिद्धवन्निर्देशः कृत इति बोध्यम्।

(प) मकेति। अहो आश्चर्य्यं, प्रेयसः प्रियतमस्य वयस्यस्य माधवस्य। निर्व्याजं वास्तविकम् ऊर्जितं बलवत्, तेजः पराक्रमः, वास्तविकदैहिकसामर्थ्यजनितो विक्रम इत्यर्थः।

दोरिति। प्राक् समराङ्गनमुपेत्यैव प्रथमं, वीरान् क्रमेण कतिपयान् शूरान् सैनिकान्, अनुपात्य कौशलेनाकर्षणादिना भूतले निपात्य दोर्निष्पेषेण बाहुभ्यां

(१) माधव इति क्वचित् पाठः।

(२)…गलत्कङ्कालमिति पाठान्तरम्।

(३) प्रागवीराननुपत्य, इति पाठभेदः।

उद्वेल्लद्घनकण्डखण्ड-निकराकीर्णस्य (१) संख्योदधे-
द्वैधास्तम्भित पत्ति पङ्क्तिविकटः पन्थाः पुरस्तादभूत् ॥८॥

माध। वयस्य! (२) नन्वनुशयस्थानमेतत्। पश्य। (फ)

भूतले निष्पेषणेन विशीर्णाः सवलिताः सन्धयः सन्धिबन्धा येषां ते, ततश्च दलन्तो दोर्निष्पेषणेव दलनं प्राप्नुवन्तो भज्यमाना इत्यर्थः कङ्कालाः शरीरास्थीनि यस्मिन् कर्म्मणि तद् यथा स्यात्तथा उन्मथ्नतः तानेव वीरान् भूतले विलोडयतः, तत्प्रहरणानि तेषामस्त्राणि आच्छिद्य आकृष्य गृहीत्वा विक्रामतः विक्रमं कुर्वतः अपरा-परवीरैः सह युद्धं कुर्वत इत्यर्थः, प्रेयसी माधवस्येत्यन्वयः, पुरस्तादग्रतः, उद्वेल्लता ऊर्द्धं स्पन्दमानेन घनेन निरन्तरेण कण्डखण्डनिकरेण कबन्धखण्डसमूहेन आकीर्णस्य व्याप्तस्य संख्योदधेः समरसागरस्य मध्ये द्वैधा द्विप्रकारेण माधवस्य समरणाङ्गणोभयपार्श्वे इति तात्पर्य्यं स्तम्भितया भयविस्मयाभ्यां निश्चेष्टया पत्तिपङ्क्त्या पदातिश्रेण्या विकटो विशालः पन्थाः कश्चिन्मार्गः अभूत। अतएवाश्चर्य्यमेव प्रेयसो-रोज इति भावः।

अत्र संख्योदधेरिति लुप्तोपमाऽलङ्कारः, कण्डखण्डेति व्यञ्जनानामनेकधा सकृत् साम्यात् छेकानुप्रासः, चतुर्थपादे एकप्रकारस्यासकृत्साम्यात् वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः।

"कण्डः (पुं) कबन्धः" इति शब्दकल्पद्रुमः। शार्दूलविक्रीडितं वृत्तम् ॥८॥

(फ) माधेति। नन्वित्यवधारणे। एतत् जगत, अथवा भवता वर्ण्यमानं समराङ्गनम्, अनुशयस्थानं मनस्विनामनुतापस्थलम्। कथमित्याह पश्येति।

(१) उद्वेल्लन्नरकण्डखण्ड निकराकीर्णस्य, इति क्वचित् पाठः।

(२) क्वचित् 'माध' इति नास्ति, क्वचिच्च 'वयस्य' इति नास्ति।

अद्यैवेन्दुमयूखखण्डनिचितं (१) पीतं निशीथोत्सवे
येर्लीलापरिरम्भदायिदयिता गण्डूषशेषं मधु।
सम्प्रत्येव भवद्भुजार्गलगुरुव्यापारभग्नास्थिभि-
र्गात्रैस्ते कथयन्त्यसारभिदुरान्(२)प्रायेण संसारिणः॥१०

भर्त्तव्यन्तु नरपतेरस्य सौजन्यं, यदपराद्धयोरप्यनपराद्धयो-

अद्येति। अद्यैव यैर्वीरैः, निशीथोत्सवे अर्द्धरात्रीयमदनोत्सवे इन्दुमयूख-खण्डैः उन्मुक्तगवाक्षमार्गनिपतितैश्चन्द्रकिरणांशैः निचितं व्याप्तं संसृष्टं, तथा लीलया परिरम्भदायिनीनाम् आलिङ्गनकारिणीनां दयितानां वल्लभानां गण्डूषशेषं मुखपूरणावशिष्टं मधु मद्यं पीतम्। ते वीराः सम्प्रत्येव इदानीमेव भवतो मकर-न्दस्य भुजौ बाहू एव अर्गलं भुजौ अर्गलं इवेति वा तयोर्गुरुव्यापारेण महदाघात-क्रियया भग्नानि अस्थीनि येषां तैस्तथोक्तैः, गात्रैः शरीरैः संसारिणो जनान् प्रायेण बाहुल्येन, असाराः स्थिरांशरहिता अतएव भिदुराः क्षणभङ्गुराः, तान् कथयन्ति सूचयन्ति। ये खल्वितः पूर्वमेव दयिताभिः सह पानमदनमहोत्सवमन्वभूवन् त एवेदानीं दीर्घनिद्राऽभिभूताः समराङ्गने शेरते सुतरां प्रायेण संसारिणः क्षणभङ्गुरा एव, किन्तु कतिपये भाग्यवन्त एव तादृशमहोत्सवेन मादृन्तः सुचिरं स्थातुमर्हन्तीति जगदिदमनुतापस्थानमेवेति भावः। अतएव प्रायेणेत्युक्तम्।

अत्र संसारिणामसारभिदुरत्वसूचनाक्रियायां तादृशपुरुषाणां कर्त्तृत्वसम्बन्धे-नान्वयः सम्भवत्येव तेषामपि तथात्वादिति "कोऽत्र भूमिवलये" इत्यादिदर्पणोदाहृत-वत् सम्भवद्वस्तुसम्बन्धा निदर्शनाऽलङ्कारः, तथा भुजार्गलेत्यत्र साधकबाधकप्रमाणाभा-वादुपमारूपकयोः सन्देहसङ्कर इत्यनयोः पुनरङ्गाङ्गिभावेन सङ्करः।

"मधु मद्यं पुष्परसे" इत्यमरः। शार्दूलविक्रीडितं वृत्तम्॥१०॥

(ब) भर्त्तव्यमिति। अपराद्धयोरपि मालतीमदयन्तिकयोर्हरणेन कृताप-

(१)···खण्डखचितमिति भिन्नः पाठः।

(२) असारविधुरानिति पाठान्तरम्।

रिव नौ कृतप्रसादमधिष्ठितवान्। तदेहि मालतीसमक्षमधुना मदयन्तिकाया हरणवृत्तान्तं विस्तरतः कथ्यमानं श्रोतुमिच्छामि। अन्यच्च (१)। (व)

कथयति त्वयि सस्मितमालती
वलितलोलकटाक्षपराहतम्। (२)

राधयोरपि। नौ आवयोः। कृतप्रसादं स्वयमनुमोदनेन अविघ्नसमन्दनयोः प्रतिबोधनेन च कृतानुग्रहं यथा तथा। कथ्यमानं निखिलव्यापारानुष्ठायिना त्वयेति शेषः। अन्यच्च तव कथने फलमित्यर्थः।

किं तदित्याह कथयतीति। त्वयि मकरन्दे कथयति मदयन्तिकाया हरणवृत्तान्तं विवृण्वति सति, सख्युः सुहृदस्तव फलत्वात् भावी मदयन्तिका, सस्मितया अतीवकौतुककरवृत्तान्तश्रवणादन्यहास्यान्वितया मालत्या वलितेन प्रवर्तितेन लोलेन चञ्चलेन कटाक्षेण पराहतं दृढनिपातात्ताडितं गाढमस्वस्थमित्यर्थः, उल्लसिता उद्गता एषा लज्जा मन्निमित्तमेतौ महानुभावावियन्तमायासमनुभूतवन्तावित्ति लज्जया सङ्कोचो यत्र तत्, तथा स्मिता भूतेन निश्चला दृष्टिर्यस्य तत्, वदनपङ्कजं स्वकीयमुखपद्मं नमयिष्यति उल्लसितत्रपत्वादेवावनतं करिष्यति। तद्दर्शनमेवावयोरतीवकौतुककरत्वात् तव कथनस्य फलमिति भावः।

अत्र पङ्कजस्य दृष्टेरसम्भवेन वदनं पङ्कजमिवेत्युपमितसमासाश्रयणात् लुप्तोपमालङ्कारः, नमनं प्रति उल्लसितत्रपपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गञ्च, इत्यनयोरङ्गाङ्गिभावेन सङ्करः।

---

(१)···यदपराधिनोरपि···नौ। कृतोपसदनं चेष्टितवान्··· मदयन्तिकाहरणवृत्तान्तं···कथ्यमानमनुभवामः। पुरतोऽवलोक्य। कथं शून्या इवामी प्रदेशाः। मकरन्दः। नूनं प्राङ्गे आवयोः समरसङ्घट्टोद्वेगेन व्याकुलत्वादितस्ततो भ्रमन्त्यः अत्रैवात्मानं विनोदयन्ति। माधवः। कथयति त्वयि···। इति पाठभेदाः।

(२) चलितलोल···इत्येव पाठः क्वचित्।

वदनपङ्कजमुल्लसितत्रपं
स्तिमितदृष्टि (१) सखी नमयिष्यति ॥११॥

इति परिक्रामतः (२)। अयमसावुद्यानवाटः। प्रवेशं नाटयतः। (३) (भ)

माध। कथं शून्या एव प्रदेशाः (४)। (म)

मक। नूनं शङ्के, आवयोः समरसङ्कटोद्वेगेन व्याकुलत्वादितस्ततो भ्रमन्त्यस्ता अत्रैवात्मानं विनोदयन्ति (५)। (य)

उभौ। परिक्रामतः (६)

अत्र युक्तिर्नाम नाट्यालङ्कारः—"युक्तिरर्थावधारण"मिति लक्षणात्।

द्रुतविलम्बितं वृत्तम् ॥ ११ ॥

(भ) इतीति। परिक्रामत उपवनप्रवेशाय पादक्षेपं कुरुतः। असौ सः। उद्यानवाट उपवनप्राचीरम्।

(म) माधेति। कथमित्यादिः साशङ्कोक्तिः।

(य) मकेति। नूनं शङ्के निश्चितं मन्ये। समरसङ्कटोद्वेगेन युद्धविपत्तिभयेन। अत्रैव उपवनस्य क्वचित् प्रदेश एव।

(१) उल्लसितत्रपास्तिमितदृष्टि, इति समासान्वितोऽपि पाठः।

(२) इति परिक्रामत इति पाठः क्वचिन्नास्ति। (३) प्रविशतः। इति पाठः।

(४) क्वचिदेष पाठो नास्ति।

(५) मक। वयस्य! नूनमस्मद्दातिरेकोद्वेगपर्य्याकुलत्वादितस्ततः परिभ्रमन्ती, आत्मानमत्रैवोद्यानगहने विनोदयन्ती भविष्यति, तदेहि पश्यावः। इति पाठान्तरम्।

(६) क्वचिदयं पाठोऽपि नास्ति।

लवङ्गिका-मदयन्तिके। **सहि मालदि!।** सहसा विलोक्य सहर्षम्। **दिट्ठिआ पुणो वि दे महाणुहावा दिस्सन्दि (१)। (र)**

माधव-मकरन्दौ। **भवत्यौ क्व सा मालती?। (ल)**

उभे। **कुदो मालदी। पदसद्देण अह्मे विप्पलद्धाओ मन्दभाइणीओ। (व)**

माध। **भवत्यौ! कथं कथमपि सहस्रधेव ध्वंसते मे हृदयम्। ततः स्फुटमभिधीयताम् (२)। (श)**

---

(र) सखि मालति! दिष्ट्या पुनरपि तौ महानुभावौ दृश्येते।

(व) कुतो मालती। पदशब्देनावां विप्रलब्धे मन्दभागिन्यौ।

(र) लवेति। माधवमकरन्दयोः पदशब्दमाकर्ण्य मालत्याः पदशब्दोऽयमिति सम्भावयन्त्यौ सम्बोधयतः सखि मालतीति।

(ल) माधवेति। कथञ्चिदुभे: स्वरान्वितं 'सहि मालदि!' इति सम्बोधनमाकर्ण्य सन्निहितत्वे च तदसम्भवमाशङ्क्य वासनोत्कण्ठया च व्याकुलौ पृच्छतो भवत्याविति।

(व) उभे इति। पदशब्देन युवयोरिवेति भावः। विप्रलब्धे वञ्चिते "मालत्याः पदशब्दोऽय'मिति सम्भावनया तस्याः सम्बोधनादिति भावः।

(श) माधेति। कथं कथमपि अनिर्वचनीयेन प्रकारेण ध्वंसते धैर्याद्भ्रश्यति, विदीर्य्यते वा।

(१) लव। सहि! मदअन्तिए! मालदि! सहसावलोक्य!···एदे··· इति पाठभेदः।

(२) माध। कथं कथमपि विध्वंसते मे हृदयम्, अतः स्पष्टमभिधीयताम् इति भिन्नः पाठः।

मम हि कुवलयाक्षीं प्रत्यनिष्ठैकबुद्धे-
रविरतमनुबद्धोत्कम्प एवान्तरात्मा। (१)
स्फुरति च खलु चक्षुर्वाममेतच्च कष्टं (२)
वचनमपि (३) भवत्योः सर्व्वथा हा हतोऽस्मि ॥१२॥

मद। तदा(४) क्खु इदो णिग्गदे महाणुहावे बुद्धरक्खिदं अव-

(५) तदा खल्वितो निर्गते महानुभावे बुद्धरक्षितामवलोकिताञ्च भगवत्याः

---

ममेति। हि यस्मात् कुवलयाक्षीं नीलोत्पलनयनां मालतीं प्रति तद्विषय इत्यर्थः, अनिष्टे एका एकताना बुद्धिर्यस्य तस्य केवलविपदाशङ्किन इति तात्पर्य्यं, मम अन्तरात्मा अन्तःकरणम्, अविरतमेव अनुबद्धोत्कम्पस्तस्या विपदाशङ्कया विधृतोत्कम्पः। वामं चक्षुश्च खलु स्फुरति स्पन्दते। एतदपि हानिसूचकमिति भावः भवत्योर्युवयोरपि एतत् 'कुतो मालती' इत्यादिकं वचनञ्च कष्टम् अत्र तस्याः अविद्यमानत्वे नाशुभ-सूचकतया क्लेशकरम् अतीवमनोदुःखकरम्, अतएव सर्वथा हतोऽस्मि दैवहतकेनेति शेषः। "प्रेम पश्यति भयान्यपदेऽपि" इति न्यायादित्याशयः। हा खेदे।

अत्राशुभसूचनकार्य्यं प्रति वामनयनस्पन्दनरूपे एकस्मिन् कारणे सत्यपि तादृशवचनरूपतत्कारणान्तरोपन्यासात् समुच्चयोऽलङ्कारः। मालिनी वृत्तम् ॥ १२ ॥

(५) मदेति। अनुप्रेषिता भवन्तमुद्दिश्येति शेषः। उत्ताम्यमाना वृद्धवार्त्तामवगन्तुमुत्कण्ठमाना मालती, एतस्या लवङ्गिकायाः, मार्गं प्रत्यावर्त्तनपथम्।

(१) द्रवति हृदयमन्तस्तस्यतोवान्तरात्मा, इति क्वचित् पाठः।
(२) स्फुरति हि खलु चक्षुः स्पष्टमेतच्च वामम्, इति पाठोऽपि दृश्यते
(३) वचनमिह, इत्यपि पाठः।
(४) तह, तदो, इति पाठभेदौ।

लोइदं अ भअवदीए सआसं पेसिअ अप्पमाद णिमित्तं (१) विण्णवेहि अज्जउत्तं त्ति लवङ्गिआ अणुप्पेसिदा। तदो उत्तम्म-माणा (२) अ एदाए मग्गं ओलोइदुं अग्गदो पसरिदा मालदी (३)। पच्छादो अहं ण अ तं पेक्खामि (४)। तदो अह्मेहिं एत्थ विहरन्तीएहिं विड़बन्तराइं जाव विचिदाइं दाव तुह्मे दिट्ठत्ति (५)। (ष)

माध। हा प्रिये मालति!।

सकाशं प्रेष्य अप्रमादनिमित्तं विज्ञापयार्य्यपुत्रमिति लवङ्गिका अनुप्रेषिता। तत उत्ताम्यमाना च एतस्या मार्गमवलोकयितुमग्रतः प्रसृता मालती। पश्चादहं न च तां प्रेक्षे। तत आवाभ्यामत्र विहरन्तीभ्यां विटपान्तराणि यावद्विचितानि तावद्युवां दृष्टाविति।

---

प्रसृता प्रस्थिता: विहरन्तीभ्यां परिक्रामन्तीभ्यां, विटपान्तराणि भूतलपर्य्यन्त-पातिनीनां तरुशाखानामन्तरालप्रदेशाः, विचितानि मालत्या दर्शनार्थमन्विष्टानि अन्वेष्टुमारब्धानीत्यर्थः। इति-शब्दो वृत्तविवरणसमाप्त्यर्थः।

अत्र उत्कीर्त्तनं नाम नाट्यालङ्कारः "भूतकार्य्याख्यानमुत्कीर्त्तनं मत"मिति लक्षणात्।

(१) अप्पमत्तणिमित्तमित्यपि पाठः।

(२) उत्तम्ममाणाए इति क्वचित् पाठः।

(३) क्वचित् 'मालती' इति पाठो नास्ति। (४)···तदो ण पेक्खामि।

(५) तदो अह्मेहिं मग्गिदा एत्थ विड़बन्तराइं जाव···इति पाठान्तरम्।

किमपि किमपि शङ्के मङ्गलेभ्यो यदन्य-
द्विरमतु परिहासश्चण्डि! पर्य्युत्सुकोऽस्मि।
कलयसि कलितोऽहं वल्लभे! देहि वाचं
भ्रमति हृदयमन्तर्विह्वलं निर्दयासि॥ १२

किमपीति। हे चण्डि! अत्यन्तकोपने! किमपि किमपि अतीवानिर्वचनीयं मङ्गलेभ्यो यदन्यत् त्वद्विषयकममङ्गलमित्यर्थः शङ्के, अद्यापि कपालकुण्डलायाः कोपसत्त्वादिति भावः। अतएव पर्य्युत्सुकोऽस्मि तवावलोकनार्थमतीवोत्कण्ठितोऽस्मि। संयोगानन्तरमेव वियोगान्मानेन चेदात्मगोपनं कृतवती तदा तदपि न सङ्गच्छते, येन हि तथात्वेऽपि खल्वहं कपालकुण्डलाकोपविजृम्भितमेवैतदिति मन्यमानो नितरामाकुलो भवामि, तदात्मप्रदर्शनेन सत्वरं मामाश्वासयेत्याशयः। परिहासार्थञ्चेदात्मगोपनं तदप्यस्मिन्नवसरे नोचितमित्याह विरमत्विति। ईदृशावसरे परिहासार्थमप्यात्मगोपनं मा कुरु इत्यर्थः। येन हि तथात्वेऽपि कपालकुण्डलाकोपविजृम्भणाशङ्कयैव पर्य्युत्सुको भवामीत्यभिप्रायः, अथ चेदनुरागपरीक्षार्थमात्मगोपनं तदप्यनावश्यकमित्याह कलयसीति। हे वल्लभे! कलयसि त्वमहमनुरागवान्नवेति चेत् परीक्षसे, तदपि न प्रयोजनीयमिति तात्पर्य्यम्। यतो हि अहं कलितः पूर्वमेव त्वया 'अनुरागवान्नवेति' परीक्षितः। त्वदनुरागवशादेव मया महाश्मशाने महामांसविक्रयलक्षणभीषणाध्यवसायाश्रयणात् तस्य च त्वया स्वयमेवावगतत्वादिति भावः। अतएव वाचं देहि उत्तरं कुरु। यतश्च विह्वलं तवादर्शनेन व्याकुलं मम हृदयम् अन्तर्मध्ये भ्रमति स्थैर्य्यं न लभते अधीरं जातमित्यर्थः। तथा निर्दयासि समन्तादीदृशीं दशामवलोक्याप्यनागमनादिति भावः।

अत्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

स्नेहादमङ्गलपदमुच्चारयितुमप्यशक्नुवता "मङ्गलेभ्यो यदन्य" दित्युक्तम्।

मालिनी वृत्तम्॥ १२॥

उभे। हा पिअसहि ! कहिं गदासि। (स)

मक। वयस्य ! किमित्यविज्ञाय वैक्लव्यमवलम्ब्यते। (ह)

माध। सखे ! त्वमपि किं न जानामि मत्स्नेह (१) दुःखितायास्तस्याः कातर्य्यचेष्टितानि। (च)

मक। अस्त्येतत्। किन्तु भगवतोपादमूलगमनमप्याशङ्क्यते, तदेहि, तत्र तावद्गच्छाव: (२)। (क)

उभे। एदं वि (३) सम्भावीअदि। (ख)

माध। एवं नाम भवतु (४)। (ग)

सर्वे। परिक्रामन्ति (५)।

(स) हा प्रियसखि ! कस्मिन् गतासि।

(ख) एतदपि सम्भाव्यते।

---

(ह) सखेति। अविज्ञाय विशेषणाज्ञात्वा अनवधार्य्य। वैक्लव्यं कातरता।

(च) माधेति। तस्या मालत्याः। कातर्य्यचेष्टितानि व्याकुलताप्रयुक्तव्यापारान्। नन्दनाय दाननिश्चयात् मां प्रति निराशा सती मालती मरणाध्यवसायं कृतवतीति त्वं स्वयमेव तदानीं नगरदेवतागृहे प्रत्यक्षीकृतवान्, सुतरामिदानीमपि सतरं मम विपदाशङ्कया तथैव किमप्यनुष्ठातुमर्हतीति मम वैक्लव्यमिति भावः।

(क) सखेति। अस्त्येतत् सत्यमेतत् जानामीत्यर्थः।

(ग) माधेति। एवं नाम तत्रैवास्माकं गमनम्।

---

(१) माधवस्नेहदुःखिताया इत्यपि पाठः।

(२)···आशङ्क्यते।···पश्याव:। इति पाठभेदौ। (४) एवमस्तु इति भिन्नः पाठः।

(४) एवमस्तु नाम। इति परिक्रामति। इति क्वचित् पाठः।

(५) क्वचिदयं पाठो नास्ति।

मक। विचिन्त्यात्मगतम् (१)।

**याता भवेद्भगवतीभवनं सखी नो- (२)**
**जीवन्त्यथैष्यति (३) नवेत्यभिशङ्कितोऽस्मि (४)**

यातेति। सख्युर्माधवस्य पत्नीत्वात् नोऽस्माकं सखी मालती, भगवत्याः कामन्दक्या भवनमालयं याता गता भवेत्, इति सम्भावयामीत्यर्थः। अथ किन्तु जीवन्ती प्राणान् धारयन्ती सती एष्यति आगमिष्यति नवा इति अभिशङ्कित आशङ्कितोऽस्मि। चिराहितकोपया कपालकुण्डलया भगवत्या असन्निधाने तस्याः जीवनविनाशस्यैव सम्भवपरत्वादिति भावः। ननु माधवस्य महाभाग्यवत्त्वात् तत्सौख्यं प्रति कथमीदृगाशङ्केत्याह प्रायेणेति। बान्धवा भ्रात्रादयः, सुहृदो मित्राणि, प्रियाः प्रेमास्पदीभूताः पत्न्यादयः, तेषां सङ्गमः संसर्गजनितं सौख्यम् आदिर्यस्य तत् तादृशं सौख्यं सुखं, प्रायेण बाहुल्येन, सौदामिन्या विद्युतः स्फुरणवत् प्रकाशवत् चञ्चलमेव चणमात्रस्थितिशीलमेव। सुतरां मालत्या समागमजनितं माधवस्य सुखमपि तथा भवितुमर्हतीति भावः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारो लुप्तोपमया सङ्कीर्य्यते तथा सङ्गमशब्देन लक्षणया तादृशसङ्गमजनितं सुखं प्रतिपाद्यते, सा च लक्षणा रूढ़िप्रयोजनाभावादशक्तिकृतेति नेयार्थत्वदोषः, स तु 'बान्धवसुहृत्प्रियसङ्गजादि' इति पाठेन समाधेयः।

पक्षान्तरे तु प्रियायाः मालत्याः समागमजनितं माधवस्य सौख्यं, सौदामिन्याः सौदामिनीनामिकायाः प्रथमाङ्कविष्कम्भकसूचितायाः कामन्दकीप्रथमशिष्यायाः कन्या-

(१) स्वगतमितिमात्रः पाठः क्वचित्।

(२) सखी सा, इति पाठान्तरम्।

(३) जीवन्त्युपैष्यति, इति पाठभेदः।

(४) नवेत्युपशङ्कितोऽस्मि, इत्यपि पाठः क्वचित्।

प्रायेण बान्धवसुहृत्प्रियसङ्गमादि-
सौदामिनीस्फुरण-चञ्चलमेव सौख्यम् ॥ १४ ॥

इति निष्क्रान्ताः सर्वे ।

## इति मालत्यपहारो(१)नामाष्टमोऽङ्कः ॥८॥

शिन्महायोगिन्याः स्फुरणेन चेष्टया चञ्चलमेव माधवं प्रति पुनश्चलनशीलमेव पुनर्भविष्यत्ये-हिकर्थोऽपि सूच्यते । तथा चानुपदमेव नवमाङ्के खल्वयमर्थः स्फुटीभविष्यति । तेनेदं द्वितीयं पताकास्थानम् । तथा च साहित्यदर्पणे—

"यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकन्तु तत् ॥
वचः सातिशयश्लिष्टं नानाबन्धसमाश्रयम् ।
पताकास्थानकमिदं द्वितीयं परिकीर्त्तितम् ॥"

वसन्ततिलका वृत्तम् ॥ १४ ॥

इति श्रीहरिदासमिद्धान्तवागीशविरचितायां मालतीमाधवटीकायां
भावमनोहरायामष्टमाङ्कविवरणं समाप्तम् ॥ ८ ॥

(१) क्वचित् 'मालत्यपहारो नाम' इति पाठो नास्ति ।

# नवमोऽङ्कः

—०*०—

ततः प्रविशति सौदामिनी ।

सौदा । एषास्मि सौदामिनी भगवतः श्रीपर्वतादुत्पत्य पद्मावतीमुपाश्रिता, मालतीविरहिणः संस्तुतप्रदेशदर्शनासहिष्णोः स्थानं परित्यज्य सह सुहृद्वर्गेण हृद्रोणीशैलकान्तारप्रदेशं परिभ्रमतो माधवस्याधुनान्तिकमुपयामीति ।

---

( क ) तत इति । कपालकुण्डलातो मालतीमादाय निरापदि स्थाने तामुपस्थाप्य तद्विरहदुःखेन माधवस्यापि जीवनहानिमाशङ्क्य तदाश्वासनाय पूर्वसूचितायाः सौदामिन्याः प्रवेशमाह तत इति ।

( ख ) सौदेति । एषा सौदामिनी, या किल कामन्दक्या यत्नातिशयेन योगशिक्षां प्रदाय ईदृशी योगिनी कृता एषा साहं सौदामिनीत्यर्थः । सुतरां कामन्दक्याः परमस्नेहभाजनस्य माधवस्योपकाराय मयापि सुमहान् यत्नो विधेय इति भावः । भगवतः सिद्धस्थानतया माहात्म्यवतः । उत्पत्य गगने उड्डीय । पद्मावतीं तदाख्यामितां राजधानीम् उपाश्रिता समागतास्मि । संस्तुतः मालत्या सह विचरणाश्रयत्वेन परिचितो यः प्रदेशः स्थानं तस्य, दर्शनासहिष्णोः शतधाविरहदुःखोद्दीपकतया अवलोकनाक्षमस्य, स्थानं तत्परिचितप्रदेशं, सुहृद्वर्गेण मकरन्दादिना । हृद्रोणी महानदीविशेषः शैलः पर्वतः कान्तारो दुर्गमपथस्तत्स्वरूपं प्रदेशं स्थानम् । उपयामीत्यन्तः स्वकर्त्तव्यविचारः । भो इत्याश्चर्ये । तथा तादृशमत्युच्चदेशमित्यर्थः, उत्पतिता उड्डीना । गिरिनगरग्रामसरिदरण्यानां परिकरः समूहः । परिक्षिप्यते

भोः! तथाहमुत्पतिता, यथा सकल एष गिरिनगरग्राम-सरिदरण्यव्यतिकरश्चक्षुषा परिक्षिप्यते। पश्चाद्विलोक्य। साधु, साधु (१)। (क)

पद्मावती विमलवारिविशालसिन्धु-
　　पारासरित्परिकरच्छलतो बिभर्त्ति।

---

भ्रमण्डलं प्रवेश्यते क्षुद्रपदार्थसमतः स्पष्टमवलोक्यते। पश्चाद्विलोक्येत्यनेन पद्मावतीमतीत्य किञ्चिद्गतेति प्रतीयते। साधु साध्वित्यनेन पद्मावतीव्यापारदर्शनेन चमत्कारातिशयो व्यज्यते।

"द्रोणी (स्त्री)···नदीविशेषः" इति शब्दकल्पद्रुमः। "महारण्ये दुर्गपथे कान्तारः पुंनपुंसकम्।" इत्यमरः।

देवतालयाट्टालिकाराजमार्गादिमयनिरन्तरजनवसतिस्थानं नगरम्। तथाच रघुनाथः—

"देवतायतनैश्चित्रैः प्रासादापणवेश्मभिः।
नगरं दर्शयेद्विद्वान् राजमार्गैश्च शोभनैः॥"

सेवोपयोगिभूम्यन्तरित-विरल साधारणजनवसतिस्थानं ग्रामः। यथा मार्कण्डेय पुराणम्—

"तथा शूद्रजनप्राया सुसमिद्धकृषीबला।
क्षेत्रोपयोगभूमध्ये वसतिर्ग्रामसंज्ञिता॥"

पद्मावतीति। पद्मावती नाम इयं नगरी, विमलानि वारीणि ययोस्ते तथा विशाले महत्यौ च ये सिन्धुपारासरितौ सिन्धुपारानामकं नदीद्वयं तयोः परिकर-

(१)···श्रीपर्वतादपेत्य पद्मावतीं तत्र मालतीविरहिणो माधवस्य संस्तुतप्रदेशदर्शनासहिष्णोः संस्थायं परित्यज्य सह सुहृद्वर्गेण बृहद्द्रोणीशैलकान्तारप्रदेशमपश्यत्याधुना तदन्तिकं प्रयामि। ··सकल एव···परिक्षिप्यते। इति पाठान्तरम्।

उत्तुङ्गसौधसुरमन्दिरगोपुराट्ट-
संघट्टपाटितविमुक्तमिवान्तरीक्षम् (१) ॥१॥

अपि च।

सैषा विभाति लवणा वलितोर्म्मिपङ्क्ति (२)
रभ्रागमे जनपदप्रमदाय यस्याः।

च्छलतः परिवारच्छलेन परिवेष्टनधारणव्याजेनेत्यर्थः उत्तुङ्गानामत्युच्चानां सौधानां राजसदनानां सुरमन्दिराणां देवालयानां गोपुराणां पुरद्वाराणाम् अट्टानाम् अट्टालिकानां संघट्टेन घर्षणेन आदौ पाटितं विदारितं पश्चाद्विमुक्तं परित्यक्तम् अन्तरीक्षम् आकाशमिव बिभर्त्ति धारयति। अत्युच्चसौधादिभिर्गगनं विदार्य्य निपातितं, तदेव जलरूपेण परिणतं सत् समन्ताद्व्यापि नदीभावेनैवावस्थितमिति सरलार्थः।

अत्र वाच्या भावाभिमानिनी सापह्नवा क्रियोत्प्रेक्षाऽलङ्कारः।

पाटितविमुक्तमिति स्नातानुलिप्तादिवत् कर्म्मधारयः। वसन्ततिलका वृत्तम् ॥१॥

सैषेति। वलिता उत्थिता ऊर्म्मिपङ्क्तयस्तरङ्गश्रेण्यो यस्याः सा, सा प्रसिद्धा, एषा दृश्यमाना लवणा नाम नदी विभाति राजते। अभ्रागमे जलदोदये वर्षाकाले जनपदप्रमदाय छायाप्रदानात् देशस्थलोकानामानन्दाय यस्या लवणायास्तीरस्था इत्यर्थः, गोगर्भिणीनां गर्भवतीनां गवां प्रियाः सुखखाद्यत्वात् सन्तोषकरा नवा नूतना ये उलपास्तृणविशेषाः तेषां मालां श्रेणिं बिभ्रति धारयन्ति यास्तथोक्ताः, अतएव सेव्याः विचरणशीलानां जनानां सुखकरत्वेनाश्रयणीयाः, उपकण्ठविपिनावलयः निकटवर्त्तिवनश्रेण्यः, विभान्ति राजन्ते।

(१) अन्तरिक्षमिति पाठभेदः।

(२) ललितोर्म्मिपङ्क्तिरिति पाठान्तरम्।

गोगर्भिणीप्रियनवोत्पलमालभारि-
सेव्योपकण्ठविपिनावलयो विभान्ति ॥ २ ॥

अन्यतोऽवलोक्य । स एष भगवत्याः सिन्धोर्दारितरसातलस्तट-प्रपातः (१)। (ख)

यदत्य एष तुमुलो (२) ध्वनिरम्बुगर्भ-
गम्भीरनूतनघनस्तनितप्रचण्डः ।
पर्यन्तभूधरनिकुञ्जविजृम्भणेन (३)
हेरम्बकण्ठरमितप्रतिमानमेति ॥ ३ ॥

अथ सा इति तच्छब्दस्य प्रसिद्धवाचित्वेन परवाक्यस्थयच्छब्दानपेक्षणात् न वाक्यगतविधेयाविमर्शदोषः ।

गोगर्भिणीति "चतुष्पादो गर्भिण्या" इति कर्मधारयः । मालभारीति "इष्टकेषीकामालानां चिततूलभारिषु" इत्यनेन मालाशब्दस्य ह्रस्वान्तत्वम् । वसन्ततिलका वृत्तम् ॥ २ ॥

(ख) अन्यत इति । स पूर्वपरिचितः । भगवत्याः तीर्थत्वेन माहात्म्यशालिन्याः सिन्धोर्नद्याः । दारितं विदारितं गर्तीकृतं रसाया भुवस्तलं स्वरूपम् उपरिभागो येन सः । तटाद्दूर्ध्वदेशात् पर्वततटदेशादित्यर्थः प्रपातः प्रपतनम् ।

"रसा विश्वम्भरा स्थिरा ।" "अधः स्वरूपयोरस्त्री तल"मिति चामरः ।

यदत्य इति । अम्बूनि जलानि गर्भे यस्य सः अतएव गम्भीरो गभीरनादो यो नूतनघनः नवीनमेघः, तस्य स्तनितवत् गर्जितवत् प्रचण्डः अतीवतीव्रः, यदत्यः तत्तटप्रपातस्थानोत्पन्नः, एषः अयमनुभूयमानः, तुमुलः सङ्कुलो ध्वनिः जलपतनशब्दः,

(१)···अयमसौ भगवत्याः सिन्धोर्दारितरसातलतटप्रपातः । इति पाठभेदः ।
(२) तुमुलध्वनिः । इत्यपि पाठः । (३)···विजृम्भमाण...इति भिन्नः पाठः ।

एताश्चन्दनाश्वकर्ण-सरल-पाटलप्रायतरुगहनाः परिणत-मालूरसुरभयोऽरण्यगिरिभूमयः स्मारयन्ति खलु तरुणकदम्ब-जम्बूवनावनद्धान्धकार-गुरुनिकुञ्जगभीरगह्वरोद्गार-गोदावरीरव-मुखरित-विशाल-मेखलाभुवो (१) दक्षिणारण्यभूधरान्।

अयञ्च मधुमतीसिन्धुसम्भेदपावनो भगवान् भवानीपति-रपौरुषेयप्रतिष्ठः सुवर्णविन्दुरित्याख्यायते। (प्रणम्य)। (ग)

---

पर्यन्तभूधराणां तीरभीमाख्यपर्वतानां निकुञ्जेषु लताद्यावृतस्थानेषु विजृम्भणेन प्रति-ध्वनिवशात् हद्धिप्रायाः, हेरम्बकण्ठरसितस्य गणपतेः कण्ठगर्जितस्य प्रतिमानं सादृश्यम् एति प्राप्नोति।

अत्र पूर्वार्द्धे श्रौती समासगतलुप्तोपमा, चतुर्थपादे तु आर्थी समासगतोपमा, अनयोरङ्गाङ्गिभावेन सङ्करः।

वसन्ततिलका वृत्तम्॥ २॥

(ग) एता इति। एता दृश्यमानाः। चन्दनाश्वकर्ण-सरल-पाटलप्रायास्तरवो यत्र तत् तादृशं गहनं वनं यासु ताः, तथा परिणतैः पक्वैः मालूरैर्बिल्वफलैः सुरभयः सौरभविशिष्टाः, अरण्यगिरिभूमयः वनपर्वतस्थानानि। तरुणं नवीनं यत् कदम्ब-जम्बूवनं तेन अवनद्धो बद्धो विहितो योऽन्धकारः तेन गुरुर्निविड़ो निकुञ्जो लताद्या-च्छादितस्थानं यत्र तादृशे गभीरगह्वरे अगाधगुहायाम् उद्गारः प्रवाहप्रवेशादुत्थानं यस्य तादृशेन गोदावर्य्या नद्या रवेण शब्देन मुखरिताः शब्दायमानीकृताः, विशाला महत्यः, मेखलाभुवो नितम्बस्थानानि येषां तान् तथोक्तान्, दक्षिणारण्यभूधरान्

---

(१)···स्मारयन्ति···वनावबद्धान्धकारगुरुगिरिनिकुञ्जगुञ्जद्गभीर--गह्वरोद्गार--घोर--घोषण-गोदावरीमुखरितविशालमेखलाभुवः। इति पाठान्तरम्।

जयदेव ! भुवनभावन ! जय भगवन्नखिलवरद ! निगमनिधे ! ।
जय रुचिरचन्द्रशेखर ! जय मदनान्तक ! जयादिगुरो ! ! (१)॥४॥

दक्षिणादिग्वर्त्तिवनसंसृष्टपर्वतान् खारयन्ति मानिति शेषः। एतान् गिरीनवलोक्य दक्षिणारण्यगिरीन् स्मरामीत्यर्थः। अतएवात्र स्मरणालङ्कारः।

मधुमतीसिन्धुसंदाख्ययोर्नद्योः सम्भेदं सङ्गमस्थानं पावयति अवस्थानेन पवित्रीकरोतीति सः। अपौरुषेया केनापि पुरुषेणानिष्पादिता अनादिसिद्धा प्रतिष्ठा यस्य सः। सुवर्णानां विन्दवो लिङ्गोपरि चिह्नभावेनावस्थिताः स्वर्णकणा यत्र सः। सुवर्णविन्दुरिति नाम। अस्यैव च 'कालप्रियनाथः', 'महाकालः' इत्थं नामधेयमपि दृश्यते।

अत्र भवानीपतिरित्यनेन भवान्याः पत्यन्तरप्रतीतिकारित्वाद्विरुद्धमतिकारिता दोषः, स च 'पार्वतीपति'रिति पाठेन समाधेयः।

भक्तिविशेषोदयात् स्तौति जयेति। भुवनभावन ! चतुर्दशभुवनजनक ! अतो ममापि जनकत्वात् दयां कुरु इत्याशयः। अखिलानां सर्वेषां भक्तानां वरं वाञ्छितार्थं ददातीति सः, तत्सम्बोधनम्। सुतरां ममापि वाञ्छनीयां भक्तिं देहीति भावः। निगमनिधे वेदादिशास्त्राणामाधार ! अतो मे शास्त्रीयतत्त्वज्ञानं प्रतिपादयेत्यभिप्रायः। रुचिरो मनोहरः, चन्द्रः सर्वबीजाधारोऽपि शशाङ्कः शेखरे यस्य तत्सम्बोधनम्। एतेन भारभूतां मामपि धारयेत्याशयः। मदनान्तक ! सर्वदोषप्रधान कामनाशक ! तेन ममापि दोषं नाशयेति भावः। ब्रह्मणोऽप्युपदेष्टृत्वादादिगुरो ! सुतरां मह्यमपि तत्त्वज्ञानमुपदिशेत्यभिप्रायः।

अत्राभिप्रायविशेषैर्विशेषणानामुक्तत्वात् परिकरालङ्कारः। आर्य्या जातिः ॥ ४ ॥

---

(१) जय जगदादिगुरो ! । इति पाठभेदः।

गगनगमनमभिनीय ।

अयमभिनवमेघश्यामलोत्तुङ्गसानु-
मंदमुखरमयूरीमुक्तसंसक्तकेकः ।
शकुनिशवल-नीड़ानोकह-स्निग्धवर्ष्मा
वितरति वृहदश्मा पर्वतः प्रीतिमक्ष्णोः ॥ ५ ॥

अपि च (१) ।

दधति कुहरभाजामत्र भल्लूक-यूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।

अयमिति । अभिनवैर्मेघैः श्यामलाः श्यामवर्णाः- उत्तुङ्गा अत्युच्चाः सानवः समप्रदेशा यस्य सः । मदेन मुखराभिः शब्दायमानाभिः मयूरीभिर्मुक्तास्त्यक्ताः कृताः इत्यर्थः संसक्ताः सम्मिलिताः अविच्छिन्नाः केकाः स्ववाण्यो यत्र सः शकुनिभिः पक्षिभिः शबलाः कर्वुरवर्णा ये नीड़ानोकहा कुलायतरवः वासवृक्षा इत्यर्थः, तैः स्निग्धं वर्ष्म शरीरं यस्य सः ; तथा वृहन्तो विशाला अश्मानः पाषाणा यत्र सः, अयं दृश्यमानः पर्वतः अक्ष्णोश्चक्षुषोः प्रीतिं वितरति ददाति । नानावैचित्र्यमयत्वादिति भावः ।

मालिनी वृत्तम ॥ ५ ॥

दधतीति । अत्र पर्वते, कुहरभाजां गह्वरवासिनां भल्लूकयूनां तरुणभल्लूकानाम् अनुरसितेन प्रतिध्वनिना गुरूणि वर्द्धितानीत्यर्थः अम्बूकृतानि सनिष्ठीवशब्दाः थुत्कारशब्दा इति यावत् । थुत्कारस्तु भल्लूकानां स्वभावः । स्त्यानं वृद्धिं दधति धारयन्ति । वृहन्तः थुत्कारशब्दाः श्रूयन्त इत्यर्थः । शल्लकीनां लताविशेषाणां शिशिरः शीतलः, कटु कटुरसः, कषायः सुरभिश्च । इभैर्हस्तिभिः, दलिता मर्दिताः, अतएव विकीर्णा

(१) क्वचित् 'अपि चे'ति, पाठो नास्ति ।

शिशिरकटुकषायः स्त्यायते शल्लकीना-
मिभदलितविकीर्ण-ग्रन्थिनिष्यन्दगन्धः ॥ ६ ॥

ऊर्द्ध्वमवलोक्य । अये कथं मध्याह्नः । तथा हि सम्प्रति (१)

काश्मर्य्याः कृतमालमुद्गतदलं कोयष्टिकष्टीकते
नीराश्मन्तकशिम्बिचुम्बितमुखा (२) धावन्त्यपः पूर्णिकाः ।

---

इतस्ततो विचिप्ता ये ग्रन्थयः सधुक्लदेशाः तेषां निष्यन्दस्य निर्य्यासरसस्य गन्धः स्त्यायते वर्द्धते । हस्तिमदगन्धप्रसारादिति भावः ।

अत्र अम्बूकृतानां वृद्धिं प्रति अनुरसितगर्ज्जत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । यौवने बलाधिक्यात् ध्वनेर्दैर्घ्यसमर्थनाय भञ्ज कथूनामिति ध्रुवशब्दप्रयोगः । अतएव न अपुष्टत्वदोषः ।

"अम्बूकृतं सनिष्ठीवं" इत्यमरः । "कटुतिक्तकषायास्तु सौरभे च प्रकीर्त्तिता" इति हलायुधः । "अष्टकं शल्लकीलतायाः"मित्यमरकोषटीका ।

श्लोकोऽयमविकल एवोत्तररामचरितमहावीरचरितयोरपि दृश्यते ।

मालिनी वृत्तम् ॥ ६ ॥

काश्मर्य्या इति । कोयष्टिकः (कोड़ापाखी इति ख्यातः) पक्षिविशेषः, काश्मर्य्याः गम्भारीवृक्षात्, उद्गतानि नवोत्पन्नानि दलानि पर्णानि यस्य तं कृतमालं (सोंदालि इति ख्यातं) आरग्वधवृक्षं टीकते गच्छति । आतपतापात् छायामिच्छयेति भावः नीराश्मन्तकानां तटस्थितानां तृणविशेषाणां (अम्लकचाड़ इति प्रसिद्धानां) शिम्बिषु (छिम इति ख्यातासु) चुम्बितं तद्भोजनाय संयुक्तं मुखं यासां ताः, पूर्णिकाः नासाच्छिन्नीनामकपक्षिणः, अपो जलानि धावन्ति रवितापात् पातुं द्रुतं गच्छन्ति । दात्यूहैः

(१) कथं मध्याह्नः । तथाह्येव सम्प्रति, इति पाठान्तरम् ।

(२) ...चुम्बितमुखा इत्यपि पाठः ।

दात्यूहैस्तिनिशस्य कोटरवति स्कन्धे निलीय स्थितम्
वीरुन्नीड़कपोत-कूजितमनुक्रन्दन्त्यधः कुक्कुभाः ॥ ७ ॥

तद्भवतु, माधवमकरन्दावन्विष्य यथाप्रस्तुतं साधयामि (१)।

इति निष्क्रान्ता। (घ)

## विष्कम्भकः (२)। (ङ)

ततः प्रविशति माधवो मकरन्दश्च।

मक। सकरुणं निःश्वस्य।

(डाहुक इति ख्यातैः) पक्षिविशेषैः, तिनिशस्य (मधुरादौ तिनाश इति प्रसिद्धस्य) वृक्षविशेषस्य कोटरवति वासोपयोगिविवरविशिष्टे स्कन्धे प्रकाण्डदेशे निलीयविलीनं भूत्वा स्थितम्। भावे क्तः। तथा कुक्कुभाः (पातुकुका इति ख्याताः) पक्षिविशेषाः अधस्तिष्ठन्तः, वीरुत्सु लतासु यानि नीड़ानि कुलायास्तेषु स्थितानां कपोतानां कूजितम् अव्यक्तशब्दम् अनुक्रन्दन्ति अनुकृत्य रुवन्ति। एते हि पक्षिस्वभावाः।

अत्र सन्ध्याङ्गप्रतिपादनकार्य्ये प्रति बहुतरकारणोपन्यासात् समुच्चयोऽलङ्कारः, तथा प्रथमार्द्धे छेकानुप्रासः, चतुर्थपादे वृत्त्यनुप्रासश्च इत्येषां मिथोनैरपेक्ष्यात् संसृष्टिः।

इह कोषप्रमाणान्यनुसन्धेयानि। शार्दूलविक्रीड़ितं वृत्तम् ॥ ७ ॥

(घ) तदिति। प्रस्तुतमनतिक्रम्येति यथाप्रस्तुतं माधवस्याश्वासनमित्यर्थः।

(ङ) विष्केति। अत्र "स्थानं परित्यज्य बृहद्द्रोणीशैलकान्तारप्रदेशं परिभ्रमतः" इत्यनेन वृत्तकथांशनिदर्शनम्, "माधवमकरन्दावन्विष्य यथाप्रस्तुतं साधयामि" इत्यनेन च वर्त्तिष्यमाणकथांशनिदर्शनमनुसन्धेयम्। स चायं शुद्धो विष्कम्भकः, मध्यमैकपात्रप्रयोजितत्वात्। "शुद्धविष्कम्भः" इति पाठान्तरमपि।

(१) सान्त्वयामि, इति पाठान्तरम्।

(२) शुद्धविष्कम्भ इति पाठभेदः।

न यत्र प्रत्याशा मनुपतति नो वा रहयति
प्रविचित्रं (१) चेतः प्रविशति च मोहान्धतमसम् ।
अकिञ्चित्कुर्वाणाः पशव इव तस्या वयमहो
विधातुर्वामत्वाद्विपदि परिवर्त्तामह इमे ॥ ८ ॥

माध । हा प्रिये मालति ! क्कासि, कथमविज्ञाततत्त्वमङ्गत-

न यत्रेति । चेतः अस्माकं मनः कर्तृ, यत्र विपदि, प्रत्याशा पुनरपि मालतीं प्राप्स्याम इत्येवमाशा न अनुपतति न लभते ; प्रतर्शोऽन्वेषणेनापि तन्निर्णयाभावादिति भावः । नो वा रहयति, पुनरपि मालतीं प्राप्स्याम इत्याशा न वा परित्यजति ; त्रिकालज्ञया महायोगिन्या कामन्दक्या (षष्ठाङ्के) माधवस्य मालतीलाभावधारणादिति भावः । किञ्चेति चार्थः । प्रविचितं संशयेन परिचालितम् अप्राप्तिशङ्कया अधीरीकृतं वा सत् (चेतः) मोह एव कर्त्तव्याकर्त्तव्यविवेकाभाव एव अन्धतमसं गाढान्धकारः, तत् प्रविशति । किमिदानीं करणीयं किंवा न करणीयमित्यवधारयितुं न शक्नुम इत्यर्थः । इमे वयं विधातुर्वामत्वात् दैवस्य प्रतिकूलत्वात् पशव इव केवलाहारनिद्रा-परायणा इत्यभिप्रायः, तस्या मालत्याः, अकिञ्चित्कुर्वाणाः कमप्युपकारं न कुर्वाणाः सन्तः विपदि मालत्या अनिरूपणरूपायां विपत्तौ परिवर्त्तामहे अवतिष्ठामहे । शोके, अहोशब्दः, पुरुषकारवन्तोऽपि वयं प्रतिकूलदैववशादेव मालत्याः किमपि कर्तुं न शक्नुम इति भावः ।

अत्र अनुपतति प्रभृतीनामनेकक्रियाणां चेत इत्येककर्तृकारकत्वाद्दीपक-मलङ्कारः, पशव इवेति श्रौत्युपमा च, अनयोर्मिथोनैरपेक्ष्यात् संसृष्टिः ।

"अहो धिगर्थे शोके च" इत्यादि मेदिनी । रह इति चौरादिगणीयः शिखरिणी वृत्तम् ॥ ८ ॥

(च) माधवेति । अविज्ञातम् अनवगतं तत्त्वं याथार्थ्यं यस्य तत्, तादृशं अद्भुततमं

(१) प्रतिचिन्नमित्यपि पाठः

तमं (१) झटिति पर्य्यवसितासि । नन्वकरुणे ! प्रसीद, सम्भावय माम् । (च)

प्रियमाधवे ! किमसि मय्यवत्सला
+ ननु सोऽहमेव यमनन्दयत् पुरा ।
* स्वयमागृहीत-कमनीयकङ्कण-
स्तव मूर्त्तिमानिव महोत्सवः करः ॥ ९ ॥

वयस्य मकरन्द ! दुर्लभः पुन (२) र्जगति तावतः स्नेहस्य सम्भवः । (छ)

अतीवाश्चर्य्यं झटिति सहसा पर्य्यवसितासि परिणतासि । मुहूर्त्तमध्य एव नितान्तनिरुद्दंशादाश्चर्य्यतयैव त्वं परिणतेति भावः ।

प्रियेति । प्रियो माधवो यस्यास्तत्सम्बोधनम् । अथवा प्रियमाधवे मयि किं कथम् अवत्सला स्नेहहीना असि । कारणाभावे तवेदमवात्सल्यमेकान्तमनुचितमिति भावः । नन्वित्यनुनये । अहं स एव : पुरा पूर्वं शङ्करगृहान्निर्गमानन्तरमित्यर्थः ; आगृहीतं धृतं कमनीयं मनोहरं कङ्कणं हस्ताभरणविशेषो येन तादृशः ; मूर्त्तिमान् महोत्सवो महानानन्द इव तव करः पाणिः यं स्वयमात्मनैव नत्वन्यनियोगेनेत्यर्थः अनन्दयत् सन्तोषितवान् । सुतरां मां प्रति वात्सल्येन तव दर्शनदानमिदानीमेकान्तमुचितमिति भावः ।

अत्र भावाभिमानिनी वाच्या गुणोत्प्रेक्षाऽलङ्कारः । उत्सवस्य सुखविशेषतया गुणत्वात् ।

द्वितीयार्द्धमुत्तररामचरितप्रथमाङ्केऽपि रामेण पठितं, किन्तु तत्र स्वयमित्यत्र अयमिति पाठवैषम्यम् । मञ्जुभाषिणी वृत्तम् ॥ ९ ॥

(छ) वयस्येति । तावतः तत्परिमाणस्य अतिमहतः इत्यर्थः ।

(१) अद्भुतमिति पाठभेदः । * अयमिति क्वचित् पाठः । (२) खलु, इत्यपि पाठः

सरसकुसुमच्छामैरङ्गैरनङ्गमहाज्वर-
स्थिरमविरतोन्माथी सोढः प्रतिक्षणदारुणः ।
तृणमिव ततः प्राणान्मोक्तुं मनो विधृतं तया
किमपरमतो निर्व्यूढं यत् करार्पणसाहसम् ॥१०॥

अपि च ।

मयि विगलितप्रत्याशत्वाद्विवाहविधेः पुरा
विकलकरणैर्मर्मच्छेदव्यथाविधुरैरिव ।

स्नेहस्यातिमहत्त्वं प्रदर्शयति सरसेति । तया मालत्या, सरसानि अभिनवत्वात् मधुप्लुतानि यानि कुसुमानि तद्वत् छामैः अबलैः कोमलैः, अङ्गैः, अविरतोन्माथी अजस्रदुःखदायी, प्रतिक्षणदारुणः सर्वदा भयङ्करः, न तु साधारणज्वरवत् सविराम इति भावः, अनङ्गः काम एव महाज्वरः कामजनितो वा सन्तापः सोढः सह्यः कृतः । ततस्तदनन्तरं, नन्दनाय दाननिश्चये सति मां प्रति नैराश्यानन्तरमित्यर्थः, तृणमिव प्राणान् मोक्तुं परित्यक्तुं मनो विधृतं चित्तं स्थिरीकृतम् इच्छा कृतेत्यर्थः, तन्तु मया शङ्करायतने निभृतस्थितेनावगतमिति भावः । ततश्च यत् करार्पणसाहसम् आत्मना पाणिग्रहणसाहसं निर्व्यूढं मालत्याः प्रकाशान्निष्पन्नम् अतः अपरं स्नेहस्य महत्त्वं किं ब्रूम इति शेषः । स्नेहवशादेव पित्रादीननपेक्ष्य स्वयमेव मालत्या स्वपाणिर्मया ग्राहितः सुतरामितोऽधिकः स्नेहो जगति नास्त्येवेति भावः ।

अत्र सरसकुसुमच्छामैरिति लुप्तोपमा, तृणमिवेति श्रौत्युपमा, अनयोः परस्परनिरपेक्षत्वात् संसृष्टिः ।

"छामः (त्रि)···अबल" इति शब्दकल्पद्रुमः । हरिणी वृत्तम् ॥ १० ॥

मयीति । हे वयस्य मकरन्द ! असौ मालती, विवाहविधेः पुरा नन्दनेन सह विवाहानुष्ठानात् पूर्वं, मयि विगलितप्रत्याशत्वात् नन्दनेन सह विवाहनिश्चयेन मम लाभे नैराश्यात्, मर्मच्छेदव्यथया हृदयविदारणवेदनया विधुरैः विह्वलैरिव सद्भिः विकल-

स्मरसि रुदितैः स्नेहाकूतं तथा व्यतनोदसा-(१)
वहमपि यथाऽभूवं पीड़ातरङ्गितमानसः ॥११॥

सावेगम् । अहोनुखलुभोः ! । (ज)

दलति हृदयं गाढ़ोद्वेगं द्विधा तु न भिद्यते,
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।

---

करणैः स्वस्वविषयग्रहणासमर्थैरिन्द्रियैरुपलक्षिता सतीत्यर्थः, रुदितैः क्रन्दनैः, तथा तादृशं सातिशयमिति तात्पर्य्यं, स्नेहाकूतं मयि प्रेमाभिप्रायं व्यतनोत् विस्तारितवती रोदनव्याजेन मयि तादृशं प्रणयाभिलाषं प्रकटितवतीत्यर्थः, यथा येन स्नेहाकूतेन अहमपि, पीड़या तदीयासह्यवेदनादर्शनजनितकष्टेन तरङ्गितमानसः चञ्चलचित्तः अधीरः अभूवं भूतवानस्मि। इति त्वं स्मरसि ? इति काकुः। सुतरां जगति तावतः स्नेहस्य पुनः सम्भवो दुर्लभ एवेति भावः।

अत्र मर्म्मच्छेदव्यथाविधुरैरिवेति वाच्या भावाभिमानिनी गुणोत्प्रेक्षाऽलङ्कारः। वैधर्य्यस्य दुःखरूपत्वेन गुणत्वात् ।

हरिणी वृत्तम् ॥ ११ ॥

(ज) सावेगमिति । तत्तत्स्मरणेन विशेषशोकोदयात् सावेगमिति । 'अहो-नुखलुभोः' इत्येकमव्ययं महाविषादे ।

दलतीति । गाढ उद्वेगो मालतीविरहजनितं दुःखं यत्र तत्, हृदयं दलति तदुद्वेगेनामर्दितं भवति, तु किन्तु द्विधा न भिद्यते द्विखण्डं न भवति । तथात्वे न खल्वीदृशं दुःखमनुभवेयमिति भावः। विकलः शोकविह्वलः कायो देहः मोहं मूर्च्छां वहति भजते, किन्तु चेतनां चैतन्यं न मुञ्चति चिराय न परित्यजति । तदाऽपि ईदृश-दुःखानुभवो न स्यादिति भावः । अन्तर्दाहः अन्तःकरणशोकसन्तापः तनूं शरीरं ज्वलयति सन्तापयति, किन्तु भस्मसात् भस्मनि सम्पद्यमानां भस्मीभूतां न करोति। तथा सत्यपि शोकाग्नेरुपशमो भवेदिति भावः। तथा मर्म्मच्छेदी हृदयविदारी, विधिः

ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥१२॥

मक। वयस्य माधव ! (१) निरवग्रहं (२) दहति दैवमिव दारुणो विवस्वान् ; इयञ्च ते शरीरावस्था ; तदस्य पद्मसरसः परिसरे मुहूर्त्तमास्यताम्। अत्र हि (फ)

दैवं प्रहरति ताडयति, किन्तु जीवितं जीवनं न कृन्तति न छिनत्ति न विनाशयतीत्यर्थः। एवमपि सति दुःखनिवारणं भवेदिति भावः। मालतीविरहेण दुःसहदुःखानुभवान्ममेदानीं मरणमेव श्रेय इत्यभिप्रायः सर्वत्र।

अत्र हृदयामर्दनरूपकारणे सत्यपि द्विधाभेदरूपफलाभावात्, मूर्च्छाप्राप्तिरूपहेतौ विद्यमानेऽपि चैतन्यलोपरूपकार्य्याभावात्, देहज्वलनलक्षणकारणे वर्त्तमानेऽपि भस्मरूपतत्फलाभावात् प्रहारात्मककारणे सत्यपि जीवनविनाशरूपफलाभावाच्च चत्वारो विशेषोक्त्यलङ्काराः, तेषाञ्च परस्परनैरपेक्ष्येणस्थितेः संसृष्टिः।

अत्र खेदो नाम विमर्षसन्ध्यङ्गम। यथा दर्पणे—"मनश्चेष्टासमुत्पन्नः श्रमः खेद इति स्मृतः।" दर्पणकारेणापि तदेदमेवोदाहृतम्।

"उद्वेगो विरहजन्यदुःखमिति रसमञ्जरी।"

श्लोकोऽयमुत्तररामचरिततृतीयाङ्केऽपि रामेण पठितः, किन्तु तत्र '···गाढोद्वेगो द्विधा न तु ··' इतिमात्रं पाठवैषम्यं दृश्यते।

हरिणी वृत्तम् ॥ १२ ॥

(फ) मकेति। निरवग्रहं दुर्निवारम्। दैवं विधिः। इयं नितान्तक्लान्तरूपा। पद्मसरसः पद्मप्रधानदीर्घिकायाः, परिसरे तीरे, मुहूर्त्तं कियन्तं कालम्, आस्यताम् उपविश्यताम्। दारुणं दुर्निवारं दुर्दैवं यथेदानीमस्मान् सन्तापयति तथैव सूर्य्योऽपीत्यर्थः।

---

(१) क्वचित् "वयस्य माधव" इति पाठो नास्ति।

(२) निरवग्रह इत्यपि पाठः।

उन्नाल-बाल-कमलाकर-माकरन्द-
निष्यन्द-संवलित(३)-मांसल-गन्धबन्धुः ।
त्वां प्रीणयिष्यति पुरः (४) परिवर्त्तमान-
कल्लोल-शीकर-तुषार-जड़ः समीरः ॥१३॥

अत्र पूर्णोपमाऽलङ्कारः । तथा देवं विवस्वानिति लिङ्गभेदात् । "सुधेव विमल-श्चन्द्र" इति दर्पणोदाहृतवत् भग्नप्रक्रमतादोषः, स तु 'निरवग्रहो दहति विधिरि'वेति पाठेन समाधेयः ।

उन्नालेति । उद्गतानि शीर्षावमानि जलाल्लत्वादुत्थितानि नालानि येषां ते, बाला नूतनाः, ये कमलाकराः पद्मसमूहाः तेषां माकरन्दनिष्यन्देन मधुक्षरणेन संवलितः सम्मिलितः यो मांसलगन्धः परिपुष्टं सौरभं तेन बन्धुः सुहृत्स्वरूपः । पुरः अग्रतः परिवर्त्तमानाः दीर्घिकाजले सर्व्वतः समुत्पद्यमानाः, ये कल्लोला विशाल-तरङ्गाः तेषां शीकरैर्बिन्दुभिः तुषारवत् नीहारवत् जड़ः शीतलः समीरो वायुः, त्वां प्रीणयिष्यति श्रान्तिमपनीय सन्तोषयिष्यति । अतएवात्रोपवेशनमेकान्तसमुचितमिति भावः ।

अत्रारोप्यमाणस्य बन्धुत्वस्य प्रकृतप्रीणनोपयोगित्वात् परिणामाऽलङ्कारः, तथा "सुषीमः शिशिरो जड़ः । तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः ।" इत्यमर-कोषप्रामाण्येन आपाततस्तुषारजड़योः पौनरुक्त्यप्रतीतेः, परन्तु "तुषारस्तुहिनं हिम" मित्यनेन तुषारशब्दस्य नीहारपरत्वावगमात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासो-ऽलङ्कारस्य अनयोरङ्गाङ्गिभावेन सङ्करः । वृत्त्यनुप्रास-च्छेकानुप्रासावपीति समुदाये संसृष्टिः ।

(१)···संवलन...इति पाठान्तरम् ।

(२) पुनरिति पाठोऽपि ।

इति परिक्रम्योपविशतः।

मक। स्वगतम्। भवतु। एवं तावदन्यतः प्रक्षिपामि (१)। (ञ)

प्रकाशम्। वयस्य माधव!

एतस्मिन् मदकल-मल्लिकाक्ष-पक्ष-
व्याधूत-स्फुरदुरुदण्डपुण्डरीकाः।
वाष्पाम्भःपरिपतनोद्गमान्तराले
दृश्यन्तामविरहितश्रियो विभागाः॥ १४॥

"आकरो निवहे खने।" इति हेमः। मकरन्दानामयमिति माकरन्दः, इदमर्थेऽण्, स चासौ निष्यन्दश्चेति माकरन्दनिष्यन्दः।

वसन्ततिलका वृत्तम्॥ १३॥

(ञ) मकेति। एवमनेन प्रकारेण, अन्यतः प्रक्षिपामि अन्यस्मिन् विषये माधवस्य मनः सञ्चालयामि। अन्यथा केवलमालतीविषये मनःसन्निवेशे माधवस्यातीव विषमावस्था सम्पद्येतेति भावः।

एतस्मिन्निति। एतस्मिन् सरसि मदकला मदमत्ता ये मल्लिकाक्षा मलिनचञ्चु-चरणयुक्ता हंसाः, तेषां पक्षैः व्याधूतानि कम्पितानि स्फुरन्ति प्रकाशमानानि उरु-दण्डानि वृहन्मृणालानि पुण्डरीकाणि श्वेतपद्मानि येषु ते। अतएव अविरहिता अपरित्यक्ता श्रीः शोभा यैस्ते, सुश्रीका इत्यर्थः, विभागा जलमयप्रदेशाः, वाष्पाम्भसां अश्रुजलानां परिपतनं क्षरणम्, उद्गमः पुनरुत्पत्तिः तयोरन्तराले मध्ये, एको वाष्पाम्बु-विन्दुः पतितः यावदन्य उत्पद्यते तावत्कालमध्य इत्यर्थः, एतेनाविरतरोदनं ध्वनितम्। दृश्यन्ताम्। चित्तविनोदनाय इति भावः।

अत्र दण्डपुण्डेति व्यञ्जनानामनेकधा सकृत् साम्यात् छेकानुप्रासोऽलङ्कारः।

(१) एवं तावदाक्षिपामि। इति पाठभेदः।

मक। कथं प्रतिपत्तिशून्य (१)-मुत्थायान्यतः प्रवृत्तः। निःश्वस्योत्थाय। (२)। सखे! प्रसीद। पश्य (ट)

वानीरप्रसवैर्निकुञ्जसरितामासक्तवासं पयः-
पर्य्यन्तेषु च यूथिकासुमनसामुज्जृम्भितं जालकैः।
उन्मीलत्कुटजप्रहासिषु गिरेरालम्ब्य सानूनिह (३)
प्राग्भारेषु(४)शिखण्डिताण्डवविधौ मेघैर्वितानाय्यते(५)॥१५॥

---

श्लोकोऽयमुत्तररामचरितप्रथमाङ्केऽपि रामेण पठितः, किन्तु तत्र 'संहृष्टाः कुवलयिनो भुवो विभागाः' इति चतुर्थचरणवैषम्यम्।

प्रहर्षिणी वृत्तम्॥ १४॥

(ठ) मकेति। प्रतिपत्तिशून्यम् अन्यमनस्कतया मद्वाक्यार्थज्ञानरहितं यथा स्यात्तथा उत्थाय, अन्यतः प्रवृत्तः, अन्यत्र गन्तुमारभते। प्रसीद मां प्रति प्रसन्नः सन् मद्वाक्यं शृणु इत्यर्थः।

वानीरेति। निकुञ्जयुक्ताः सरित इति निकुञ्जसरितः शाकपार्थिवादित्वान्मध्यपदलोपी समासः। निकुञ्जसरितां लताद्याच्छादितस्थानान्वितानां नदीनां पयो जलं वानीरप्रसवैः वेतसपुष्पैः करणैः आसक्तो लग्नो वासः सौरभं यत्र तत् आसक्तवासं सत् वर्त्तते। पर्य्यन्तेषु च तीरप्रान्तेषु च यूथिकासुमनसां यूथिकापुष्पाणां जालकैः कलिकाभिः उज्जृम्भितं विकसितं भावे क्तः। मेघैः उन्मीलतां विकसतां कुटजानां कुटजकुसुमानां प्रकृष्टो हासः प्रहासः शोभा एषामस्तीति तेषु, गिरेः पर्व्वतस्य प्राग्भागेषु ऊर्द्ध्व-

(१) निष्प्रतिपत्तिशून्यमिति पाठान्तरम्।

(२) निःश्वस्योत्थाय च इत्यपि पाठः।

(३) सानूनितः इति पाठभेदः। (४) प्राग्भारेषु इति पाठोऽपि।

(५) वितानायते इति क्वचित् पाठः।

अपि च ।

जृम्भा-जर्जर-डिम्ब-डम्बर-घन-श्रीमत्कदम्बद्रुमाः
शैलाभोगभुवो भवन्ति ककुभः कादम्बिनीश्यामलाः ।
उद्यत्कन्दल-कान्तकेतकभृतः कच्छाः सरित्स्रोतसा-
माविर्भूत(१)-शिलीन्ध्र-लोध्र-कुसुमस्मेरा वनानां ततिः ॥१६॥

देशेषु सानून् समदेशान् आलम्ब्य आश्रित्य शिखण्डिताण्डवविधौ मयूरनृत्यानुष्ठानविषये वितानायते आच्छादकत्वात् चन्द्रातपवत् आचर्य्यते ।

अत्र कार्य्येण, उन्मीलन्मदानां तरुणानां कौतुकहासविशिष्टे सभामण्डपे नर्त्तकनृत्यविधौ प्रसारितस्य वितानस्य व्यवहारसमारोपात् समासोक्तिरलङ्कारः, स च काव्यगतोपमाऽनुप्राणित इत्यङ्गाङ्गिभावेन सङ्करः ।

शार्दूलविक्रीड़ितं वृत्तम् ॥ १५ ॥

जृम्भेति । शैलाभोगभुवः पर्व्वतप्रान्तविस्तृतभूमयः, जृम्भया विकासेन जर्जरः विश्लिष्टदलः, यो डिम्बडम्बरः पुष्पगोलकसमूहः, तेन घनश्रीमन्तः निविड़शोभाविशिष्टाः कदम्बद्रुमा नीपवृक्षा यासु तास्तथाभूता भवन्ति । ककुभो दिशः कादम्बिन्या मेघमालया श्यामलाः श्यामवर्णा भवन्ति । तथा सरित्स्रोतसां नदीप्रवाहाणां कच्छा जलप्रायप्रदेशाः, उद्यद्भिर्भूतल उत्पद्यमानैः कन्दलैः नवाङ्कुरैः कान्ता मनोहरा ये केतकाः ( केया इति ख्याताः ) केतकीवृक्षाः तान् बिभ्रतीति ते तथोक्ता भवन्ति । तथा वनानां ततिः श्रेणिः, आविर्भूतैः प्रकाशितैः शिलीन्ध्रलोध्रयोः कन्दलीलोध्रवृक्षयोः कुसुमैः स्मेरा सान्द्रहासा भवति । एतानि वर्षाकालस्वभावजसौन्दर्य्याणि पश्य, तेन चात्मानं विनोदयेति भावः ।

(१) आविर्गन्ध ··इति भिन्नः पाठः ।

माध। सखे! पश्यामि, किन्तु दुरालोकरमणीयाः सम्प्रत्य-रण्यभूमयः (१)। तत् किमेतत्। सास्रम्। अथवा किमन्यत्। (ठ)

उत्फुल्लार्जुनसर्जवासित-वहत्-पौरस्त्यझञ्झाऽनिल- (२)
प्रेङ्खोल-स्खलितेन्द्रनील-शकल-स्निग्धाम्बुदश्रेणयः।

---

अत्र वर्षाकालस्य वर्णनीयत्वेन प्रस्तुतानां तादृशशैलाभोगभूप्रभृतीनामेकया भवन्तीति क्रियया कर्त्तृतयाभिसम्बन्धात्तुल्ययोगिताऽलङ्कारः, वृत्त्यनुप्रासश्च अनयोः संसृष्टिः।

"जृम्भा जृम्भे विकासे च" इति विश्वः। "डिम्बोऽण्डेऽपि च गोलके" इति धरणिः। "कन्दलन्तु नवाङ्कुरे" इत्यादि हेमः।

शार्दूलविक्रीडितं वृत्तम्॥ १५॥

(ठ) माधेति। पश्यामि तवानुरोधादिति भावः। सम्प्रति मालत्या विच्छेद-काले। दुरालोकाश्च ता रमणीयाश्चेति ताः, रमणीया अपि स्मरोद्दीपकतया मादृशानां दुःखेन दृश्या इत्यर्थः। तत् तस्मात् एतत् किम् अशान्तिकराणामेव पदार्थानां शान्त्युपायतया तवोदाहरणं किमर्थमित्यर्थः। ममाशान्तिकरपदार्थानामिदानीं स्वय-मेवोपस्थितत्वात् मकरन्दं प्रति दोषारोपो नितरामन्याय्य एवेति ज्ञानोदयेनानिवार्य्य-शोकोदयात् सास्रमिति। किमन्यत् ममाशान्तिकरादन्यत् किमस्तीत्यर्थः।

तदेव प्रतिपादयन्नाह उत्फुल्लेति। अधुना, उत्फुल्लैर्विकसितैः अर्जुनसर्ज्जैः अर्ज्जुनपुष्पशालपुष्पैः, वासितः सुगन्धीकृतः, वहन् प्रवहन्, पौरस्त्यः पूर्वदिग्वर्त्ती, यो झञ्झानिलः प्रचण्डवायुः, तस्य प्रेङ्खोलेन आन्दोलनेन स्खलिता विच्युता चलिता इन्द्र-नीलशकलवत् मरकतमणिखण्डवत् स्निग्धा अम्बुदश्रेणिर्मेघमाला येषु ते। धारया

(१) अरण्यगिरितटभूमयः, इति पाठान्तरम्।

(२)···झञ्झामरुत्···इति पाठभेदः।

धारासिक्तवसुन्धरासुरभयः प्राप्तास्त एवाधुना
घर्म्माम्भोविगमागमव्यतिकर-श्रीवाहिनो वासराः ॥१७॥

हा प्रिये मालति !

तरुणतमाल-नील-बहुलोन्नमदम्बुधराः
शिशिर-समीरणावधुत-नूतन-वारिकणाः ।
कथमवलोकयेयमधुना हरिहेतिमतो-
मदकल-नीलकण्ठ-कलहैर्मुखराः ककुभः ॥१८॥

---

वृष्टिधारया सिक्ता या वसुन्धरा भूमिः तया सुरभयः नानाविधाङ्कुरोद्गमैः सौरभविशिष्टीकृताः । तथा घर्म्माम्भसोर्विगमागमयोर्घर्म्मस्य ग्रीष्मस्य विगमः अतीतत्वम्, अम्भसो वृष्टेरागम उपस्थितिः तयोरित्यर्थः, व्यतिरकेण आनन्तर्य्येण सम्पर्केण या श्रीः शोभा तां वोढुं शीलं येषां ते तथोक्ताः, त एव येषु मालत्या सह विहरिष्यामीति पूर्व्वं सङ्कल्पितं त एव वासरा वर्षाकालीयदिवसाः प्राप्ता उपस्थिताः । सुतरामिदानीं मालतीविरहसमये इतोऽधिकं किमशान्तिकरमस्तीति भावः ।

अत्र द्वितीयपादे लुप्तोपमालङ्कारः । वृष्टेरिति विशेषे अभिधातव्ये अम्भ इति सामान्याभिधानात् विशेषे अविशेषाख्यदोषः, स तु 'ग्रीष्मप्रावृडपागमागमकृत-श्रीवाहिनो वासराः' इति पाठेन समाधेयः ।

शार्दूलविक्रीड़ितं वृत्तम् ॥ १७ ॥

तरुणेति । तरुणतमालवत् नवीनतमालवृक्षवत् नीलाः श्यामलाः, बहुलाः अम्बुधरा मेघा यासु ताः । शिशिरसमीरणैः शीतलवायुभिः अवधुता विक्षिप्ताः नूतना वारिकणाः वृष्टिजललवा यासु ताः । हरेरिन्द्रस्य हेतिरस्त्रं धनुरित्यर्थः, तद्वतीः, तथा मदकलानां मदमत्तानां नीलकण्ठानां मयूराणां कलहैः कोलाहलैः मुखराः शब्दायमानाः, ककुभो दिशः, अधुना मालतीविच्छेदकाले कथमवलोकयेयं केन प्रकारेण द्रष्टुं शक्नुयाम् । नितान्तोद्दीपकतया कथमपि नेत्यर्थः ।

निःश्वस्य (१) शोकाग्निं नाटयति।

मक। कोऽप्यतिदारुणो दशाविपाको वयस्यस्य सम्प्रति वर्त्तते। सास्रम्। मया पुनरज्ञानेन वज्रमयेन किल विनोदः प्रारब्धः। निःश्वस्य। एवञ्च पर्य्यवसितप्रायैव नो माधव-प्रत्याशा। सभयं विलोक्य। कथं प्रमुग्ध एव। हा सखि मालति! किमपरम्। निरनुक्रोशासि (२)। (ङ)

अत्रापि प्रथमे पादे लुप्तोपमाऽलङ्कारः। तथा इन्द्रधनुरिति विशेषे वाच्ये हरि-हेतीति सामान्यवचनात् विशेषे अविशेषाख्यदोषः, 'हरिचापवती'रिति पाठे तु तत्-समाधानम्। अत्र दिष्टं नाम नाट्यलक्षणं "देशकालस्वरूपेण वर्णनादिष्टमुच्यते।" इति लक्षणात्।

"कलहं कलकलेऽपि च" इति जगद्धरधृतविश्वः। "हेतिः स्यादायुधज्वाला सूर्य्यतेजःसु योषिति।" इति मेदिनी।

नर्द्दटकं वृत्तम्। "यदि भवतो नजौ भजजला गुरु नर्द्दटक"मिति लक्षणात्॥ १८॥

(ङ) मकेति। कोऽपि अनिर्वचनीयः, दशाविपाकः अवस्थापरिणामः। अज्ञानेन ज्ञानहीनेन शोकोद्दीपकपदार्थस्यैव विनोदनोपायत्वेनोपन्यासादिति भावः। वज्रमयेन नितान्तकठिनहृदयेनेत्यर्थः, वयस्यस्य ईदृग्दशादर्शनेऽपि जीवनधारणादिति भावः। विनोदः सान्त्वनोपायः। नोऽस्माकम्। पर्य्यवसितप्रायैव प्रायेण परिसमाप्तैव।

(१) क्वचित् 'निःश्वस्य' इति पाठो नास्ति।

(२)···सम्प्रति वयस्यस्य। मया पुनर्वज्रमयेन कोऽपि विनोद आरब्धः। निःश्वस्य। एवं पर्य्यवसितप्रायैव नो माधवं प्रति प्रत्याशा।···एव···। आकाशे। सखि!··· इति पाठान्तरम्।

**अपहस्तितबान्धवे ! त्वया विहितं साहसमस्य तृष्णया ।**
**तदिहानपराधिनि प्रिये सखि ! कोऽयं करुणोज्झितः क्रमः ॥१९**
**कथमद्यापि नोच्छ्वसिति । हन्त ! मुषितोऽस्मि दैवेन(१) ।(ढ)**

---

इतः परं माधवस्य जीवनधारणासम्भवादिति भावः । प्रमुग्ध एव मूर्च्छित एव । किमपरं ब्रवीमीति शेषः । गतप्रायमस्य जीवनमित्याशयः । अतएव निरनुक्रोशा निर्दयासि । यः खलु स्वजीवनममतां विहाय त्वामघोरघण्टहस्तात् परित्रातवान्, तस्यैव त्वदर्थं जीवननाशे प्राप्ते अनागमनात् त्वं निर्दयैवासीति भावः ।

अत्र द्युतिर्नाम विमर्षसन्धेरङ्गम् । "तर्जनोद्वेजने प्रोक्ता द्युति"रिति लक्षणात् ।

अपेति । अपहस्तिता अगणिताः बान्धवाः पित्रादयो यया तत्सम्बोधनम् । सख्युर्जायात्वेन "शरीरार्द्धं स्मृता जाया" इति बृहस्पतिस्मरणात् सखीति सम्बोधनम् । त्वया अस्य माधवस्य तृष्णया लाभलोभेन साहसं विहितं स्वयमेव पाणिग्रहणात् साहसं कृतम् । ततस्मात् अनपराधिनि इह अस्मिन् प्रिये वल्लभे माधवे, करुणो- ज्झितः दयाहीनः कोऽयं क्रमः कस्तवायं व्यवहारः, यदासन्नमरणसमयेऽपि दर्शनं न ददासीत्यर्थः । नितान्तमनुचितमेतदिति भावः ।

अत्र अपराधाभावेऽप्यपराधकार्य्यनिर्दयव्यवहारोत्पत्तेर्विभावनाऽलङ्कारः । तथा अनुरागविपरीतनिर्दयव्यवहारात् गुणातिपातो नाम नाट्यलक्षणम् । तथा च दर्पणे—

"गुणातिपातः कार्य्यं यत् विपरीतं गुणान् प्रति ।"

अपगतौ हस्तौ हस्तक्षेपः कर्त्तृत्वं येषां ते अपहस्ताः । अपहस्ताः कृता इति; करोत्यर्थे ण्यन्तात् कर्म्मणि क्तः ।

सुन्दरी वृत्तम् ॥ १९ ॥

(ढ) कथमिति । नोच्छ्वसिति चैतन्यं न लभते । मुषितोऽस्मि वयस्यरत्न- हरणात् चोरितोऽस्मि ।

(१) कुत्रचित् 'दैवेन' इति पाठो नास्ति ।

मातर्मातर्दलति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति, कथं मन्दभाग्यः करोमि ॥२०॥

कष्टं भोः! कष्टम्। (ण)

मातरिति। कामन्दकीमुद्दिश्य मातर्मातरिति सम्बोधनम्। विषादे च द्विरुक्तिः। हृदयं कर्तृ दलति विदीर्य्यते। सर्वत्र वयस्यविच्छेदशोकेनेति भावः। देहबन्धः शरीरग्रन्थिः ध्वंसते विनश्यति स्खलति वा। जगत् भुवनं शून्यं पदार्थरहितम् अथ च अविरता अविश्रान्ता ज्वाला सन्तापो यस्मिन् तत् तथोक्तं मन्ये अनु-भवामि, अन्तः मध्ये ज्वलामि अन्तरं दग्धं भवतीत्यर्थः। विधुरो विह्वलः अन्तरात्मा जीवः सीदन् अवसन्नः सन् अन्धे अन्धङ्करणे गाढ़ इत्यर्थः, अन्धकारे मज्जतीव लीयत इव, तथा मोहः अज्ञानं विष्वक् समन्तात् सकलपदार्थानित्यर्थः, स्थगयति आवृणोति मोहावरणात् किमपि न मे ज्ञानविषयीभवतीति तात्पर्य्यम्। अतएव मन्दभाग्योऽहं कथं किं करोमि। कमपि प्रतिकारोपायं न पश्यामीति भावः।

अत्र दारुणदुःखरूपकार्य्यं प्रति बहूनां कारणानामुक्तत्वात् समुच्चयोऽलङ्कारः, तथा मन्दभाग्यः किं करोमीति वाक्यार्थं प्रति पूर्व्ववर्त्तिवाक्यार्थानां हेतुत्वात् काव्यलिङ्गम्, ज्वालाया दुःखरूपत्वेन गुणत्वात् मन्ये-पदप्रयोगाच्च भावाभिमानिनी वाच्या गुणोत्प्रेक्षा, मज्जतीवेति अपरा तादृशी क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः।

उत्तररामचरित-तृतीयाङ्केऽपि रामेणायं श्लोकः पठितः, किन्तु तत्र "हा हा देवि! स्फुटति हृदयं स्रंसते देहबन्धः" इति प्रथमपादवैषम्यम्।

मन्दाक्रान्ता वृत्तम् ॥ २० ॥

(ण) कष्टमिति। भोः, इति विषादार्थकमव्ययम्। कष्टमिति तस्यैवातिशये द्विरुक्तिः।

बन्धुता हृदय-कौमुदीमहो मालतीनयनपूर्णचन्द्रमाः (१)।
सोऽयमद्य मकरन्दनन्दनो जीवलोकतिलकः प्रलीयते ॥२१॥

हा वयस्य माधव!

गात्रेषु चन्दनरसो दृशि शारदेन्दु-
रानन्द एव हृदये मम यस्त्वमासीः।
तं त्वां (२) निकामकमनीयमकाण्ड एव
कालेन जीवितमिवोद्धरता हतोऽस्मि ॥२२॥

बन्धुतेति। बन्धुताया बान्धवसमूहस्य हृदयं कौमुदीमहं ज्योत्स्नोत्सवस्वरूपः, मालत्या नयनयोः पूर्णचन्द्रमाः नितरामाह्लादकत्वात् पूर्णचन्द्रस्वरूपः। मकरन्दस्य मम, नन्दन आनन्दयिता, तथा जीवलोकस्य जगतस्संसारस्य तिलकः तिलकस्वरूपः अयं मत्प्रत्यक्षीभूतः स गुणप्रसिद्धो माधवः, अद्य प्रलीयते प्रियाविच्छेदशोकात् विनश्यति।

अत्र निरङ्गं मालारूपकमलङ्कारः। गुणातिशयो नाम नाट्यलक्षणञ्च।

"यः सामान्यगुणोद्रेकः स गुणातिशयो मतः।" इति लक्षणात्। बन्धुतेति "ग्रामजने"त्यादिना समूहार्थे तल्।

रथोद्धता वृत्तम् ॥ २१ ॥

गात्रेष्विति। हा वयस्य माधव! यस्त्वम् आलिङ्ग्यमानो मम गात्रेषु चन्दनरसः मलयजद्रवस्वरूप आसीः, अतीव शीतलत्वादिति भावः। दृश्यमानो मम दृशि चक्षुषि शारदेन्दुः शरच्चन्द्र आसीः, तद्वदाह्लादजनकत्वादित्याशयः। तथा विभाव्यमानो मम हृदये आनन्द एव आसीः। कालेन अन्तकेन जीवितमिव मम जीवनमिव स्थितं निकामकमनीयं परमसुन्दरं तं त्वाम् अकाण्ड एव अनवसर एव असमय एव उद्धरता अपहरता सता हतोऽस्मि अहमपि नाशितोऽस्मि। माधवशोकार्दितः परमहमपि न जीवेयमिति भावः।

(१)···मुग्धचन्द्रमा इति पाठभेदः। (२) तत्त्वाम् इति पाठान्तरम्।

स्पृशन् (त) ।

> अकरुण ! वितर स्मितोज्ज्वलां
> दृशमतिदारुण ! देहि मे गिरम् ।
> सहचरमनुरक्तचेतसं
> प्रियमकरन्द ! कथं न मन्यसे ॥२३॥

माधवः संज्ञां लभते ।

---

अत्रापि निरङ्गं मालारूपकमलङ्कारः, अर्थान्तुपमा चानयोर्मिथोनैरपेक्ष्यात् संसृष्टिः । तथा प्राणा एवेति नियमस्यानावश्यकत्वेऽपि तदभिधानादनियमे नियमाख्यदोषः, किञ्च समुच्चयवाचकस्य चकारस्यानभिधानात् न्यूनपदतादोषश्च, चकारस्य समुच्चयद्योतकतावादिमते तु वाच्यानभिधानतादोषः, तेन 'चित्ते च सम्प्रदभयौ मम यस्त्वमासौ' इति पाठेन तयोः समाधानं विधेयम् ।

वसन्ततिलका वृत्तम् ॥ १२ ॥

(त) स्पृशन्निति । माधवशरीरमिति शेषः ।

अकरुणेति । हे अकरुण ! निर्दय ! स्मितोज्ज्वलाम् ईषद्धास्य-शोभितां दृशं दृष्टिं वितर, पूर्ववदीषद्धास्यपूर्वकं दृष्टिपातं कुरु इत्यर्थः । हे अतिदारुण ! शतशः प्रार्थनायां कृतायामपि उत्तरादानात मम जीवननाशहेतुत्वेन भयङ्करस्वभाव ! स्मितोज्ज्वलां गिरं वाचं मे मह्यं देहि । पूर्ववत् स्मितपूर्वकमालप्य मामाश्वासयेत्यर्थः । प्रियो मकरन्दो यस्य तत्सम्बोधनम् । अनुरक्तचेतसं न तु केवलवाह्यिकानुराग-प्रदर्शयितारमिति भावः, सहचरं सखायं मां कथं न मन्यसे न जानासि पूर्ववदनुरक्त-चेतसं सहचरं मां मन्यमानः प्रियसम्भाषणं विधेहीति तात्पर्य्यम् ।

इदम् अपरवक्त्रं नाम वृत्तम् "अयुजि ननरला गुरुः, समे तदपरवक्त्रमिदं नजौ जरा"विति लक्षणात् ॥ १३ ॥

मक। सोच्छ्वासम्। अयमचिरधौतराजपट्ट-रुचिरमांसलच्छवि-र्नवजलधरस्तोयशीकरासारेण मे वयस्यं जीवयति ; दिष्ट्या जगदुच्छ्वसितं तावत् (१)। (थ)

माध। तत्कथमत्र विपिने प्रियावार्त्ताहरं करोमि। विलोक्य। साधु साधु (२)। (द)

फलभरपरिणाम-श्यामजम्बूनिकुञ्ज-
स्खलन (३)-तनुतरङ्गामुत्तरेण स्रवन्तीम्।

(थ) मकेति। माधवस्य चैतन्यदर्शनात् उच्छ्वासेन आनन्दोद्वेलनेन सहेति सोच्छ्वासम्। अचिरधौतः सद्यः प्रक्षालितः परिष्कृतो यो राजपट्टः नीलमणिविशेषः तद्वत् रुचिरा मनोहरा मांसला दरिष्टा च छविः कान्तिर्यस्य सः, नवजलधरः नवीनमेघः, तोयशीकरासारेण जलबिन्दुधारासम्पातेन। जीवयति संज्ञापयति, अतीतसामीप्ये वर्त्तमाना। दिष्ट्या भाग्येन जगदुच्छ्वसितं वयस्यस्य उच्छ्वासेन ममाप्युच्छ्वसनात् जगदुच्छ्वसितं मन्ये इत्यर्थः।

(द) माधेति। तत्कथमित्यखण्डमव्ययं प्रश्ने। प्रियायाः मालत्याः, वार्त्ताहरं दूतम्। मालत्याः समीपे दूतं कृत्वा कं नाम प्रेषयामीत्यर्थः। मेघमवलोक्य तस्य दौत्यं सम्भावयन्नानन्देनाह साधु साध्विति।

फलेति। फलभराणां स्वकीयजम्बूफलसमूहानां परिणामेन पक्वतया श्यामानां श्यामलानां जम्बूनां जम्बूवृक्षाणां यो निकुञ्जः आहतदेशः, तत्र स्खलनेन पतनेन तनवः

(१)···शीकरासारेण सञ्जीवयति मे प्रियवयस्यम्। दिष्ट्या समुच्छ्वसितस्तावत् इति पाठान्तरम्।

(२) विलोक्य। साधु साधु, इति पाठः क्वचिन्नास्ति।

(३)··स्खलित·· इति पाठभेदः।

उपचितवनमाल-प्रौढतापिच्छनील:
श्रयति शिखरमद्रेर्नूतनस्तोयवाह: ॥२४॥

सरभस (१)-मुत्थायोन्मुख: कृताञ्जलि: । (घ)

कच्चित् सौम्य! प्रियसहचरो विद्युदालिङ्गति त्वाम् ?
आविर्भूतप्रणयसुमुखाश्चातका वा भजन्ते ?।

---

भङ्गात् क्षुद्रीभूतास्तरङ्गा यस्यास्ताम्, स्रवन्तीं प्रवहन्तीं नदीम्, उत्तरेण अदूरे उत्तरस्यां दिशि। उपचिता वर्षागमात् वृद्धिं प्राप्ता घना निविड़ा माला श्रेणिर्यस्य स: तादृश:, प्रौढ: वृद्धिं गतो य: तापिच्छ: तमालतरु:, तद्वन्नील:, नूतन: नवीन: तोयवाहो मेघ:, अद्रे: पर्व्वतस्य शिखरं शृङ्गं श्रयति अवलम्बते। तद्दर्शनमेव दूतं विधाय प्रियाया: समीपे प्रेषयामीति भाव:।

अत्र लुप्तोपमाऽलङ्कार:।

स्रवन्तीमिति "द्वितीयैनेन" इति द्वितीया। उत्तरेणेति "अदूरे एनोऽपञ्चम्या" इत्येनप्रत्यय:। प्रथमचरणमुत्तरचरितेऽपि दृश्यते।

मालिनी वृत्तम् ॥ २४ ॥

(घ) सरभसमिति। सरभसम् इच्छामात्रदूतलाभात् सहर्षम्।

कच्चिदिति। हे सौम्य! शान्तमूर्त्ते! मेघ! प्रियसहचरी विद्युत् त्वामालिङ्गति कच्चित्, आश्लिष्यति किं, सर्व्वत इत्यहं वेदितुमिच्छामीत्यर्थ:, न वा मालती मामिव विद्युदपि त्वां विहायादर्शनं गतेति भाव:। एतेन महती प्रियालिङ्गनलालसा व्यज्यते। आविर्भूतेन अन्तरुत्पन्नेन प्रणयेन स्नेहेन सुमुखा: प्रसन्नवदना: चातका वा त्वां भजन्ते कच्चित्, सेवन्ते किं, न वा मकरन्द इव मामपहाय स्वार्थवशादन्यत्र गता इति भाव:। एतेन बलवती मकरन्दसान्निध्यस्पृहा ध्वन्यते। उन्मादवशात् सन्निहितमेव मकरन्द-

(१) सादरम् इत्यपि पाठ:।

पौरस्त्यो वा सुखयति मरुत् साधु संवाहनाभिः ?
विष्वग्विभ्रत् (१) सुरपतिधनुर्लक्ष्म लक्ष्मीं तनोति ?(२) ॥२५॥

आकर्ण्य। अये ! अयं (३) प्रतिरवभरितकन्दरानन्दितोत्कण्ठ-

मज्जानत इति निश्चयम्। अतएवानुपदं मकरन्दो वक्ष्यति "कथमिदानीमुन्मादोपरागो माधवेन्दुमास्कन्दती"ति। वा किंवा, पौरस्त्यः पूर्वदिग्वर्ती मरुत् वायुः संवाहनाभिः सञ्चालनाभिः करेणाङ्गप्रत्यङ्गमर्दनैश्च, साधु सम्यक् सुखयति कच्चित्, त्वाम् आनन्दयति किं किंवा कलहंसो मामिव विहायान्यत्र समतोऽन्याश्रयः। अनेन कलहंसकृत-शुश्रूषाभिलाषः सूच्यते। किंवा, विष्वक् सर्वतः लक्ष्मीं शोभां बिभ्रत् धारयत् नाना-वर्णमयत्वेनातिसुन्दरमित्यर्थः, सुरपतेरिन्द्रस्य धनुः कर्तृ, लक्ष्म तव चिह्नं तनोति कच्चित्, तव सौन्दर्यलक्षणं विस्तारयति किम् ? न वा ममेदानीमाभरणमिव क्वापि निभृतमवतिष्ठते इत्यभिप्रायः। एतेनाभरणधारणेच्छापि व्यज्यते। उन्मादवशा-न्नानाविधा मतिरिति बोध्यम्।

अत्र प्रथमचरणे मेघविद्युतोः पुंस्त्रीलिङ्गाभ्याम् आलिङ्गनकार्येण च नायकनायिका-व्यवहारसमारोपात्, तथान्यत्र मज्जन-संवाहन-शोभाविस्तारणरूपकार्यैः क्रमेण चातकमरुदिन्द्रधनुःषु वयस्य-दासाभरणानां व्यवहारसमारोपात् चत्वार एव समासोक्त्य-लङ्कारा, तेषाञ्च मिथो नैरपेक्ष्यात् संसृष्टिः। सा पुनर्लक्ष्मलक्ष्मीमिति छेकानु-प्रासेनापि संसृज्यते।

वर्षासमये प्रायेणैव पूर्वतो वायुसञ्चारात् पौरस्त्य इति स्वरूपोक्तिः।

"कच्चित् कामप्रवेदने।"

मन्दाक्रान्ता वृत्तम् ॥ २५ ॥

(म) आकर्ण्येति। प्रतिरवेण प्रतिध्वनिना भरितासु पूर्णासु कन्दरासु गुहासु

(१) विश्वं बिभ्रत्, इति पाठान्तरम्।

(२)...धनुर्लक्ष्म लक्ष्मीर्वर्द्धते न इति पाठभेदः।

(३)...क्वचित् 'अयम्' इति पाठो नास्ति।

नीलकण्ठकलर्ककानुबन्धिना मन्द्रहुङ्कृतेन मामनुमन्यते, यावदभ्यर्थये । भगवन् जीमूत ! (न)

दैवात् पश्येर्जगति विचरन्निच्छया मत्प्रियां (१) चेत्
आश्वास्यादौ तदनु कथयेर्माधवीयामवस्थाम् ।
आशातन्तुर्न च कथयतात्यन्तमुच्छेदनीयः
प्राणत्राणं कथमपि करोत्यायताच्याः स एकः ॥२६॥

स्थितानामित्यर्थः, आनन्दितानां स्वध्वनिश्रवणेनैवामोदितानाम् अतएव उत्कण्ठानाम् उद्ग्रीवाणां नीलकण्ठानां मयूराणां कलकैकां कैकाख्यं मयूराणुटशब्दम् अनुबन्धुम् अनुसर्तुं शीलं यस्य तेन, एकस्मिन् गर्जने सति मयूराः कैकारवं कृतवन्तः, ततः परमुत्पद्यमानेनेत्यर्थः, मन्द्रहुङ्कृतेन गभीरेण 'हुं' इति शब्देन, मामनुमन्यते मां प्रति आत्मनो विद्युदालिङ्गनादिकमङ्गीकरोतीत्यर्थः । यथा केनचित् पृष्टः कश्चिदर्थी कश्चित् 'हुं' इति शब्देनाङ्गीकरोति तद्वदिति भावः । अभ्यर्थये एनमेव दौत्यं प्रार्थये उक्तसद्व्यवहारेण विश्वस्तत्वादिति भावः । पूज्यत्वारोपणेन प्रसन्नतां प्रतिपाद्य स्वप्रार्थनीयदौत्यस्वीकारार्थं मेघस्य भगवन्निति पूज्यसम्बोधनम् । जीमूत ! मेघ !

मेघस्य दौत्यं प्रतिपादयन् कर्त्तव्यमाह दैवादिति । हे मेघ । इच्छया स्वेच्छया स्वेच्छानुसारेण जगति विचरन् दैवात् मम सौभाग्यात् चेत् यदि मत्प्रियां मालतीं पश्येः, तदा आदौ आश्वास्य 'माधवो जीवति, तातादयश्च ते सुख्यास्तिष्ठन्ति' इत्थं तां सान्त्वयित्वा, तदनु ततः परं माधवीयाम् इमाम् अवस्थां तद्विरहेणोपस्थिताम् अतीवविह्वलां दशां कथयेस्त्वम् । किञ्चेति चार्थः । कथयता मदवस्थां ब्रुवता त्वया, आशातन्तुः मया सह तस्याः पुनः सङ्गमाशामयम्, अत्यन्तं न उच्छेदनीयः माधवस्य मृत्युदशा समुपस्थिता इत्युक्त्या सम्पूर्णरूपेण न छेदनीयः । कथमित्याह प्राणेति आयताक्ष्याः दीर्घ-

(१) ···विचरन् मत्प्रियां मालतीं चेत्, इत्यपि पाठः ।

सहर्षम्। **अहो! प्रचलितः। तदन्यत्र सञ्चरामि।** परिक्रामति (१)। (प)

मक। सोद्वेगम्। **कथमिदानीमुन्मादोपरागो माधवेन्दुमास्कन्दति। हा तात! हा अम्ब! हा भगवति! परित्रायस्व माम्; (२) पश्य माधवस्यावस्थाम्।** (फ)

नयनायास्तस्या मालत्याः, एकः केवलः स आशातन्तुः कथमपि नितान्तायासेनेत्यर्थः, प्राणानां जीवनरक्षां करोति। तद्विरहेण मन्मरणसम्भावनाकथनं तदाशानाशात् सैव पूर्वं मरिष्यतीति भावः।

अत्र चतुर्थपादोक्तकारणेन तृतीयपादोक्तकार्यस्य समर्थनादर्थान्तरन्यासोऽलङ्कारः।

इयन्तं कालं यावत् सा जीवति न वेति संशयेन दैवादित्युक्तम्। चतुर्थचरणार्थरूपा कालिदासोक्तिर्यथा मेघदूते—

"आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि॥"

मन्दाक्रान्ता वृत्तम्॥ २६॥

(प) सहर्षमिति। तत्क्षणादेव मेघस्य प्रचलनदर्शनात् 'मत्प्रार्थितं दौत्यमङ्गीकृत्यैवायं प्रचलती'ति मननात् सहर्षमिति बोध्यम्। प्रचलितः मालत्यै मद्वार्तामाख्यातुमित्याशयः। तदन्यत्र सञ्चरामि व्रजामि, कर्त्तव्यस्य निष्पन्नत्वादिदानीमत्रावस्थाने प्रयोजनाभावादिति भावः।

(फ) मकेति। उन्माद एव उपरागो राहुकर्तृकग्रहणं सः, माधव एव इन्दुश्चन्द्रः तम्, आस्कन्दति अभिभवति। कथमन्यथा अचेतनं मेघमुद्दिश्यायं प्रलापः सम्भवतीति

---

(१) सहर्षम्। अयं प्रचलितः। तदन्यतः सम्भावयामि। इति परिक्रामति इति पाठान्तरम्।

(२) परित्रायस्व परित्रायस्व इति द्विरुक्तिः क्वचित्।

माध। धिक् प्रमादः (१)। (ब)

नवेषु लोध्रप्रसवेषु कान्ति-
दृशः कुरङ्गीषु (२) गतं गजेषु ।
लतासु नम्रत्वमिति प्रमथ्य
व्यक्तं विभक्ता विपिने प्रिया मे ॥ २७ ॥

भावः। बन्धुत्वेनात्मनो माधवादभिन्नतया माधवस्यैव मातापितरावुद्दिश्य हा तात हा अम्बेति सम्बोधनम्, आत्ममातापितृविवक्षया तयोरेव माधवं प्रति स्नेहातिरेकसम्भवात्, तथा भगवतीति कामन्दकीसम्बोधनम्, तस्या अपि मालत्याऽपि माधवं प्रति स्नेहातिशयदर्शनादिति बोध्यम्। मां माधवविपदैव विपन्नमिति भावः।

अत्र प्रथमवाक्ये उन्मादे उपरागत्वारोपो माधवे चन्द्रत्वारोपहेतुरिति श्लिष्ट-शब्दनिबन्धनं परम्परितरूपकमलङ्कारः।

(ब) मामेति। धिगित्यात्मनिन्दायाम्। प्रमादः निरूपणविषये असावधानता। येन हि न खलु मा दूरे विद्यत इति भावः।

तर्हि निकटे कुत्रेत्याह नवेष्विति। नवेषु सद्यःप्रस्फुटितेषु लोध्रस्य प्रसवेषु कुसुमेषु कान्तिः तस्या गौरकान्तिर्वर्त्तते। कुरङ्गीषु हरिणीषु दृशौ दृष्टयो विद्यन्ते, गजेषु हस्तिषु गतं गमनं वर्त्तते। तथा लतासु नम्रत्वं विद्यते इति हेतोः, विपिने अस्मिन् वने प्रमथ्य निष्पीड्य मे मम प्रिया मालती, व्यक्तं स्पष्टं यथा तथा विभक्ता विभज्य गृहीता, लोध्रप्रसवादिभिरिति शेषः। तथा च मालतीं निष्पीड्य तद्देहात् लोध्रप्रसवा गौरकान्तिं, हरिण्यश्चञ्चलदृष्टिपातान्, हस्तिनो मन्थरगमनानि, लताश्च नम्रत्वं विभज्य जगृहुः; अन्यथा कथमेषां तादृशगौरकान्त्यादयः सम्भवन्तीति सरलार्थो भावार्थश्च।

(१) द्विपदिकया सर्वतोऽवलोक्य। धिक् प्रमादः इति क्वचित् पाठः।

(२) कुरङ्गेषु इति पाठभेदः।

हा प्रिये मालति ! । इति मूर्च्छति (१)। (भ)

मक । सुहृदि गुणनिवासे प्रेयसि प्राणनाथे
कथमिव सहपांसुक्रीड़नप्रौढ़सख्ये ।
प्रियजनविरहाधिव्याधिखेदं (२) दधाने
हतहृदय ! विदीर्य्य त्वं द्विधा न प्रयासि ॥२८॥

---

अत्र सुवादिशब्देन व्यक्तशब्दस्योपमावाचकत्वात् वाच्याभावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः। न तु निदर्शनापि, लोध्रप्रसवादिकान्त्यादिषु उन्मत्तमाधवेन मालतीगत-कान्त्यादितादात्म्यस्यैवावधारणेन सादृश्याक्षेपाभावात्। तथा विभक्तेत्यस्य कर्तृपद-निर्देशाभावात् न्यूनपदत्वदोषः, स च 'व्यक्तं विभक्तेव मम प्रियेति' पाठेन समाधेयः। अस्ति भवन्त्यादीनामध्याहारे न न्यूनपदत्वदोष इति वामनमतम्। तेन प्रथमपादत्रये वर्त्तते इत्यादिक्रियाध्याहारेऽपि न न्यूनपदत्वदोष इति भाव्यम्।

उपेन्द्रवज्रेन्द्रवज्रयोर्मिलनादुपजातिर्वृत्तम् ॥ २७ ॥

(भ) हेति। उत्कर्षेण मालत्या मरणावधारणात् विलपति 'हा प्रिये मालतीति' मूर्च्छति चेति बोध्यम्।

सुहृदीति। गुणनिवासे रूपविद्याविनयादीनां गुणानामाश्रये। अथ तादृशगुणवान्-परोऽप्यस्ति कथं तदर्थो नाक्षेप इत्याह प्रेयसीति। प्रेयसि प्रियाणां मध्ये प्रधानभूते! सा प्रीतिरपि न प्रियप्रधानभूतसोदरादि-साधारणीत्याह प्राणनाथ इति। प्राणनाथे प्राणानां नियन्तरि यस्याः प्रीतेः कृते प्राणानपि परित्यक्तुमर्हामि तादृशासाधारणप्रीतिभाजने इत्यर्थः। तादृशप्रीतिरपि नाचिरजातेत्याह सहेत्यादि। सहपांसुक्रीड़नात् मिलित्वा धूलिखेलनात् शैशवादवधीत्यर्थः, प्रौढं गाढभावेनोत्पन्नं सख्यं बन्धुता यस्मिन् तस्मिन् तथोक्ते। सुहृदि मित्रे अस्मिन् माधवे, प्रियजनस्य वल्लभाया मालत्याः, विरहेण य

(१) इति मूर्च्छति, इति पाठः क्वचिन्नास्ति। (२)···वेगम् इत्यपि पाठः

माध। आश्वर्य्यीत्याय (१)। सुलभानुकार: खलु जगति वेधसो निर्म्माणसन्निवेश:। भवतु, एवं तावत्। उच्चै:। अयमहं भो:! प्रणिपत्य (२) भूधरारण्यचारिण: सत्त्वान् विज्ञापयामि। मुहूर्त्तमवधानदानेन मामनुगृह्णन्तु भवन्त:। (स)

भवद्भि: सर्वाङ्गप्रकृतिरमणीया कुलवधू-
रिहस्थैर्दृष्टा वा? विदितमथवाऽस्या: किमभवत्?।

---

आधिर्मानसी व्यथा स एव व्याधि: रोग:, तस्य विदं तज्जनितां दारुणयातनां दधाने वहति अनुभवति सति, हे हतहृदय! निराशचित्त! त्वं द्विधा विदीर्य्य कथमिव कथं न प्रयासि न गच्छसि। ईदृशदु:खानुभवात् मां विहाय तव गमनमेव श्रेय इति भाव:।

अत्राभिप्रायविशेषैर्विशेषणानामुपन्यासात् परिकरोऽलङ्कार:।

कथमिवेति इवशब्दो वाक्यालङ्कारे।

मालिनी वृत्तम्॥ २८॥

(स) माधवेति। आश्वस्य कियत: समयात् परं स्वयमेव चैतन्यमुपेत्य। वेधसो विधातु:, निर्म्माणसन्निवेश: सृष्टिप्रकार: सृष्टपदार्थप्रकार: इत्यर्थ:, सुलभ: अनायासलभ्य: अनुकार: सादृश्यं येन स:, एकेनापरस्य सादृश्यं अत एव लभ्यत इति तात्पर्य्यम्, तेन च मालतीगतकान्त्यादीनां सादृश्यमेव लीधप्रसवादिकान्त्यादिषु वर्त्तते, न पुन: सा तै: प्रमथ्य विभक्तेति न तस्या मरणनिश्चय इति भाव:। एवं तावत् क्रियत इति शेष:। भूधरारण्यचारिण: पर्वतवनचारिण:, सत्त्वान् जन्तून्। अवधानदानेन मद्वाक्यश्रवणे मनोयोगार्पणेन।

विज्ञापनीयमाह भवद्भिरिति। इहस्थै: भूधरारण्यस्थितै:, भवद्भि: सत्त्वै:, सर्वेषु अङ्गेषु मुखाद्यवयवेषु प्रकृत्या स्वभावेनैव रमणीया मनोहरा, न त्वाभरणादिना कृत्रिम-

(१) आश्वस्योत्थाय इति पाठोऽपि क्वचिन्न दृश्यते।

(२) पुस्तकान्तरे प्रणिपत्य इति कविवाक्यत्वेन सन्निविष्टम्।

**वयोऽवस्थां तस्याः शृणुत सुहृदो ! यत्र मदनः**
**प्रगल्भव्यापारश्चरति हृदि मुग्धश्च वपुषि ॥ २८ ॥**

**कष्टं भोः कष्टम् (१) । (य)**

सौन्दर्येवर्तीति भावः, कुलवधूः काचित् कुलाङ्गना, लज्जाविनयादिभिरनुमेयकुल-वधूभावेति भावः, दृष्टा वा ? अवलोकिता किमिति काकुः । अथवा अस्याः कुलवध्वाः किमभवत् मरणं जीवनम् अन्येन ग्रहणं वा किं जातम्, तत् विदितम् ? साक्षाद्दर्शना-भावेऽपि श्रोत्रपरम्परया श्रुत्वा ज्ञातं किमित्यर्थः । ननु सा कीदृशीत्यपेक्षायां किञ्चि-दभिज्ञानमाह वय इत्यादि । हे सुहृदः ! इदानीमकथावस्थानात् हे सखायः ! भूधरारण्यचारिणो जन्तवः ! तस्या मत्प्रश्नविषयीभूतायाः कुलवध्वाः वयोऽवस्थां शृणुत । यत्र वयोऽवस्थायां मदनः, प्रगल्भव्यापारः उत्कटोद्यमः सन् हृदि चित्ते चरति, वपुषि देहे च मुग्धो हावभावादिना मनोहरः सन् चरति । प्रथमावतीर्ण-यौवना सा इत्यभिज्ञानमिति भावः ।

अत्र यच्छब्दस्योत्तरवाक्यगतत्वेन तच्छब्दानपेक्षणात् न वाक्यगतविधेयाविमर्शदोषः "आत्मा जानाति, यत् पाप"मिति दर्पणोदाहृतवत् ।

तथा पृच्छा नाम नाट्यलक्षणम् ।

"अभ्यर्थनापरैर्वाक्यैः पृच्छाऽर्थान्वेषणं मतम् ।" इति लक्षणात् । इहस्थैरित्यनेन सत्त्वानां मालव्या दर्शनज्ञानयोर्योग्यता दर्शिता ।

शिखरिणी वृत्तम् ॥ २९ ॥

(य) कष्टमिति । कष्टं दुःखम् एभिर्मदाकाङ्क्ष्याप्यश्रवणादिति भावः । तस्यातिशये द्विरुक्तिः । 'भोः' इति विषादार्थकमव्ययम् ।

(१) कष्टं भोः, इतिमात्रः पाठः क्वचित्

केकाभिर्नीलकण्ठस्तिरयति वचनं ताण्डवादुच्छिखण्डः,
कान्तामन्तःप्रमोदामभिसरति मदभ्रान्ततारश्चकोरः ।
गोलाङ्गूलः कपोलं छुरयति रजसा कौसुमेन प्रियायाः,
किं (१) याचे यत्र तत्र ध्रुवमनवसरग्रस्त एवार्थिभावः ॥३०॥

अथ्रवणप्रकारमाह केकाभिरिति । ताण्डवात् नृत्याद्धेतोः उच्छिखण्डः उत्थित-पिच्छभारः, नीलकण्ठो मयूरः केकाभिः स्ववाणीभिः स्वकीयशब्दैः, वचनं मदीयप्रश्न-वाक्यं तिरयति आच्छादयति, दीर्घतरेण स्वशब्देन मम वाक्यस्याव:करणात् तत्र प्रणीतोऽर्थः । मदभ्रान्ते कामसर्दन घूर्णिते, तारे कनीनिके यस्य सः, चकोरः पक्षिविशेषः, अन्तरन्तःकरणे प्रमोदो विरंसानन्दो यस्यास्तां कान्तां चकोरीम् अभि-सरति अभिगच्छति । सुतरामयमपि अन्यत्रासक्तमनस्कतया मद्वाक्यं नाकर्णयतीति भावः । तथा गौरिव लाङ्गूलं यस्य सः गोलाङ्गूलः वानरः, कौसुमेन रजसा पुष्प-परागेण प्रियाया वानर्याः कपोलं गण्डं छुरयति रञ्जयति । अतएवैषोऽपि कौतुका-क्रान्तचित्ततया मम वचनं न शृणोतीति भावः । अतएव किं कथं याचे एतेषा-मन्तिके प्रियाया अनुसन्धानं प्रार्थयामि, एभिरन्यमनस्कैः प्रियानुसन्धानदानन्तु दूर एवा-पास्तं मद्वाक्यस्याप्यश्रवणात् एतेषामन्तिके तत्प्रार्थनमेवानर्थकमिति भावः । तथा च अर्थिभावो याचकत्वम्, यत्र तत्र सर्वत्रेत्यर्थः, ध्रुवं निश्चितम् अनवसरग्रस्त एव अवकाशा-भावाक्रान्त एव । सर्वत्र सर्व एव इत्थं स्वस्वाभीष्टकर्मासक्ताः सतरां कुत्र याचकताया अवकाश इति भावः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, छेकानुप्रासवृत्त्यनुप्रासौ च, इत्येतेषां परस्परनैरपेक्ष्यात् संसृष्टिः । प्रतिषेधो नाम विमर्शसन्धेरङ्गम् ।

"ईप्सितार्थप्रतीघातः प्रतिषेध इतीष्यते ।" इति लक्षणात् ।

"प्लवङ्गकीशप्लवगगोलाङ्गूलवलीमुखाः" इत्यमरमाला ।

स्रग्धरा वृत्तम् ॥ ३० ॥

(१) कं, इति पाठभेदः ।

अयञ्च,

दन्तच्छदारुणिमरञ्जितकान्तदन्त-(१)
मुन्नम्य चुम्बति वलीवदनः प्रियायाः।
काम्पिल्यक(२)-प्रसवपाटल-गण्डपालि-
पाकारुणस्फुटितदाड़िमकान्ति वक्त्रम्॥ ३१॥

एष प्रियतमास्कन्धविश्रान्तकरो रोहिणानोकहस्कन्धविश्रान्तकन्धरः करी। कथमत्राप्यनवसरः (३)। (२)

दन्तेति। अयञ्च वलीवदनो वानरः, दन्तच्छदयोरोष्ठयोः अरुणिम्ना रक्तत्वेन रक्तवर्णेन रञ्जिता अतएव कान्ता मनोहरा दन्ता यत्र तत्। काम्पिल्यकः गन्धरोचनीनाम सुगन्धिद्रव्यं (कमलागुँडी इति यस्य भाषा) तस्य प्रसवेन फलेन तत्फलभक्षणेनेत्यर्थः, अथवा तत्फलवत् पाटले श्वेतरक्तवर्णे गण्डपाल्यौ कपोलप्रान्तौ यस्य तत्, तथा पाकेन परिपक्वतया अरुणं रक्तवर्णं, स्फुटितं वीजोच्छ्वासात् विदीर्णञ्च यत् दाड़िमं फलं तस्य कान्तिरिव कान्तिर्यस्य तत्, तादृशं प्रियाया वानर्याः वक्त्रं मुखम् उन्नम्य कराभ्यां कियदुत्तोल्य चुम्बति। सुतरामस्यान्तिकेऽपि मम प्रार्थनाऽवकाशो नास्तीति भावः।

अत्र लुप्तोपमाच्छेकानुप्रासयोः संसृष्टिरलङ्कारः।

"काम्पिल्यः (पुं) गन्धरोचनीनाम सुगन्धिद्रव्यम्" इति शब्दकल्पद्रुमः। तस्मात् स्वार्थे कप्रत्ययः।

वसन्ततिलका वृत्तम्॥ ३१॥

(२) एष इति। एष करी हस्ती प्रियतमायाः करिण्याः स्कन्धे विश्रान्तः अव-

---

(१) ···दन्तमालम् इति पाठान्तरम्। (२) काम्पिल्लक··· इति पाठभेदः।

(३) अयञ्च रोहिणानोकहस्कन्धविश्रान्तकण्ठः करी। कथमत्राप्यनवसरः। इति पुस्तकान्तरे पाठः।

कण्डू-कुड्मलितेक्षणां सहचरीं दन्तस्य कोट्याऽऽलिखन्
पर्य्यायव्यतिकीर्णकर्णपवनैराह्लादिभिर्वीजयन्।
जग्धार्द्धैर्नवशल्लकी(१) किसलयैरस्याः स्थितिं कल्पयन्
धन्यो (२)वन्यमतङ्गजः परिचयप्रागल्भ्यमभ्यस्यति ॥३२॥

स्थितः करः शुण्डा यस्य सः। तथा रोहिणानीकहस्य वटवृक्षस्य स्कन्धे प्रकाण्डदेशे विश्रान्ता स्थिता कन्धरा ग्रीवा यस्य सः तादृशः सन् वर्त्तते। अतस्तत्रापि अस्य समीपेऽपि अनवसरः सम्प्रश्नस्यानवकाशः। कौतुकक्रियाव्याप्रतत्वेनाऽपि पूर्व-मयूरादिवत् श्रवणासम्भवादिति भावः।

विशेषतश्चाह कण्डूति। अयं धन्यः पुण्यवान्, कथमन्यथा निःशङ्कमीदृग्विहर्त्तुमर्हतीति भावः। वन्यमतङ्गजो वनजातो हस्ती, दन्तस्य कोट्या अग्रभागेन, कण्ड्वा कण्डूयनेन कुड्मलिते मुकुलिते मुद्रिते ईक्षणे चक्षुषी यया ताम्, सहचरीं प्रियां हस्तिनीम् आलिखन् ईषदीषत् कण्डूयन्, आह्लादिभिः सुखजनकैः, पर्य्यायेण क्रमेण व्यतिकीर्णयोः विक्षिप्तयोः सञ्चालितयोः कर्णयोः, पवनैर्वायुभिः, वीजयन् वीजितां कुर्वन्, तथा जग्धं स्वयं भुक्तम् अर्द्धं येषां तैः, नवशल्लकीकिसलयैः नूतनैः गजभक्ष्याव्यवृक्षविशेषपल्लवैः अस्याः करिण्याः स्थितिं वृत्तिं जीविकां कल्पयन् सम्पादयन् नवशल्लकीकिसलयानि करिणीं खादयन्नित्यर्थः, परिचयप्रागल्भ्यं प्रणयनैपुण्यम्, अभ्यस्यति असकृदनुतिष्ठति। सुतरामस्यान्तिके कथमपि न मम प्रश्नावकाश इति भावः।

अत्र स्वभावोक्तिरलङ्कारः। "परिचयः (पुं)···प्रणयः।" इति शब्दकल्पद्रुमः।

शार्दूलविक्रीडितं वृत्तम् ॥ ३२ ॥

(१) नवसल्लकी···इति क्वचित् पाठः

(२) अन्यः, इति भिन्नः पाठः।

अन्यतो विलोक्य (१) । अयन्तु

नान्तर्वर्त्तयति (२) ध्वनत्सु जलदेष्वामन्द्रमुद्गर्जितं
नासन्नात् सरसः करोति कवलानावर्जितैः शैवलैः ।
दान-ज्यानि-विषाद-मूक-मधुप-व्यासङ्ग-दीनाननो
नूनं प्राणसमावियोगविधुरः स्तम्बेरमस्ताम्यति ॥ ३३ ॥

अलमनेनाप्यायामितेन (३) । सानन्दम् (४) । एष सानन्द-

नान्तरिति । दानस्य मदजलस्य या ज्यानिः हानिः प्राप्त्यभावः, तया यो विषादस्तेन मूका निःशब्दा ये मधुपा भ्रमरास्तेषां व्यासङ्गेन सम्भाव्यमानोत्पत्तिक-मदजललाभाशावशात् सम्यक् संसर्गेण उपवेशनेन दीनं मलिनम् आननं यस्य सः, अयम् स्तम्बेरमो हस्ती, जलदेषु मेघेषु ध्वनत्सु गर्जत्सु सत्सु, अन्तस्तन्मध्ये आमन्द्रमतीव-गम्भीरम् उद्गर्जितम् उच्चैःस्वरेण गर्जनं न वर्त्तयति न प्रवर्त्तयति कालान्तर इव न करोति । तथा आसन्नात् सरसः समीपवर्त्तिनोऽपि सरोवरात् आवर्जितैरानीतैः शैवलैः शैवालैः कवलान् पूर्ववत् ग्रासान् न करोति । अतएव नूनं निश्चितं, प्राणसमायाः प्रियतमाया हस्तिन्याः वियोगेन विरहेण विधुरो व्याकुलः सन् ताम्यति सन्तापमनुभवति । प्रियतमावियोगव्यतिरेकेण एतादृशी विषयोपरतिर्न सम्भवतीति भावः ।

अत्र गर्जनाकरणकवलाग्रहणरूपसाधनेन प्राणसमावियोगवैधुर्य्य-सन्तापरूपसाध्य-ज्ञानादनुमानालङ्कारः । यथायथस्वभाववर्णनावशाद्विच्छित्तिरनुसन्धेया । ज्यानीति ज्याधातोः क्तिप्रत्यये "ह्रा ज्या म्लाभ्यश्चे"ति क्तेस्तकारस्य नत्वम् ।

शार्दूलविक्रीडितं वृत्तम् ॥ ३३ ॥

(१) क्वचित 'अन्यतो विलोक्य' इति पाठो नास्ति ।

(२) वर्द्धयति इति पाठभेदः । (३) अनेनायासितेन, इति क्वचित् पाठः

(४) विलोक्य, इति पाठान्तरम् ।

मद्दचरी-समाकर्ण्यमान-मधुर-गम्भीर-कण्ठगर्जितध्वनिरपरोऽपि (१) मत्तमातङ्गयूथपालः (२) प्रत्यग्र-विकसित-कदम्ब-सङ्घात-सुरभि-शीतलामोद-बहुल-संवलित-मांसल-कपोल-निष्यन्द-कर्द्दमित-कषाय-करटः, समुद्दलित-कमलिनीखण्ड-विप्रकीर्ण-पर्ण-कमलकेसर-मृणाल-कन्द-कोमलाङ्कुरमाहरन्, अनवरत-प्रवृत्त-कमनीय-कर्ण-ताल-ताण्डव-प्रचल-जर्जरित-जलतरङ्ग-वितत-नीहारं समुत्त्रस्तकुरर-सारसं सरोऽवगाह्य विहरति (३)। (ल)

(ल) अलमिति। आयासितेन मालतीप्रत्यभिज्ञामया विरक्तीकरणेन। अन्यत्र हि, मत्समानः खल्वयं विरही प्रियतमाचिन्तया किञ्चिदारामनुभवतीति भावः। मानन्दया रमणसम्भावनावशादामोदान्वितया सहचर्य्या हस्तिन्या समाकर्ण्यमानः श्रूयमाणः मधुरो गम्भीरश्च कण्ठगर्जितध्वनिर्यस्य सः। प्रत्यग्रविकसितानाम् अभिनवप्रस्फुटितानां कदम्बानां कुसुमानां सङ्घातस्य समूहस्य च सुरभिर्मनोज्ञो यः शीतलामोदः शीतलगन्धः, तेन बहुलं यथा स्यात्तथा संवलितः संसृष्टो विशिष्टः, यो मांसलकपोलाभ्यां स्थूलगण्डद्वयात् निष्यन्दः मदस्रावः क्षरितमदजलमित्यर्थः, तेन कर्द्दमितौ सञ्जातकर्द्दमौ-कृतौ स्वस्यैव कर्दमभावेन परिणतस्याश्रयीकृतौ अतएव कषायौ सौरभान्वितौ करटौ गण्डौ यस्य सः। समुद्दलितायाः आमर्दितायाः कमलिन्याः पद्मलतायाः खण्डं छेदसमये विप्रकीर्णानि इतस्ततो विक्षिप्तानि पर्णानि दलानि यस्य तादृशस्य कमलस्य पद्मस्य केसरः किञ्जल्कश्च, मृणालश्च, कन्दो मूलञ्च, कमलाङ्कुरश्च तत् तथोक्तम्, समाहारद्वन्द्व-

---

(१) अपरः इत्येव पाठः क्वचित्।

(२)...वर्गपालकः, इति भिन्नः पाठः।

(३)...कदम्बसंवादि...कर्दमिततीरं, समुद्धृतकमलिनीखण्डप्रकीर्णकेसरमृणाल-

भवतु; एन-(१) माभाषे। महाभाग! नागपते! श्लाघ्ययौवनः खल्वसि। कान्तानुवृत्तिचातुर्यमप्यस्ति भवतः। सापवादम्। (ख)

लीलोत्खातमृणालकाण्डकवलच्छेदेषु सम्पादिताः
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः।

समासादितकवलनम्। तत आहरन् भोजनार्थमानयन्। अनवरतम् अविच्छिन्नं प्रवृत्तं सञ्जातं कमनीयं मन्थरं कर्णतालयोः स्वल्पपरिमितकर्णयोः यत् ताण्डवम् उद्धतनृत्यं, तेन प्रचलितेभ्यः चलितेभ्यः, जर्जरितेभ्यः चूर्णीकृतेभ्यश्च जलतरङ्गेभ्यः, विततो विस्तृतभावेन जलोपरिपतिता, नीहारा जलबिन्दवो यत्र तत्। तथा मदजलस्मादेव गजात् भीताः कुरराः (कुरल इति ख्याताः) सारसाश्च पक्षिविशेषाः यत्र तत्, सरः सरोवरम्, विहरति क्रीडति "लोल कर्णक्रियामान्तसमानद्धमदर्या"रिति क्रमः।

(ख) भवत्विति। एवं नागेन्द्रम् आभाषे आलपामि। श्लाघ्ययौवनः प्रियवियोगाभावादिति भावः। एतेन मालतीविरहादात्मनो यौवनमश्लाघ्यमिति ध्वनितम्। कान्तानुवृत्तिचातुर्यमपि भार्यानुनयनैपुण्यमपि। सापवादम् अनुवृत्तेरसम्पूर्णत्वात् सनिन्दम्।

असम्पूर्णत्वं प्रदर्शयन्नाह लीलोत्खातेति। लीलया अवहेलया अनायासेनेति यावत्, उत्खाता उत्पाटिता ये मृणालकाण्डाः मृणालस्तम्बाः, तेषां कवलच्छेदेषु ग्रासार्थखण्डेषु करिणीमुखवर्तिष्वित्यर्थः, पुष्यद्भिः पुष्टीभवद्भिः पुष्करैः पद्मैः वासितस्य सुगन्धीकृतस्य पयसो जलस्य गण्डूषाणां मुखपूरितजलानां संक्रान्तयः सञ्चाराः

कन्दाङ्कुरनिकरं, ...प्रचलकर्ण...विततनीहारविचलकुररसारसं, क्रीडति। इति पाठान्तरम्।

(१) एवमित्यपि पाठः।

सेक: शीकरिणा करेण विहित: कामं विरामे पुन-
र्न स्नेहादनराल (१)-नलिनीपत्रातपत्रं धृतम् ॥३४॥

कथमवधीरणानीरसं व्रजति। हन्त ! मूढ़ एवास्मि, योऽस्मिन् वनचरेऽपि वयस्यमकरन्दोचितं व्याहरामि। हा प्रियवयस्य मकरन्द ! (२)। (श)

सम्पादिता: कृता:, करिणीमुखवर्त्तिषु मृणालकवलेषु निजमुखपूरितं जलं वेगेन विक्षिप्तमित्यर्थ:। तथा शीकरिणा जलबिन्दुशालिना करेण शुण्डादण्डेन सेक: करिण्या गात्रोपरि सेचनं कामं पर्याप्तं यथा स्यात्तथा विहित: कृत:। पुन: किन्तु विरामे सेकावसाने स्नेहात् प्रणयवशात् अनरालम् अवक्रं सरलं नालं यस्य तादृशं यत् नलिनीपत्रं पद्मपत्रं तदेव आतपत्रं छत्रं न धृतं शुण्डया करिण्या गात्रोपरि न विधृतम्। अतएव छत्रधारणाभावादनुष्ठितेरसम्पूर्णत्वमिति भाव:।

अत्र स्वभावोक्तिरलङ्कार:, तथा नलिनीपत्रातपत्रमिति निरङ्गं केवलं रूपकञ्चेत्यनयोरङ्गाङ्गिभावेन सङ्कर:, तथा छेकानुप्रासवृत्त्यनुप्रासौ चेति समुदाये संसृष्टि:। श्लोकोऽयम् उत्तररामचरिततृतीयाङ्केऽपि रामेण पठित:। किन्तु अत्र चतुर्थपादे 'न' इत्यत्र 'यत्' इति वैषम्यम्।

शार्दूलविक्रीडितं वृत्तम् ॥ ३४ ॥

(श) कथमिति। अवधीरणया मदाज्ञां प्रति कर्णपाताकरणात् अवज्ञया, नीरसं नि:स्नेहं मां प्रति स्नेहरहितं यथा स्यात्तथा व्रजति एष यूथपतिरिति शेष:।

अत्र छादनं नाम विमर्षसन्ध्यङ्गम्। यथा दर्पणे—

"...तदाहुश्छादनं पुन:। कार्य्यार्थमपमानादे: सहनं खलु यद्भवेत् ॥"

(१)...वाल...इति क्वचित् पाठ:।

(२) हन्त ! मूढ़ एवास्मिन् वनेचरे वयस्यमकरन्दोचितं व्यवहरामि। हा वयस्य ! इति पाठभेद:।

धिगुच्छ्वसितवैशसं मम यदित्थमेकाकिनो
धिगेव रमणीयवस्त्वनुभवान् वृथाभाविनः (१)
त्वया सह न यस्तया च दिवसः, स विध्वंसतां
प्रमोदमृगतृष्णिकां धिगपरत्र या जायते (२) ॥३५॥

धिगिति। एकाकिनो मम इत्थमेवम्प्रकारं यत् उच्छ्वसितं जीवनमेव वैशसं दुःखं तत् धिक्। पापिनैव मालतीमकरन्दयोर्विरहावस्थायामपि सत्त्वादिति भावः। तथा एकाकिनो मम वृथाभाविनः सुखजनकत्वाभावात् निष्फलानित्यादिमः, रमणीयवस्त्वनुभवान् तरुलतादिसुन्दरपदार्थप्रत्यक्षाणि च धिगेव। मालतीमकरन्दसाहित्येनाकृतत्वेन सुखजनकत्वाभावात्, प्रत्युत दुःखजनकत्वादिति भावः। त्वया मकरन्देन, तया मालत्या च सह विद्यमानस्य मम यो दिवसो न जातः युवयोर्विरहावस्थायां मम यो दिवसो जात इत्यर्थः, स विध्वंसतां विनश्यतु। तादृशदिवसस्य सम्पत्ते केवलदुःखजनकत्वादित्याशयः। प्रमोदः कुतश्चिदुपजायमानोऽपि य आमोदः स एव मृगतृष्णिका तत्पक्षे वास्तविकत्वाभावात् मरीचिका; तामपि धिक्; या प्रमोदमृगतृष्णिका अपरत्र युवाभ्यामन्यत्र वस्तुनि जायते। यः खलु युवामवलम्ब्य प्रमोदः समुत्पद्यते स एव मम यथार्थः प्रमोदः, दुःखलेशस्यापि स्पर्शाभावात्, यस्तु विषयान्तरमवलम्ब्य युवयो विरहावस्थायां जायते, स किल सत्यपि सर्वथैव मृगतृष्णिकावदयथार्थः, युवयोर्विरहजनितगाढदुःखेनोत्पत्तिमात्रसर्वोच्छिद्यमानत्वादित्यभिप्रायः।

अत्र यतो ममैकाकिन उच्छ्वसितम् अतएव तद्दुःखं तस्य च धिक्कारः, तथा यतो

(१) धिगेव रमणीयतां त्वदनुभावभावादृते, धिगेव रमणीयवस्त्वनुभवाद्वृथाभाविनः इति पाठभेदौ।

(२) धिगपरत्र का मानुषे, इति पाठान्तरम्।

मक। अये! उन्मादमोहान्तरितोऽपि मां प्रति कुतश्चिद्-व्यञ्जकात् प्रबुद्ध एवास्य सहजस्नेहसंस्कारः (१)। तदसन्निहितमेव मां मन्यते (२)। पुरतः स्थित्वा। एष पार्श्वचर एव ते स मकरन्दो मन्दभाग्यः। (ष)

मम एकाकिनो वृथाभाविनश्च रमणीयवस्त्वनुभवाः अतएव तान् धिक्, इति पदार्थहेतुकं काव्यलिङ्गमलङ्कारद्वयम्, प्रमोदमृगतृष्णिकेति निरङ्गं केवलरूपकञ्च, इत्येतेषां मिथो नैरपेक्ष्यात् संसृष्टिः। एकस्यैव धिक्शब्दस्य पुनःपुनरुपादानादनवीकृतत्वदोषः, स तु 'भवन्तु न मनोज्ञवस्त्वनुभवा वृथाभाविनः' 'मुदा तु मृगतृष्णिका भवति या पदार्थान्तरे' इत्थं द्वितीय-चतुर्थपादयोः परिवर्त्तनेन समाधेयः। 'सुखमानन्दप्रमुन्मुदा।'' इति शब्दरत्नावली। न च द्वितीयपादस्याष्टमाक्षरे यत्यभावाद्यतिभङ्गदोषोऽपीति वाच्यं स्वरसन्धिविधाने तद्दोषानङ्गीकारात् प्रत्युत तत्र शोभाया एवाङ्गीकारात्। तथा च छन्दोमञ्जरी—

> ''पुनस्तवैवासौ स्वरविहितसन्धिः श्रयति तां
>
> यथा कृष्ण. पुष्णात्वतुलमहिमा मां करुणया।''

पृथ्वी वृत्तम् ॥ ३५ ॥

(ष) मकेति। उन्माद एव मोहस्तेन अन्तरितोऽपि तिरोहितोऽपि। सहजस्नेहसंस्कारः स्वाभाविकस्नेहविषयकभावनाख्यसंस्कारः। व्यञ्जकादुद्बोधकात्, प्रबुद्ध एव जागरित एव। देवदत्तनामोच्चारणलक्षणादुद्बोधकात् देवदत्तस्मरणमिवेति भावः। तत्तस्मादुन्मादमोहाद्धेतोः। मन्दभाग्यः, तवैतदुरवस्थादर्शनादिति भावः।

---

(१) अये! उन्मादमोहान्तरितोऽपि सम्प्रत्ययं मां प्रत्यतिकूलः, यतः···। इति क्वचित् पाठः।

(२) तत्सन्निहितमेव मां मन्यते, इत्यपि पाठः

माध । हा प्रियवयस्य ! सम्भावय, परिष्वजस्व माम् । प्रियां मालतीं प्रति तु निराश एव संवृत्तोऽस्मि (१) । इति मूर्च्छति (२) । (स)

मक । एषोऽहं (३) सम्भावयामि जीवितेश्वरम् । विलोक्य सकरुणम् । हा कष्टम् ! आविर्भूत (४) मत्परिष्वङ्गोत्कण्ठ एव निश्चेतनः संवृत्तः ! तत् कृतमिदानीं जीविताशाव्यसनेन । सर्वथा नास्ति मे प्रियवयस्य इति युक्तः परिच्छेदः (५) । हा वयस्य ! । (ह)

---

(स) माधवेति । सम्भावय दृष्टिदानेन सञ्जीवय ।

(ह) मकरेति । जीवितेश्वरं निरतिशयस्नेहास्पदत्वात् जीवननियन्तारम् । सम्भावयामि आलिङ्गनेन सञ्जीवयामि आविर्भूता उत्पन्ना मत्परिष्वङ्गोत्कण्ठा ममालिङ्गनोत्सुक्यं यस्य तादृश एव सन् निश्चेतनः अचेतनः मूर्च्छितः । तत्तस्मात्, इदानीं जीविताशाव्यसनेन अलं जीवनं स्यादित्याशालाभासक्त्या कृतम् अलम् । तत्र कारणमाह सर्वथेत्यादि । परिच्छेदो निश्चयः । वारं वारं मूर्च्छापन्नत्वात्, एतदवस्थापरिवर्तनोपायमतायाः मालत्याश्चाभावादिति भावः ।

---

(१) …प्रियान्तु मालतीं प्रति निराशः परिश्रान्तोऽस्मि, इति भिन्नः पाठः ।

(२) क्वचित् 'इति मूर्च्छति', इति पाठो नास्ति ।

(३) एवं, इति पाठान्तरम् ।

(४) कष्टम् । कथमाविर्भूत…इति पाठभेदः ।

(५) तत् किमिदानीमाशाव्यसनेन । सर्वथैव मे नास्ति वयस्य इति परिच्छेदो युक्त इति भिन्नः पाठः ।

यत् स्नेहसंज्वरवता हृदयेन नित्य-
मावद्धवेपथु विनाऽपि निमित्तयोगात् ।
त्वय्यापदो गणयता (१) भयमन्वभावि
तत्सर्वमेकपद एव मम प्रनष्टम् (२) ॥ ३६ ॥

सखे ! (३) वरं तावन्त एवातिक्रान्ता मुहूर्त्ताः, तथाविध-

अत्र विरोधनं नाम विमर्षसन्ध्यङ्गम्। "कार्य्यात्ययोपगमनं विरोधनमिति स्मृत"मिति लक्षणात्। तथा जीवितेश्वरशब्दः प्राणवत् प्रियतमार्थस्य न वाचक इति "दिनं मे त्वयि सम्प्राप्ते ध्वान्ताच्छन्नापि यामिनी" इत्यादिवदवाचकत्वदोषः, तेन 'प्राणप्रियतम'मिति पाठः साधीयान्।

यदिति। स्नेहसंज्वरो वात्सल्यजनितः सन्तापः 'कदा किं भवे'दित्याशङ्का त्यस्तद्वता हृदयेन मम मनसा, निमित्तयोगाद्विनापि आपत्कारणसम्बन्धाभावेऽपि नित्यं सर्वदा त्वयि त्वद्विषये आपदो गणयता "स्नेहः पापमाशङ्कते" "प्रेम पश्यति भयान्यपदेऽपि" इति न्यायात् विपत्तीर्भावयता सता, आवद्धो धृतः वेपथुः कम्पो यस्मिन् कर्म्मणि तद्यथा तथा सकम्पं, यत् भयम् अन्वभावि अनुभूतम्। मम तत् सर्वं भयं, एकपद एव सहसैव, प्रनष्टम् अद्य दैववशाद्विनष्टम्। तवैवाभावादिति भावः।

अत्र निमित्तयोगं विनापि भयोत्पत्तेर्विभावनाऽलङ्कारः।

"तत्क्षणैकपदे तुल्ये" इति हलायुधः।

वसन्ततिलका वृत्तम् ॥ ३६ ॥

(च) सखे इति। अतिक्रान्ता इतः पूर्वं गताः मुहूर्त्ताः द्वादशक्षणपरिमितकाला अत्यल्पाल्पसमया इत्यर्थः। वरम् एतत्समयापेक्षया ईषत्प्रिया आसन्निति भावः।

(१) त्वद्व्यापदो गणयतो भयमन्वभावि, इत्यपि पाठः।

(२) प्रशान्तं, इति क्वचित् पाठः। (३) अथवा, इति पाठोऽपि

मपि भवन्तं येषु चेतयमानमनुभूतवानस्मि। इदानीन्तु मम (१) । (इति)

भारः कायो, जीवितं वज्रकीलं,
काष्ठाः शून्या, निष्फलानीन्द्रियाणि ।
कष्टः कालो मां प्रति त्वत्प्रयाणे
शान्तालोकः सर्वतो जीवलोकः ॥ ३७ ॥

येषु मुहूर्तेष्वपि भवन्तं तथाविधमपि मालतीविरहादुन्मत्तप्रायमपि सन्तं, चेतयमानं सचैतन्यम्, अनुभूतवान् प्रत्यक्षीकृतवानस्मि।

चेतयमानमिति "चित सञ्चेतने" इति चौरादिकात्मनेपदिनश्चितधातोः प्रयोगः।

भार इति। तव प्रयाणे मर्त्यलोकात् प्रस्थाने मरणे सति, मां प्रति लक्षीकृत्य समन्वयः। कायो देहः भारो दुर्वह इव प्रतीयते। तेन देहत्याग एव शान्तिरिति सूचितम्। जीवितं जीवनं, वज्रो वज्रमयः कीलः शङ्कुरिव तेन वज्रकीलं वज्रमयशङ्कुना हृदयेन सह संविद्धमिव प्रतीयत इत्यर्थः। कथमन्यथा ईदृग्दुःखताडनेऽपि न यातीति भावः। एतेन जीवनापगम एव साम्प्रतमभिप्रेत इति ध्वनितम्। काष्ठा दिशः शून्याः पदार्थरहिता इव प्रतीयन्ते। मोहावरणादिति भावः। इन्द्रियाणि चक्षुरादीनि, निष्फलानि मोहागमेन स्वस्वविषयाग्रहणात् प्रयोजनहीनानीव प्रतीयन्ते। कालः समय एव कष्टो दुःखकर इव प्रतीयते। येनास्मिन् काले एवंदृशी दुःखोत्पत्तिरिति भावः। तथा जीवलोकः संसारः सर्वतः सर्वासु दिक्षु शान्तालोक आलोकरहित इव प्रतीयते। आलोकरूपस्य तवैवाभावात्, अथवा मोहागमेन तमसाच्छन्नत्वादिति भावः।

अत्र इव शब्दाद्यभावात् एषां प्रतीयमानोत्प्रेक्षाणां मिथो नैरपेक्ष्यात् संसृष्टिरलङ्कारः।

शालिनी वृत्तम् ॥ ३७ ॥

(१) क्वचित् 'मम' इति पाठो नास्ति

विचिन्त्य। तत् किन्नु खलु माधवास्तमयसाक्षिणा मया भवितव्यमिति जीवामि (१)। तदस्मात् गिरिशिखरात् पाटलावत्यां निपत्य माधवस्य मरणाग्रेसरो भवामि। सकरुणं परिवृत्याऽवलोक्य च। कष्टम् (२)। (क)

तदेतदमितोत्पलद्युति शरीरमस्मिन्नभू-(३)
न्ममातिदृढपीड़नैरपि न तृप्तिरालिङ्गनैः।

---

(क) विचिन्त्येति। मया, माधवस्य अस्तमयोऽस्तगमनं मरणं तस्य साक्षी द्रष्टा तेन, भवितव्यं भूयत, इति हेतोः, किन्नु खलु जीवामि। तत् कथमपि नैव्यः। तदस्माद्दूरतः अस्माद्दृश्यमानात्। पाटलावत्यां पाटलावतीनामिकायां निम्नप्रवाहिन्यां नद्याम्। मरणे मृत्यौ भाविनि अग्रेसरः अग्रगामी भवामि। माधवमरणदर्शनभयेन पूर्वमहमेव म्रिये इत्यर्थः। सकरुणं सशोकं, परिवृत्य स्नेहाकर्षणेन पुनरावृत्य, अवलोक्य माधवस्य देहमिति शेषः।

अत्र व्यवसायो नाम विमर्शसन्धेरङ्गम। "व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसम्भवः।" इति लक्षणात्। प्रतिज्ञा नाम नाट्यालङ्कारश्च "प्रतिज्ञाव्यवसायकः…।" इति लक्षणात्।

तदिति। एतत् दृश्यमानं, तत् प्रसिद्धम्, अमितोत्पलस्य नीलोत्पलस्य द्युतिरिव द्युतिर्यस्य तत्, शरीरं माधवस्य वपुः, धरातले निस्पन्दमास्ते। अस्मिन् शरीरे अतिदृढपीड़नैरपि आलिङ्गनैः, मम तृप्तिर्नाभूत्। इदं शरीरमतिगाढमालिङ्ग्यापि न मे तृप्तिनिवृत्तिरासीदित्यर्थः। पुरा इतः पूर्वं, उल्लसितः अलौकिकसौन्दर्यदर्शनादुत्पन्नः,

(१) तत् किन्नु माधवास्तमयः साक्षिणा भवितव्यमित्यतो जीवामीति पाठभेदः।

(२) भवतु, अमुष्मादेव…सकरुणं निहत्यालोक्य। कष्टं भोः कष्टम्। इति पाठान्तरम्।

(३) ममापि, इति क्वचित् पाठः।

निर्वृत्तस्य फलेग्रहि द्रुमवरो दग्धस्य दावाग्निना
त्वं चूड़ामणितां गतस्य जगतः, प्राप्तस्य मृत्योर्वशम् ॥ ३८॥

तत् परिष्वजे तावदेवं गतमपि प्रियवयस्यम् (१)। अर्थित-स्यानेन मम्प्रत्ययमेवार्थः। (परिष्वज्य) हा वयस्य! विमलविद्या-निधे! (२) गुणगुरो! मालतीस्वयंग्राहजीवितेश्वर! हा सौन्दर्य्यविनिर्जितरतिरमणच्छाय! हा कामिनीहृदयमन्मथ!

दग्धः। तथा त्वं जगतश्चूड़ामणितां विद्यादिना शिरोमणितां प्राधान्यं गतस्य, मृत्योर्वशम् अधीनतां प्राप्तस्य। यथा चन्द्रः षोडशकलापरिपूर्णः सन् अवसराभावात् लोकाननानन्दयन्नेव राहुमुखं गच्छति, यथा वा मेघो जलपूर्णः सञ्चायमानो वर्षणात् प्रागेव वायुवेगात् विशीर्य्यते, यथा च सहकारादुत्तमतरुः फलवान् सन् तद्दान-द्वारा लोकानप्रीणयन्नेव दावाग्निना दह्यते, तथा त्वमपि रूपविद्यादिना गुणसमूहेन जगतः प्रधानः सन् अवसराप्राप्तत्वात् स्वजनानसन्तोषयन्नेव मृत्युवशं गतोऽसीत्यतः किमस्ति निदारुणदुःखमिति भावार्थः सरलार्थः।

अत एवात्र दृष्टान्तालङ्कारः क्रियासमुच्चयश्च, अनयोरङ्गाङ्गिभावेन सङ्करः।

"वर्षकाष्ठा घनाघना:।" इत्यमरः। फलानि गृह्णातीति फलेग्रहिः "फले-मलरजःसु ग्रहे"रिति इप्रत्ययः। "सूत्रनिपातनादित्व"मिति दुर्गसिंहः।

शार्दूलविक्रीड़ितं वृत्तम् ॥ ३८ ॥

(ग) तदिति। एवं गतमपि दृष्टावस्थमपि मूर्च्छितमपीत्यर्थः, परिष्वजे आलि-ङ्गामि। कथं मूर्च्छितमालिङ्गसीत्याह अर्थितस्येति। अनेन माधवेन, सम्प्रति अय-मेवार्थः ममालिङ्गनमेव अर्थितः "प्रियवयस्य! सम्भावय परिष्वज मा"मित्यनेनाहं

(१) (विचिन्त्य) तत् परिष्वजे अहं...वयस्यम्। इति पाठभेदः।

(२) विमलकलानिधे! इत्यपि पाठः।

हा बान्धवपयोनिधि-शरच्चन्द्र! (१) हा कामन्दकीमकरन्दानन्दनमुखचन्द्र! (२) माधव! अयमत्र ते जन्मन्यपश्चिमः पश्चिमावस्थां प्रापितो (३) मकरन्दबाहुपरिष्वङ्गः। स एष मकरन्दो मुहूर्त्तमपि जीवतीति मैवं मंस्थाः (४)। (ग)

---

याचितः। अत ईदृशमप्यालिङ्गामीति भावः। गणितैर्गाम्भीर्यादिभिः गभीरः। प्राणा सर्वस्यैव शिवकस्तत्सम्बोधनम्। मालत्याः स्वयं ग्राहेण आत्मना ग्रहणेन न पुनः पित्रादिप्रदानेनेत्यर्थः जाग्रितेश्वरः पतिः, तत्सम्बोधनम्। तादृशीमसमगुणां स्वयमेव पतित्वेन गृहीतवानीत् लोकोत्तरगुणवतामसीति भावः। सौन्दर्य्येण विनिर्जिता रतिरमणस्य मदनस्य छाया कान्तिर्येन तत्सम्बोधनम्। कामिनीहृदयमन्मथेत्यनेन सदृशादर्शकोऽपवर्तनेनेत्यनेनम्। बान्धवाः पित्रादय एव पयोनिधयः समुद्रास्तेषु शरच्चन्द्रः, तत्सम्बोधनम्। तदानन्दोल्लासजनकत्वादिति भावः। अत्र परम्परितरूपकमलङ्कारः। अत्र जन्मनि, अस्मिन् मया क्रियमाण अपश्चिमः अन्त्योऽपि यतः परमपि कर्त्तुमसमर्थ मानोऽयं सः, पश्चिमावस्थां अपरां प्रापितो दैवेन नीतः एष इत्यर्थः मकरन्दस्य बाहुभ्यां परिष्वङ्ग आलिङ्गनम्। ननु कथमयं शेषः परिष्वङ्ग इत्याह स एष इति जीवति त्वां विना इति शेषः। इत्येवं मा संस्थाः न मनसि कुर्याः। इदानीमिमाहूर्त्तमपि मियं इति भावः।

---

(१) पुस्तकान्तरे सौन्दर्य्येत्यादि सम्बोधनत्रयं नास्ति।

(२) कामन्दकीमकरन्दानन्दजनक! इति पाठान्तरम्।

(३) पश्चिमावस्थाप्रार्थितः, इति पाठान्तरम्।

(४) सखे! सम्प्रति मुहूर्त्तमपि मकरन्दो जीवतीति मैव मंस्थाः। कुतः। इति पाठभेदा।

आजन्मनः सह निवासितया (१) मयैव
मातुः पयोधरपयोऽपि समं निपीय।
त्वं पुण्डरीकमुख! बन्धुतया निरस्त-
मेको निवापसलिलं पिबसीत्ययुक्तम् ॥४०॥

सकरुणं विमृश्य परिक्रम्य च। इयमधस्तात् पाटलावती। भगवत्यापगे! (घ)

प्रियस्य सुहृदो यत्र मम तत्रैव सम्भवः।
भूयादमुत्र (२) भूयोऽपि भूयासमनुमज्ज्वरः ॥ ४१ ॥

इति पतितुमिच्छति।

आजन्मन इति। हे पुण्डरीकमुख! सिताम्भोजवन्मनोहरवदन! आजन्मनो जन्मावधि सहनिवासितया एकत्रावस्थायितया हेतुना मयैव समं सह मातुः पयोधरपयोऽपि स्तनदुग्धमपि निपीय पीत्वा, इदानीं त्वमेकः, बन्धुतया पित्रादि बन्धुसमूहेन निरस्तं निक्षिप्तं दत्तं निवापसलिलं प्रेततर्पणजलं पिबसि, पास्यसीति भविष्यत्सामीप्ये वर्त्तमाना इत्युक्तम् इदमसङ्गतम्। अत्रापि मम सहभावस्यैवौचित्यादिति भावः। एतेनाहमपि जीवनं विमुच्य तव सहचरो भवामीति व्यज्यते।

"पितृदानं निवापः स्या"दित्यमरः। बन्धुतयेति समूहार्थे तल् प्रत्ययः।

वसन्ततिलका वृत्तम् ॥ ४० ॥

(घ) सकरुणमिति। विमृश्य धृतं माधवशरीरं परित्यज्य। अधस्तादस्तीति शेषः। भगवति। तीर्थत्वान्माहात्म्यशालिनि। आपगे! नदि!

प्रियस्येति। प्रियस्य सुहृदः प्रियसखस्य माधवस्य यत्र स्थाने सम्भव उत्पत्ति-

---

(१) सहनिवासतया इति क्वचित् पाठः।

(२) अमुष्य, इत्यपि पाठः।

(प्रविश्य सहसा सौदामिनी वारयित्वा) **वत्स ! अलं साहसेन (१)। (ङ)**

मक। (विलोक्य) **अम्ब ! कासि ?। किमहं त्वया प्रतिषिद्धः ?।**

सौदा। **आयुष्मन् ! त्वं किं मकरन्दः ?**

मक। **मुग्धे, स एवास्मि मन्दभाग्यः।**

भवेत्, ममापि तत्रैव स्थाने सम्भवो भूयात्। इति प्रार्थयामीति भावः। तथा भूयः पुनरपि, अमुत्र जन्मान्तरे, अनन्यचरः माधवस्यानुचरः, भूयासं भवेयम्। इति च प्रार्थयामीति भावः।

अत्र पद्यार्द्धे वृत्त्यनुप्रासोऽलङ्कारः। तथा समाप्यापि गर्ह्यो विधेयं वक्तव्यः— किन्तु नोक्त इति वाच्यानभिधानदोषः, तथा पूर्वार्द्धोल्लिखितस्य भूयादित्यस्य परार्द्धे पाठादर्द्धान्तरैकपदतादोषश्च। तयोर्निरासाय श्लोकोऽयमेवं पठनीयः—

'मत्यैव भवेज्जन्म भूयात्तत्रैव मेऽपि तत्।
अमुत्रामुष्य-भूयोऽपि भूयासमनन्यचरः॥'

"प्रेत्यामुत्र भवान्तरे." इत्यमरः। भूयात् भूयासमित्युभयत्रापि प्रार्थनायामाशीर्लिङ्। उक्तविधिनैव च प्रार्थनेति बोध्यम् ॥ ४१॥

(ङ) प्रविश्येति। सहसा द्रुतं प्रविश्येत्यन्वयः। साहसेन गिरिशिखरात् नद्यां पतनरूपेणात्महत्याजनकसाहसकर्म्मणा।

(१) सौदामिनी। प्रविश्य सहसा वारयित्वा। वत्स ! कृतं साहसेन। इति पाठभेदः।

सौदा। वत्स ! योगिन्यस्मि ; मालत्या अभिज्ञानञ्च धारयामि (१)। इति वकुलमालां दर्शयति। (च)

मक। सोच्छ्वासं सकरुणम्। आर्य्ये ! (२) अपि जीवति मालती ?

सौदा। अथ किम्। वत्स ! किमत्याहितं माधवस्य ? यदनिष्टे व्यवसितोऽसि, इत्याकम्पितास्मि। अथ माधवः क ? (३)। (छ)

मक। आर्य्ये ! तमहं प्रमुग्धमेव वैराग्यात् परित्यज्यागतः। तदेहि तूर्णं सम्भावयावः। त्वरितं परिक्रामतः। (ज)

---

(च) सौदेति। योगिन्यस्मि काचिदिति शेषः। अभिज्ञानं चिह्नम्।

(छ) सौदेति। अत्याहितं जीवानपेक्षि कर्म्म, जीवनाशारहितः कोऽपि व्यापारो जातः किमित्यर्थः। यद् यस्मात्, अनिष्टे पर्व्वतात् पतनरूपे व्यापारे व्यवसितः प्रवृत्तः।

"अलं साहसेन" इत्याद्येतदन्ते सन्दर्भे मकरन्दस्य मरणोद्यमोपसंहार-प्रदर्शनात् प्ररोचना नाम विमर्षसन्धेरङ्गम्। तथा च दर्पणे—

"प्ररोचना तु विज्ञेया संहारार्थप्रदर्शिनी।"

(ज) मकेति। प्रमुग्धं मूर्च्छितम्। वैराग्यात् तज्जीवनं प्रति नैराश्यात्। सम्भावयावः सञ्जीवयितुं चेष्टावहे। परिक्रामतो माधवान्तिकं गन्तुं पादक्षेपान् कुरुतः सौदामिनीमकरन्दाविति शेषः।

(१) मालतीप्रत्यभिज्ञानञ्च धारयामि ··। इति क्वचित् पाठः।

(२) क्वचित् 'आर्य्ये !' इति पाठो नास्ति।

(३)···यदनिष्टे···इति पाठभेदः। अथ माधवः क। इति च नास्ति

माध०। (आश्वस्य) अये! प्रतिबोधित एवास्मि केनापि। (विचिन्त्य) नूनमस्याभिनवजीमूतजलवाहिनः प्रभञ्जनस्यानपेक्षितास्मदवस्थोऽयं व्यापारः। (झ)

मक०। दिष्ट्या पुनः प्रत्यापन्नचेतनो वयस्यः।

सौदा०। (विलोक्य) संवदत्युभयोर्मालतीनिवेदितः शरीराकारः। (ञ)

माध०। भगवन्! पौरस्त्यपवन! (१)। (ट)

(झ) माधेति। आश्वस्य सचेतनो भूत्वा। नूनं निश्चितम्। अभिनवजीमूतजलवाहिनः नूतनमेघजलबिन्दुवाहिनः, प्रभञ्जनस्य वायोः; न अपेक्षिता न अवगता अस्माकमवस्था मालतीविरहजनितदुर्दशा यस्मिन् व्यापारविषये सः अयं व्यापारः सचैतन्यसम्पादनरूपं कार्य्यम्। तथा च वायुर्यदि मदीयदुरवस्थामज्ञास्यत, तदा मम मूर्च्छाभङ्गानन्तरपुनर्दारुणदुःखानुभवसम्भावनया मां सचेतनं नाकरिष्यदिति भावः।

एतेन मालतीविरहदुःखानुभवसम्भवाभावेन मूर्च्छैवेदानीं वाञ्छनीयेति ध्वन्यते।

(ञ) सौदेति। उभयोर्माधवमकरन्दयोः संवदति प्रत्यक्षतः सम्मिलति सुतरामिमावेव माधवमकरन्दौ, नात्र संशय इति भावः।

(ट) माधेति। पौरस्त्यपवन पूर्व्वदिग्वर्त्तिवायो।

(१) त्वरितं परिक्रामत इत्यनन्तरं—

मकरन्दः। (विलोक्य) दिष्ट्या प्रत्यापन्नचेतनो वयस्यः।

सौदामिनी। संवदत्युभयो…।

माधवः। (आश्वस्य) अये! प्रतिबोधितवानस्मि केनापि। (विचिन्त्य)

भ्रमय जलदानम्भोगर्भान्, प्रमोदय चातकान्,
कलय शिखिनः केकोत्कण्ठान्, कठोरय केतकान्।
विरहिणि जने मूर्च्छां लब्ध्वा विनोदयति व्यथा-
मकरुण! पुनः संज्ञाव्याधिं विधाय किमीहसे ॥ ४२ ॥

भ्रमयेति। अम्भोगर्भान् जलमध्यान् जलदान् मेघान् भ्रमय जगदुपकाराय वर्षणाय इतस्ततः सञ्चालय। चातकान् पक्षिणः प्रमोदय जलदानेनानन्दय। केकाया स्वध्वनावुत्कण्ठा औत्सुक्यं येषां तान्, शिखिनो मयूरान् कलय गर्जितेन नर्त्तय। तथा केतकान् केतकीवृक्षान् कठोरय जलवर्षणेन पीडान् कुरु। एतत्प्रकाराभावात् काचिदपि नास्त्यापत्तिरिति भावः। पुनः किन्तु हे अकरुण निर्दय! मूर्च्छां लब्ध्वा व्यथा विरहवेदना विनोदयति अपनुदति, विरहिणि जने संज्ञा चेतनैव व्याधिः पीड़ा तं विधाय कृत्वा किं फलम् ईहसे लब्धुं चेष्टसे। संज्ञायां सत्यां पुनर्विरहवेदनानुभवेन त्वत्कर्तृकतत्संज्ञाविधान एव महत्यापत्तिरिति भावः। एतेन मम मूर्च्छैवेदानीं सर्वथा प्रार्थनीयेति व्यज्यते।

अत्राप्रस्तुताज्जनसामान्यात् प्रस्तुतस्य विशेषस्य स्वस्य माधवस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः, संज्ञाव्याधिमिति निरङ्ग केवलरूपकञ्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः। तथा भगवन्निति सम्बोधनेन वायोर्गुरुत्वमङ्गीकृत्य शोकावेगवशात् पुनरकरुणेति सम्बोधनादिना तस्य व्यतिक्रमात् द्रवो नाम विमर्षसन्धेरङ्गम्। तथा च दर्पणे

"द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसम्भवा।"

तथा विशेषणं नाम नाट्यलक्षणञ्च। "अर्थान् सिद्धान् बहूनुक्त्वा विशेषोक्तिर्विशेषण" मिति लक्षणात्।

हरिणी वृत्तम् ॥ ४२ ॥

ननमस्यायं नवजलधरप्रभञ्जनस्यानवेक्षिताशदवस्थो व्यापारः। भगवन् पौरस्त्य वायो! इति पुस्तकान्तरे पाठस्य विन्यासस्य च वैषम्यं दृश्यते।

मक। सुविहित-मनेनाखिलजन्तु-जीवनेन मातरिश्वना (१)। (ठ)

माध। देव वायो! तथापि भवन्तमेव (२) प्रार्थये। (ड)

विकसत्कदम्बनिकुरुम्ब(३)-पांसुना

मह जीवितं वह मम (४) प्रिया यतः।

(ठ) मकेति। अखिलानां जन्तूनां प्राणिनां जीवनेन जीवनस्वरूपेण, अनेन मातरिश्वना वायुना, सुविहितं माधवस्य चैतन्यसम्पादनेन सुष्ठु कार्य्यं कृतम्। अखिलजन्तुजीवनेन माधवस्य प्रत्युज्जीवनमुचितमेवेति भावः।

(ड) माधेति। तथापि मन्त्राद्याधिविधानेन प्रार्थनीयोऽपि।

विकसदिति। यतो यत्र स्थाने प्रिया मालती वर्त्तते, तत इत्यर्थः, विकसतः प्रस्फुटतः कदम्बनिकुरम्बस्य कदम्बकुसुमसमूहस्य पांसुना परागेण सह मम जीवितं जीवनं वह नय। तत्स्थाने बाहुल्येन कदम्बकुसुमस्यैव विकाशात् तद्वहनस्य च स्वाभाविकत्वात् प्रथमपादोक्तिः। एवमपि धन्योऽभवेयमिति भावः। ननु तव जीवन-

(१) सुहृत्तमखिल- इति पाठभेदः। क्वचित् पुस्तके 'मातरिश्वना' इत्यतः परमयं श्लोको दृश्यते—

एते केतकगन्धसौरभजुषः पौरप्रगल्भाङ्गना-
स्यार्त्तालालकवल्लरीविलुलन-व्याजोपभुक्तानना:।
किञ्चोन्निद्रकदम्बकुड्मलपटीधूलीलवैः षट्पद-
व्यूहव्याकुलितद्रुमा विरहिणां कर्षन्ति वर्षानिलाः॥

(२) भवन्तमेवमिति पाठान्तरम्। (३) -निकुरम्बपांसुना इत्यपि पाठः।

(४) घटय मे इति क्वचित् पाठः।

अथवा तदङ्गपरिवामशीतलं
मयि किञ्चिदर्पय भवान् हि (१) मे गतिः ॥४३॥

कृताञ्जलिः प्रणमति ।

सौदा । **सुसमाहितः खल्वभिज्ञानार्पणस्यावसरः** । अञ्जलौ वकुलमालामर्पयति । (२) । (ढ)

माध । साकूतविस्मयहर्षम् (३) । **कथमियमस्मद्विरचिता प्रियायाः**

ऽन्यथा मरणेन महापापं स्यादिति चेत्तत्राह अथवेति । अथवा तस्या मालत्या अङ्गप परिवासेन अवस्थानेन शीतलं किञ्चित् विरहदुःखेन भूतलावलुण्ठनकालसम्पृक्ताद्यादिकं वस्तु मयि अर्पय । तदापि जीवनधारणसम्भवेन महानुपकारः कृतः स्यादिति भावः । ननु त्वदर्थं कथमीदृशं परिश्रमं करोमीत्याह भवानित्यादि । हि यस्मात् भवान् मे मम गतिरिदानीमाश्रयः । सुतरामाश्रयेण आश्रितस्योपकारः करणीय एवेति भावः ।

मञ्जुभाषिणी वृत्तम् ॥ ४३ ॥

(ढ) सौदेति । अभिज्ञानार्पणस्य मालतीचिह्नरूपवकुलमालाप्रदानस्य, सुसमाहित उपयुक्तः खल्वयमवसरः समयः । अञ्जलौ वादप्रार्थनार्थकृते माधवस्याञ्जलौ ।

(ण) माधेति । आकूतेन 'इयं सैव वकुलमाला भवतु' इत्यभिप्रायेण, विस्मयेन निकृष्टेशमालत्याङ्गसङ्गिन्यास्तस्या वकुलमालायाः कथमत्र सम्भव इत्याश्चर्येण, हर्षेण तदङ्गसङ्गिन्या एव मालाया लाभादानन्देन च सहेति साकूतविस्मयहर्षम् ।

(१) भवांस्तु इति भिन्नः पाठः ।

(२)···अभिज्ञानदर्शनस्य···। ···मालां मुञ्चति । इति पाठभेदः ।

(३) साकूतं सहर्षं सविस्मयश्चेति पाठान्तरम् ।

स्तनोद्भेददुर्ललितमूर्त्तिरनङ्गमन्दिराङ्गनवकुलप्रसवमाला। निरूप्य सदर्पम् (१) कः सन्देहः। तथा हि स एवायमस्याः (ग)—

मुग्धेन्दुसुन्दर-तदीयमुखावलोक-
हेला-विशृङ्खल-कुतूहल-निह्नवाय।
दुर्न्यस्त-पुष्प-रचितोऽपि लवङ्गिकाया-
स्तोषं ततान विषमग्रथितोऽपि (२) भागः ॥४४॥

प्रियाया मालत्याः स्तनयोरुद्भेदेन उन्नत्या दुर्ललिता वाल्येन वसनसङ्घर्षणात् किञ्चि-न्म्लानिव्यक्षीणा मूर्त्तिर्यस्याः सा। अनङ्गमन्दिरस्य मन्मथभवनस्य यदङ्गनं चत्वरं तत्र यो वकुलस्तरुस्तस्य प्रसवमाला पुष्पमाल्यम। निरूप्य निःशेषेणावलोक्य। कः सन्देहः, सैवेयं माला इत्यर्थे कः संशयः। अस्या मालायाः स एवायं भाग इति श्लोकस्थेनान्वयः।

मुग्धेन्दिति। मुग्धेन्दुवत् मनोहरचन्द्रवत् सुन्दरं यत् तदीयमुखं मालतीवदनं तस्य अवलोकेन दर्शनेन या हेला शृङ्गारभावजनितक्रिया अविरततन्मुखदृष्टिपातरूपः कन्दर्पस्य विकार इत्यर्थः, तथा विशृङ्खलम् अनियतभावेनोत्पन्नं, कुतूहलं मुखमुन्नमय्यावनमय्य तन्मुखदर्शनकौतुकं, तयोर्निह्नवाय गोपनाय, मालाग्रथनेन तत्रैवास्याभिनिवेशो नान्यत्रेत्यन्येषां सम्भावनाजननार्थमित्यर्थः, दुर्न्यस्तैः मालतीदर्शनोत्कण्ठया मनोयोगाभावेन विपरीतमुखतया समर्पितैः, पुष्पैः रचितोऽपि निर्मितोऽपि, तथा विषमं यथा स्यात्तथा ग्रथितोऽपि मध्ये मध्ये क्षुद्राणां वृहताञ्च पुष्पाणां विन्यासादसमानभावेन गुम्फितोऽपि, अस्या मालायाः, स एवायं भाग एकदेशः, लवङ्गिकाया स्तोषं ततान

(१) प्रियास्तनोन्नाह···वकुलपादपकुसुममाला (सम्यक् निरूप्य)। इति भिन्नः पाठः।

(२) विभागः, इत्यपि पाठः।

सहर्षोन्मादमुत्थाय । **प्रिये मालति ! नन्वियं वीक्ष्यसे (१) ।**

सकौतुकम् । **अयि मदवस्थानभिज्ञे ! (त)**

**प्रयान्तीव प्राणाः, सुतनु ! हृदयं ध्वंसत इव,**

**ज्वलन्तीवाङ्गानि, प्रसरति समन्तादिव तमः ।**

'मालत्यास्तूत्कण्ठावशादेवेदं वैषम्यं जात'मिति बुध्यमानाया लवङ्गिकाया आनन्दं विस्तारयामास । सुतरां 'सैवेयं माला' इत्यर्थे नास्ति कश्चित् संशय इति भावः ।

अत्र मुखेन्दुसुन्दरेति लुप्तोपमाङ्गं कान्तिप्रामर्थ्यं रिकाश्रयानुप्रवेशरूपः सङ्करालङ्कारः । मेघावरणादिना कदाचिच्चन्द्रस्य असौन्दर्यमपि स्यात् तन्निरासाय सुन्दरपदम् । अतएव नाधिकपदत्वदोषः ।

वसन्ततिलका वृत्तम् ॥ ३४ ॥

(त) सहर्षोन्मादमिति । सैवेयं मालतीति निश्चयोदयात् हर्षोन्मादेन सहेति तत नन्वित्यवधारणे । इयं वीक्ष्यसे, इदानीमेवावान्विष्य मया त्वं दृश्यसे इत्यर्थः । पुरतः क्वचिद्वर्त्तमाना मालती, कौतुकाय ममाञ्जलौ मालामिमामर्पितवतीति मन्यमानस्य माधवस्योक्तिरियम् ।

प्रयान्तीति । शोभना तनुर्यस्याः सा सुतनूः ; हे सुतनु ! मालति ! प्राणाः ममासवः प्रयान्तीव तव विरहेण गच्छन्तीव । हृदयं हृदयदेशो वक्षः, ध्वंसते विदीर्यत इव । अङ्गानि विरहानलेन ज्वलन्तीव । तथा तमोऽन्धकारः समन्तात् सर्वासु दिक्षु प्रसरतीव मोहागमात् व्याप्तं भवतीव अतएव अयं त्वराप्रस्ताव इदं शीघ्रतायाः प्रकरणम्, अतिसत्वरमागत्य दर्शनदानमावश्यकमित्यर्थः । किन्तु परिहासस्य परिहासाय आत्मगोपनस्य न खलु विषयः अवसरः । तथात्वे मम मरणमवश्यम्भावीति भावः तत्तस्मात् अक्षणोश्चक्षुषोः, आनन्दं दर्शनदानेनामोदं वितर देहि, मयि अकरुणा

(१) चण्डि मालति ! इयं विलोक्यसे, इति क्वचित् पाठः ।

त्वराप्रस्तावोऽयं, न खलु परिहासस्य विषयः,
तदक्ष्णोरानन्दं वितर, मयि माभूरकरुणा ( १ ) ॥४५॥

सर्वतो दृष्ट्वा सनिर्वेदम् । कुतोऽत्र मालती । वकुलमालां प्रति ( २ )
अयि प्रियाप्रणयिनि! वकुलमाले! उपकारिण्यसि, अतः स्वागतं भवत्याः ? ( ३ ) । ( घ )

आत्मगोपनेन निर्दया मा भूः न भव । मालती खल्वात्मगोपनं विधाय मया सार्द्धं परिहासं कुरुते, इति सत्योक्तिरियम् ।

अत्र तृतीयचरणवाक्यार्थं प्रति प्रथमार्द्धगतवाक्यार्थानां हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, प्रथमार्द्धे चतस्रः क्रियास्तत्प्रकाश्य, इत्यतेषामङ्गाङ्गिभावेन सङ्करः। त्वराप्रस्तावोऽयमित्यनन्तरं भेदबोधकः किन्तुशब्दस्तुशब्दो वा वक्तव्यः, किन्तु नोक्त इति वाच्यानभिधानदोषः, किन्तुशब्द-तुशब्दयोर्भेदवाचकतावादिमते तु न्यूनपदत्वदोषः । तावुभौ प्रसजन्तावपि गुणतामेव भजतः । "उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः ।" इति साहित्यदर्पणात् । एकजातीयतया तत्र वाच्यानभिधानस्यापि गुणत्वौचित्यात् ।

तथा 'अयि मदवस्थानभिज्ञे ! इत्यनेन 'त्वराप्रस्तावोऽय'मित्यादिना च 'भर्त्सन' करणात् परीवादो नाम नाट्यालङ्कारः । "भर्त्सना तु परीवादः" इति लक्षणात् । शिखरिणी वृत्तम् ॥ ४५ ॥

(घ) सर्वत इति । निर्वेदेन मालत्यप्राप्तिगतमात्मावमाननया सहेति सनिर्वेदम् ।

(१) अकरुण इति क्वचित् पाठः ।

(२) उद्दिश्य, इत्यपि पाठः ।

(३) अयि प्रियाप्रणयिनि ! परमोपकारिण्यसि । इतिमात्रः पाठः क्वचित् ।

निष्प्रत्यूहाः प्रियसखि ! यदा दुःसहाः सम्बभूवुः
देहोद्दाहव्यसनगुरवो मन्मथोन्माथवेगाः (१)
तस्मिन् काले कुवलयदृशस्त्वत्समाश्लेष एव (२)
प्राणत्राणं प्रगुणनमभू-(३)न्मत्परिष्वङ्गकल्पः ॥ ४६

उपकारिण्यसि मम कथञ्चिदाश्वासनादिति भावः । अत उपकारिवस्तुन आदरकरणस्यौचित्यात् स्वागतप्रश्ने नादरप्रतीतिः ।

निष्प्रत्यूहा इति । हे प्रियसखि ! सखीवत् प्रीतिकारित्वादिति भावः, बकुलमाले ! यदा यस्मिन् काले कुवलयदृशः नीलोत्पलनयनाया मालत्याः, निष्प्रत्यूहा निर्विघ्नाः केनाप्यप्रतिहताः, देहोद्दाहव्यसनेन शरीरसन्तापनरूपविपदा गुरवो महान्तः, अत एव दुःसहाः, मन्मथोन्माथवेगाः मदनवेदनावेगाः सम्बभूवुः, मामवलोक्येति शेषः । तस्मिन् काले मत्परिष्वङ्गकल्पः ममालिङ्गनतुल्यः, त्वत्समाश्लेष एव तव बकुलमालया आलिङ्गनमेव, प्राणानां त्राणं रक्षणं यस्मात् तत् प्राणत्राणं प्रगुणनम् आनुकूल्यकारी, अभूत् मालत्या इति शेषः । दारुणमदनवेदनावेगान्मृतप्राया मालती तदानीं ममालिङ्गनमिव तवालिङ्गनं प्राप्य प्राणानधारयत्, सुतरां परमोपकारिण्यास्तव स्वागतप्रश्ने नादरकरणमेकान्तावश्यकमिति भावः ।

अत्र मत्परिष्वङ्गकल्प इत्यार्थीयमुपमा, तथा देहोद्दाहेति मन्मथोन्माथेति च्छेकानुप्रासश्चेत्येतयोः संसृष्टिरलङ्कारः ।

मन्दाक्रान्ता वृत्तम् ॥ ४६ ॥

(१) मोहोन्मादव्यसनगुरवो मन्मथोन्मादवेगाः । इति पाठान्तरम् ।

(२)...त्वत्समाश्लेषणं वा इति पाठभेदः ।

(३)...प्रगुणमभवत्...इति भिन्नः पाठः ।

मकरन्दं निश्वस्य (१)।

**आनन्दनानि मदनज्वरदीपनानि (२)**
**गाढानुरागरसवन्ति तदा तदा च।**
**स्नेहाकराणि मम मुग्धदृशश्च कण्ठे**
**कष्टं स्मरामि तव तानि गतागतानि ॥४७॥**

हृदये निधाय मूर्च्छति।

---

आनन्दनानीति। हे वकुलमाले! आनन्दनानि आवयोरुभयोरेव परस्परगम-परिचयनिर्वाहकत्वात् आमोदजनकानि। मदनज्वरदीपनानि क्रमेण सङ्गमसम्भावना-करणात् कामसन्तापोद्दीपकानि। गाढानुरागो नितान्तासक्तिरेव रसस्तद्वन्ति जनक-तया तत्कालानि सम्मेलनविषये परस्परनितान्तेच्छाजनकानीत्यर्थः। स्नेहं परस्परप्रणयम् आकुर्वन्ति सम्यग् जनयन्तीति स्नेहाकराणि। तानि सङ्घटितानि तदा तदा च तस्मिन् तस्मिन्नेव काले, मम माधवस्य, मुग्धदृशो मनोहरनयनायाः मालत्याश्च कण्ठे गले, तव गतागतानि यातायातानि कष्टं यथा स्यात्तथा स्मरामि। अद्य तदेव तव चरितमिति भावः।

अत्र सादृश्याभावेऽपि रागवानन्दसद्भापातसमये स्मरणालङ्कारः, "शिरीषमृद्वी"त्यादि दर्पणोदाहृतवत्।

अत्र प्रथमं माधवकण्ठाल्लवङ्गिकाहस्तेन मालतीकण्ठं गमितं गतं, पुनर्मालत्या लवङ्गिकाभ्रमेण माधवकण्ठं विन्यस्ता, इत्यागतमित्येकं गतागतं। चौरिकाविवाह-समये च माधवेन मालतीकण्ठं दत्ता, मालत्या च माधवकण्ठे, विवाहे माल्यपरि-वर्त्तनव्यवहारादित्थं द्वितीयं गतागतमनुक्तमपि जातमिति मन्तव्यम्। पुनश्च प्रणयवशा-न्माधवेन मालतीकण्ठं समर्पितेति गतं (अष्टमाङ्के) इदानीञ्च सौदामिनीहस्तेना-

---

(१) निर्वर्ण्य. इत्यपि पाठः।

(२) आनन्दमिश्रमदनज्वरदीपनानि, इति पाठान्तरम्।

मक। उपसृत्य वीजयन्। समाश्वसिहि सखे! समाश्वसिहि (१)।

माध। समाश्वस्य (२) मकरन्द! किं न पश्यसि, कुतोऽपि सहसैव मालतीस्नेहं वहतो वकुलदाम्नो लाभः (३)। तत् कथं नु मन्यसे किमेतदिति। (द)

मक। वयस्य! इयमार्य्या योगेश्वरी अस्य मालत्यभिज्ञानस्योपनेत्री (४)! (ध)

गतेत्यागतमिति तृतीयं गतागतमित्यनेन बहुवचनं प्रयुक्तम्। अनन्तत्वाद्विनीयगतागतानङ्गीकारे तु गमनगतद्वित्वेनागमनगतद्वित्वेन च बहुत्वाद्बहुवचनसङ्गतिरिति बोध्यम्।

वसन्ततिलका वृत्तम् ॥ ४७ ॥

(द) माधेति। एतदिति सामान्यत्वान्नपुंसकं। कथमयं वकुलदाम्नो लाभो जात इत्यर्थे त्वं किं मन्यसे इत्यर्थः। निरुद्देशं गताया मालत्याः कण्ठगतेयं माला कथमत्रागतेति हेतुनिर्णयानर्हत्वात् आनन्दविस्मयसंशयैराकुलोऽस्मीति भावः।

(ध) मकेति। मालत्यभिज्ञानस्य वकुलमालारूपस्य, उपनेत्री उपस्थापयित्री आनेत्री।

(१) मकरन्दः। (उपसृत्य) सखे! समाश्वसिहि। इति क्वचित् पाठः।

(२) आश्वस्य इति पाठः क्वचित्।

(३)...सहसैव मालती वक्षःस्थलस्य लाभः। तत् कथं मन्यसे किमेतदिति। इति भिन्नः पाठः।

(४) क्वचित् 'वयस्य' इति नास्ति।...नेत्री इति पाठः।

माध । विलोक्य (१) सकरुणं कृताञ्जलिः । **आर्य्ये ! प्रसीद, कथय. जीवति मे प्रिया ? (२) । (न)**

सौदा । **वत्स ! समाश्वसिहि । जीवति सा कल्याणी (३) । (प)**

माधव-मकरन्दौ । समुच्छस्य । **आर्य्ये ! यद्येवं, तत् कथय, कथमेष वृत्तान्त इति । (४) ! (फ)**

सौदा । **पुरा किल करालायतने मालतीमुपहरन्नघोरघण्टः करवालपाणिना माधवेन व्यापादितः (५) । (ब)**

माध मोहेगम । **आर्य्ये ! विरम, परिज्ञातो (६) वृत्तान्तः । (भ)**

(न) माधेति । मे मम प्रिया मालती जीवति किमिति काकुः ।

(प) सौदेति । कल्याणी मङ्गलवती सती जीवतीत्यर्थः ।

(फ) माधेति । यद्येवं सा कल्याणी सती जीवति चेत् । तत्तदा । एष वृत्तान्तः मालत्या निरुद्दृष्टव्यापारः कथं सङ्घटित इति शेषः ।

(ब) सौदेति मालतीमुपहरन् करालायै बलिभावेन भयच्छन् छिन्दन्नित्यर्थः । करवालपाणिना खड्गहस्तेन ।

(भ) माधेति । विरम पुनस्तद्घटनाविवरणपरिश्रमात् विरता भव । येन हि परिज्ञाता वृत्तान्तः, मया स्वयमेवेदानीमवगतो वृत्तान्तः ।

---

(१) क्वचित् 'विलोक्य' इति नास्ति । (२) प्रिया सा इति क्वचित् पाठः

(३) समाश्वसिहि समाश्वसिहि जीवति सा कल्याणी, इति पाठभेदः ।

(४)...दृष्टा उच्छस्य ।...क एष...इत्यपि पाठः ।

(५) सौदामिनी । अस्ति पुरा करालायतनेऽघोरघण्टः कृपाणपाणिर्व्यापादितः

मक। क इव * ? (१)

माध। सखे! (२) किमन्यत्। सकामा कपालकुण्डला। (म)

मक। आर्य्ये! अप्येवम् ?। (य)

सौदा। एवं यथा निवेदितं वत्सेन। (र)

मक। कष्टं भोः! कष्टम् (३)।

कुमुदाकरेण शरदिन्दुचन्द्रिका
यदि रामणीयकगुणाय सङ्गता।

---

* मकेति। क इव तावन्मालीत्या को वृत्तान्तः परिज्ञात इत्यर्थः।

(म) माधेति। सकामा सफलकामा। कपालकुण्डलया खलु व्यापादयितुं मालत्यपहृतेति भावः। तथाच "तदवश्यमनुभविष्यसि कपालकुण्डलाकोपस्य फल" मिति षष्ठाङ्कविष्कम्भकवाक्यं पञ्चमाङ्केऽप्यघोरघण्टवधानन्तरं कपालकुण्डलया माधवमुद्दिश्याभिहितमिति मन्तव्यं, तत् संस्मृत्य माधवस्योक्तिरियम्।

(य) मकेति। माधवमुखात् पूर्वमेव श्रुताघोरघण्टवधवृत्तान्तो मकरन्दस्तत्कालीनं माधवेनावधारितमावं पृच्छति अप्येवमिति। माधवेनानुमानाद्यथावधारितं, अयं वृत्तान्त एवं किमित्यर्थः।

(र) सौदेति। वत्सेन माधवेन यथा निवेदितं अनुमानेनोक्तं, अयं वृत्तान्त एवं, तथैवेत्यर्थः।

कुमुदेति। शरदिन्दुचन्द्रिका शरच्चन्द्रज्योत्स्ना, रामणीयकगुणाय सौन्दर्य्यगुणार्थं यदि दैवात् कुमुदाकरेण कैरवसमूहेन सह सङ्गता मिलिता। तत् सुकृतं, सुष्ठु, कृतं, सुतरां तदस्तु परस्परयोग्यत्वात्तव न कस्यचिदापत्तिरिति भावः। नु किन्तु

---

(१) सखे! क इव। इति पाठोऽपि।

(२) क्वचित् 'सखे!' इति पाठो नास्ति।

भोः! कष्टमित्येतत् इति क्वचित् पाठः!

सुकृतं तदस्तु, कतमस्त्वयं विधि-
र्यदकालमेघविततिर्व्ययूयुजत् ॥ ४८ ॥

माध हा प्रिये मालति ! कष्टमतिबीभत्समापन्नासि । (ल)
कथमिव (१) तदाभवस्त्वं कमलमुखि ! कपालकुण्डलाग्रस्ता ।
उत्पातधूमलेखाक्रान्तेव कला शशधरस्य ॥ ४९ ॥

अयं कतमो विधिः विधातुर्विधानं, यत् अकालमेघविततिः असमयोत्पन्ना मेघपङ्क्तिः व्ययूयुजत् अभ्यन्तरावरणेन शरच्चन्द्रिकाकुमुदाकरौ वियोजितवती। कुमुदाकरेण शरच्चन्द्रिकाया इव माधवेन सह मालत्या मेलनं परस्परयोग्यत्वादतीवानन्दकरं, किन्तु मेघमालया शरच्चन्द्रिकाकुमुदाकरयोरिव कपालकुण्डलया मालतीमाधवयोर्व्यवधानविधानमतीवदुःखकरमिति भावः।

अतएवात्र समाभ्यामप्रस्तुताभ्यां शरच्चन्द्रिकाकुमुदाकराभ्यां प्रस्तुतयोः समयोर्मालतीमाधवयोः प्रतीतिरप्रस्तुतप्रशंसाऽलङ्कारः।

"आकरो निवहे खना"विति हैमः।

मञ्जुभाषिणी वृत्तम् ॥ ४८ ॥

(ल) माधेति। कष्टमस्माकं महद्दुःखमेतत्, यत् त्वम् अतिबीभत्सं अतिगर्हितं तथा स्यात्तथा आपन्नासि आपत्प्राप्तासि मन्ये, त्वमतिगर्हितभावेनैव :स्थितासीत्यर्थः। "जीवति सा कल्याणी" इति सौदामिनीवाक्यं शोकावेगाद्विस्मृत्योक्तिरियम्।

"आपन्न आपत्प्राप्तः स्या"दित्यमरः।

कथमिति। हे कमलमुखि ! पद्मसदृशवदने मालति ! तदा तस्मिन् समये कपालकुण्डलया ग्रस्ता गृहीता त्वं, उत्पातधूमलेखया उत्पातसूचकधूमकेतु-रेखया

(१) कथमपीति पाठान्तरम्।

भगवति कपालकुण्डले ! (व)

निर्म्माणमेव हि तदादरलालनीयं (१)

मा पूतनात्वमुपगाः शिवतातिरेधि (२) ।

नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा

मूर्ध्नि स्थितिर्न चरणैरवताड़नानि (३) ॥५॥

आक्रान्ता आक्रम्रा शशधरस्य चन्द्रस्य कला इव कथमिव अभवः कीदृशी आसीः । अतीवाकुला आसीरिति भावः ।

अत्रोपमाऽलङ्कारः । तथा शशधरस्य कला न केवलं तथाभूताऽभवत्, अपि तु सर्वदैव भवितुमर्हतीति कालभेदात्, तथा त्वमभवः कला तु अभवदिति पुरुषभेदाच्च भग्नप्रक्रमतादोषः, अस्य दृष्टान्तस्तु साहित्यदर्पणेऽनुसन्धेयः । 'तस्मिन् कथमिव भूता' इति पाठे तु तत्समाधानम् । भूतेत्यस्य क्तप्रत्ययान्ततया योग्यताप्रतिपादनेन कालान्तरसम्बन्धसम्भवात् ।

आर्य्या जातिः ॥ ४९ ॥

(व) भगेति । योगमाहात्म्यवत्त्वात् प्रणिपाताभिप्रायाच्च भगवतीति सम्बोधनम्

निर्म्माणमिति, तत् निर्म्माणमेव सा मालतीसम्बन्धिनी सृष्टिरेव सा मालत्येवेत्यर्थः, आदरेण यत्नेन लालनीयं सर्वैरेव परिपालनीयम् । अलौकिकरूप-लावण्यशालित्वादिति भावः । पूतनात्वं तद्विनाशेन राक्षसीत्वं मा उपगाः न प्राप्नुहि, किन्तु

---

(१)...तदा तव लालनीयं इति पाठभेदः ।

(२)...शिवतातिरेव इत्यपि पाठः ।

(३)...न मुसलैरवकुट्टनानि इति क्वचित् पाठः ।

सौदा। वत्स ! अलमावेगेन—

अकरिष्यदसौ पापमतिनिष्करुणैव सा।
नाभविष्यमहं तत्र यदि तत्परिपन्थिनी ॥५१॥

शिवतातिः तत्कल्याणकारिणी एधि भव। तथाहि सुरभिणः सुगन्धशालिनः कुसुमस्य नैसर्गिकी स्वाभाविकी मूर्द्धि स्थितिः मस्तके अवस्थानं, सिद्धा सर्वत्र प्रचलिता, किन्तु चरणैरवताड़नानि पादैरवमर्द्दनानि न सिद्धानीत्यर्थः।

अत्र दृष्टान्तोऽलङ्कारः। तथा प्रथमपादे हिशब्दोपादानस्य वृत्तिपूरणमात्रप्रयोजनकत्वेन निरर्थकत्वदोषः, स तु 'मा स्विष्टिरेव परमादरलालनीया' इति पाठेन समाधेयः। अस्य श्लोकस्य द्वितीयार्द्धम् अविकलमेव उत्तररामचरितप्रथमाङ्केऽपि रामेण पठितम्।

"हरातकी राक्षसी च पूतना" इति त्रिकाण्डशेषः। "शिवतातिः (स्त्री) कल्याणकारिणी इति कल्पद्रुमः।

वसन्ततिलका वृत्तम् ॥ ५० ॥

अकरिष्यदिति। असौ कपालकुण्डला पापं "अवध्याश्च स्त्रियं प्राहुस्तिर्य्यग्योनिगतेष्वपि" इति स्त्रीहत्यानिषेधात् मालतीहत्यारूपं पापकार्य्यं अकरिष्यत्। यतः सा कपालकुण्डला अतिनिष्करुणैव नितान्तनिर्दयैव। तत्र हत्याविषये अहं यदि तस्याः कपालकुण्डलायाः परिपन्थिनी विरोधिनी न अभविष्यम्। तथाच अहमुपस्थाय कपालकुण्डलया क्रियमाणां मालत्या हत्यां न्यवर्त्तयमिति सुस्था सा जीवतीति त्वया न शोकः कर्त्तव्य इति भावः।

अत्र प्रथमचरणवाक्यार्थं प्रति द्वितीयचरणवाक्यार्थो हेतुरिति काव्यलिङ्गमलङ्कारः। तथा "पुरा किल करालायतने" इत्यादावेतदन्ते सन्दर्भे मालतीविषये सातिशयकीर्त्तनात् प्रसङ्गो नाम विमर्षसन्धेरङ्गम्। "प्रसङ्गो गुरुकीर्त्तन"मिति लक्षणात् ॥ ५१ ॥

उभौ। प्रणम्य। अतिप्रसन्नमार्य्यापादैः। तत् कथय, का पुनस्त्वमस्माकमेवंविधो बन्धुः (१)। (अ)

सौदा। आस्थः (२) खल्वेतत्। उत्थाय। इयमिदानीमहं—

गुरुचर्य्या-तपः-तन्त्र-मन्त्र-योगाभियोगजाम्।
इमामाकर्षिणीं (३) सिद्धिमातनोमि शिवाय वः॥५२॥

इति समाधवा निष्क्रान्ता। (ब)

---

(अ) उभाविति। उभौ माधवमकरन्दौ। आर्य्यायास्तव पादैश्चरणैः गौरवाद्बहुवचनम्, अतिप्रसन्नं सातिशयप्रसन्नीभूतं। भावे क्तः। अयाचितेष्टस्महोपकारकरणादिति भावः।

गुर्व्विति। वो युष्माकं शिवाय मङ्गलाय गुरुचर्य्या गुरुशुश्रूषा, तपो जपोपवासादिवैधक्लेशः, तन्त्रं पवनसाधनं प्राणायामः, मन्त्रः कालिकादिमन्त्रः, योगः समाधिः चित्तवृत्तिनिरोधः सबीजो निर्बीजश्च, तेषामभियोगादभ्यासाज्जायत इति तां। इमां आकर्षिणीं तदाख्यां सिद्धिं, आतनोमि आविर्भावयामि।

तपो वैधक्लेश इति प्रायश्चित्ततत्त्वे स्मार्त्ताभिप्रायः। "तन्त्रं पवनसाधन"मित्यनेकार्थध्वनिमञ्जरी। "योगश्चित्तवृत्तिनिरोधः" इति पातञ्जलसूत्रं तस्य सबीजादिभेदस्तु तत्रैव द्रष्टव्यः। आकर्षिणी सिद्धिस्तन्त्रसार-षट्कर्म्मदीपिकादावनुसन्धेया॥ ५२॥

(ब) इतीति। समाधवा माधवमुत्तोल्य गृहीत्वेत्यर्थः। इदन्तु तत्तेजसा चक्षुःप्रतिघातान्मकरन्दो न जानातीति बोध्यम्।

(१) माधवमकरन्दौ।...आर्य्याचरणैः। तत्कथय कथं पुनस्त्वमेवास्माकं बन्धुः। इति पाठभेदः।

(२) आस्थ, इति विसर्गशून्यः पाठः क्वचित्।

(३) आक्षेपणीं इत्यपि पाठः।

मक। आश्चर्य्यमाश्चर्य्यम् (१)।

व्यतिकर इव भीमस्तामसो वैद्युतश्च
क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः।

विलोक्य सभयम्।

कथमिह न वयस्यस्तत् किमेतत् (विचिन्त्य) किमन्यत्
प्रभवति हि महिम्ना स्वेन योगीश्वरीयम् (२) ॥५३॥

व्यतिकर इति। भीमो भयङ्करः, अतएव उपहता प्रतिहता चक्षुर्वृत्तिः रूपग्राहित्वरूपा नेत्रवृत्तिर्येन स तादृशः कश्चित्तेजःपुञ्ज इति शेषः. तमसोऽन्धकारस्यायमिति तामसः, विद्युतस्तडितोऽयमिति वैद्युतः, व्यतिकरो मिश्रीभाव इव, उद्भूय उत्पद्य क्षणं शान्तः तत्क्षणात् विरतो निर्वाणं गतः। विलोक्य पार्श्वे माधवो नास्तीति दृष्ट्वा, 'तत् किं कपालकुण्डलाया एवेयं माया' इत्याशङ्कावशात् सभयमित्यर्थः। इह स्थाने वयस्यो माधवः कथं नास्ति, तत् तस्मात्, एतत् किं कोऽयं व्यापारः। विचिन्त्य विविच्य। अन्यत् किं भवेत्, अपि तु किमपि नेत्यर्थः। हि तथाहि, इयं योगीश्वरी दृष्टपूर्वा कपालकुण्डलाभिन्नैव महायोगिनी, स्वेन स्वकीयेन महिम्ना सिद्धिमाहात्म्येन प्रभवति मालत्यान्तिके माधवमपहरन्त्यात्मनः प्रभावं प्रकाशयति। तथा च यदीयं कपालकुण्डला भवेत्, तदा माधवस्य दुःखं विधातुं तत्स्नेहभागित्वात् मालतीमिव मामप्यपहरेत् किन्तु न केवलं माधवमपहरेत्; सुतरां कपालकुण्डलाभिन्नैव दृष्टपूर्वा महायोगिनी मालत्या सह सम्मेलनार्थमेव माधवमपहृतवतीति भावः।

अत्र प्रथमार्द्धे उपमाऽलङ्कारः। तथा विशेष्यभूतोपमेयवाचकपदानुपादानात्

---

(१) आश्चर्य्यं, इतिमात्रः पाठः क्वचित्।

(२) योगीश्वरीयमिति पाठान्तरम्।

सवितर्कम् । किमयमनर्थ इति सम्प्रति मूढ़ोऽस्मि(१)। अपि च । (म)

अस्तोकविस्मयमपस्मृत-पूर्ववृत्त-(२)
मुद्भूतनूतनभयज्वर-जर्जरं नः ।
एकक्षणत्रुटित सङ्घटित-प्रसाद-
मानन्दशोकशवलत्वमुपैति चेतः (३) ॥५४॥

न्यूनपदत्वदोषः, स च 'मह उपहतचक्षुर्तिकङ्कुय शान्त' इति पाठेन समाधेयः । अका-रान्तः पुंलिङ्गस्तेजोवाची महशब्दः ।

प्रथमचरणमुत्तररामचरितपञ्चमाङ्केऽपि चन्द्रकेतुना पठितम् ।

मालिनी वृत्तम् ॥ ५३ ॥

(म) सवितर्कमिति । अथवा, गुरुणाऽघोरघण्टेन उत्सृष्टत्वात् तत्सङ्कल्पित-वलिदानार्थमेव मालत्यपहरणं, गुरुवधप्रतिशोधार्थं माधवापहरणं, मम तु निरपराधत्वात् परित्याग इत्यतः कपालकुण्डलैवेयमिति वितर्केण सहेति सवितर्कम् । अनर्थः माधवस्य निरुद्देशतारूपा विपत् । इत्यस्मिन् विषये । मूढ़ोऽस्मि निर्णयानर्हत्वादिति भावः । अत्र योगिनीकर्तृकमाधवापहरणमिष्टायानिष्टाय वेति संशयेन पूर्वावधारिततत्पक्षपातित्व रूपविचारस्यान्यथाभावात् विपर्ययो नाम नाट्यलक्षणम् । तथाच दर्पणे—

"विचारस्यान्यथाभावः सन्देहात्तु विपर्ययः ।"

अस्तोकेति । अस्तोकः अनल्पो महान् विस्मयः 'माधवः खल्वयं दृष्टः, अयञ्च नासीत्याश्चर्य्यं यत्र तत् । अपस्मृतं विस्मृतं पूर्ववृत्तं मालतीनिरुद्देशतावृत्तान्तो येन तत ।

(१) मुग्धोऽस्मि, इति भिन्नः पाठः ।

(२)...अविस्मृतपूर्ववृत्तमिति पाठान्तरम् ।

(३) आनन्दशोकशवलं समुपैति चेत इति पाठभेदः

तदत्रैव कान्तारगहने सहास्मद्वर्गेण प्रविष्टां भगवती-मन्विष्य तस्या वृत्तान्तमेनं कथयिष्यामि (१) ।

इति निष्क्रान्ताः (२) । (ह)

मालत्यपहरणापेक्षया माधवापहरणस्य गुरुतरत्वादिति भावः । उद्भूतं उत्पन्नं यत् नूतनभयं माधवानिष्टाशङ्का, तेन यो ज्वरः सन्तापः, तेन जर्जरं जीर्णं व्याकुलमित्यर्थः । तथा एकस्मिन्नेव क्षणे त्रुटितः "जीवति सा कल्याणी" इत्याद्याश्वासवचनेन विनाशितः, तथा सङ्घटितो माधवापहरणेन पुनरुत्पादितः, प्रमोहो मोहो विवेकराहित्यं यस्मिन् तत् तथोक्तम् । नोऽस्माकं ममेत्यर्थः चेतश्चित्तं कर्तृ, आनन्दशोकशबलत्वं हर्षविषादमिश्रितत्वं एति प्राप्नोति । "जीवति सा कल्याणी" इत्यादिवाक्यश्रवणादानन्दः, अकस्मान्माधव-हरणाच्च शोक इति भावः । अथवा अस्मत्पक्षपातिन्या कयाचिद् योगिन्या मालत्या सह मम्मतनार्थमेव माधवो नीत इतिज्ञानोदयादानन्दः, पुनर्मायया कपालकुण्डलयैव गुरुतर- प्रतिशोधार्थमपहृत इति भावनायां शोक इति भावः ।

वसन्ततिलका वृत्तम् ॥ ५८ ॥

(ह) तदिति । तत्तस्मात् । कान्तारगहने दुर्गमारण्ये, अस्मद्वर्गेण लवङ्गिका-दिना प्रविष्टां मालत्यन्वेषणार्थमेवागतां, भगवतीं कामन्दकीं । तस्याः ममापि, एनं माधवनिकटगमनविषयकम् । कथयिष्यामि । येन स्वच्छतिमहायोगिनो सा युक्तं वृत्तान्तमवगम्य कमपि प्रतीकारं कुर्यादिति भावः ।

अत्राश्रयो नाम नाट्यालङ्कारः । "ग्रहणं गुणवत् कार्यहेतोराश्रय उच्यते ।" इति लक्षणात् ।

(१) तदत्र कान्तारावसाने...भगवतीमनुसृत्य...कथयामि । इति भिन्नः पाठः ।

(२) इति निष्क्रान्ताः सर्व्वे, इति क्वचित् पाठः ।

# इति सौदामिनीदर्शनो नाम(१)नवमोऽङ्कः (च)

—:0:—

(च) इतीति । सौदामिन्यास्तदाख्याया योगिन्या दर्शनं साक्षात्कारो यत्र सः । अस्मिन्नङ्के कालिदासकृतविक्रमोर्वशीत्रोटकस्य छाया बाहुल्येन परिलक्षितेति सुधीभिरनुसन्धेयम् ।

इति श्रीहरिदाससिद्धान्तवागीशविरचितायां मालतीमाधवटीकायां भावमनोहरायां नवमाङ्कविवरणं समाप्तम् ।

———

(१) सौदामिनीदर्शनो नाम इति पाठः पुस्तकान्तरे नास्ति ।




# दशमोऽङ्कः।



ततः प्रविशति कामन्दकी मदयन्तिका लवङ्गिका च।

काम। सास्रम्। हा वत्से! मालति! मदङ्कालङ्कारिणि! (२) क्वासि; देहि मे प्रतिवचनम्। (क)

---

(क) क्वासीति। मम अङ्कं क्रोडं अलङ्करोति, उपवेशनेन भूषयति शीलं यस्याः तत्सम्बोधनम्। प्रतिवचनं प्रत्युत्तरम्।

इतः प्रभृति दशमाङ्कसमाप्तिपर्य्यन्तो निर्वहणसन्धिः (उपसंहारसन्धिः)।

तदुक्तं साहित्यदर्पणे—

"बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम्।
एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत्॥"

तथा च प्रथमाङ्कादावुपनिबद्धानामनुरागरूपबीजाद्यर्थानां स्वस्वस्थानविनिवेशितानामत्र मालतीलाभरूपैकप्रयोजनसाधनतया योजनं "यत्प्राणेव" इत्यादिवक्ष्यमाणकामन्दकीवाक्यात्। मालतीलाभ एव कार्य्यं नामार्थप्रकृतिः। यथा तत्रैव

"अपेक्षितन्तु यत् साध्यमारम्भो यन्निबन्धनः।
समापनन्तु यत् सिद्ध्यै तत् कार्य्यमिति सम्मतम्॥"

मकरन्दस्य मदयन्तिकालाभेन सह माधवस्य मालतीलाभस्य फलावस्था। यथा—

"सावस्था फलयोगः स्याद्यः समग्रफलोदयः।"

अत्रापि सन्धिप्रभृतीनि चतुर्दशाङ्गानि यथास्थानं निर्दिश्य लक्षणानि वक्ष्यामः।

(१) सकरुणं सास्रमिति पाठभेदः।

(२) मदङ्कालङ्कारकारिणि! इति पाठान्तरम्

आजन्मन: प्रतिमुहूर्त्त-विशेषरम्या-
ण्याचेष्टितानि तव सम्प्रति तानि तानि ।
चाटूनि चारुमधुराणि च संस्मृतानि
देहं दहन्ति हृदयञ्च विदारयन्ति ॥ १ ॥

अपि च पुत्रि ! (१)

अनियत-रुदितस्मितं विराजत्-
कतिपयकोमल-दन्तकुड्मलाग्रम् ।
वदनकमलकं शिशो: स्मरामि
स्खलदसमञ्जसमुग्धजल्पितं ते ॥ २ ॥

आजन्मन इति । आजन्मनो जन्मप्रभृति, प्रतिमुहूर्त्तं प्रतिक्षणं, विशेषेण अतिशयेन रम्याणि मनोहराणि, तानि तानि पूर्वानुभूतानि, तव आचेष्टितानि अङ्गावलगन-पाणिपल्लवधूनन-मृदुहास्य-धूलिखेलाप्रभृतीनि चरितानि, चारु-मधुराणि सुन्दरस्वादूनि, एतेन तच्चाटूनां पीयूषतुल्यत्वं व्यज्यते, चाटूनि प्रियवाक्यानि च संस्मृतानि सन्ति, देहं दहन्ति हृदयञ्च विदारयन्ति भिन्दन्ति । इदानीं तवाभावाच्छोकानलेन शोकशङ्कुना चेति भाव: ।

अत्र प्रस्तुतानामाचेष्टितचाटूनामेकदहनक्रियायामेकविदारणक्रियायाञ्च कर्तृतयाऽभि-सम्बन्धात्तुल्ययोगिताऽलङ्कारद्वयस्य मिथोनैरपेक्ष्यात् संसृष्टि: ।

वसन्ततिलका वृत्तम् ।

अनियतेति । अनियते अनिर्द्दिष्टे रुदितस्मिते क्रन्दनहास्ये यस्मिन् तत् हेतुं विनैव इदानीमेव रुदत् इदानीमेव च हसदित्यर्थ: । विराजन्ति शोभमानानि, कतिपयकोमल-

(१) (आकाशे) अपि च, पुत्रि ! इति क्वचित् पाठ: ।

इतरं। सासम्। (१) हा पिअसहि! सुप्पसण्णमुहचन्दसुन्दरि! कहिं गदासि। को वा सिरीसकुसुमसुउमारस्स दे म...रस्स

(ख) हा प्रियसखि! सुप्रसन्नमुखचन्द्रसुन्दरि! कस्मिन् गतासि। को वा

...: कुन्दानाग्राणि मुकुलाग्रभागा इव यस्मिन् तत्। स्खलत् सम्पूर्णोच्चारणासामर्थ्या-भावादसम्पूर्णाक्षरम्। तथा असमञ्जसम् अनन्वययथायथवाक्यज्ञानत्वादसम्बद्धं 'मया ...च्छसि, त्वं पिबामि, इत्येवं कर्तृक्रियादीनां व्याकरणानुसारि-योग्यसमाविशेषरहितमित्यर्थः, तथापि मुग्धं सुग्राह्यत्वान्मनोहरं जल्पितं भाषितं यस्मिन् तत् तथोक्तम् शिशोः "दन्त जननं सप्तमे मासि" इति श्रुतेः सप्तममासादिशैशवावस्थायां स्थितायाः ते तव वदन कमलमिव तत् वदनकमलकं पद्मवत् सुन्दरं मुखं स्मरामि। सौन्दर्याति...येन तत मततचित्तावेशादिति भावः।

अत्र यथावद्वस्तुवर्णनात् स्वभावोक्तिरलङ्कारः, तथा कटितस्मितादीनां मुख एव सम्भवेन उपमासाधकत्वात् रूपकस्य च बाधकत्वात् लुप्तोपमाद्वयम्, इत्येतेषामङ्गाङ्गि-भावेन सङ्करः। तथा तृतीयपादे वाक्यसमाप्तावपि तदन्तर्गतस्य "वदनकमलकम्" इत्यस्य विशेषणतया चतुर्थपादोपादानात् समाप्तपुनरात्तत्वादोषः, स च चतुर्थपादे तृतीयस्थाने तृतीयपादस्य चतुर्थस्थाने पठित्वा समाधेयः।

अस्मिन् श्लोके वाच्यार्थवत् शब्दानामपि सौकुमार्यात् पदौचित्यं नाम नाट्यलक्षणम्।

"सदृशोऽर्थानुरूपो यः पदानां स पदोच्चयः।" इति लक्षणात्

"समञ्जसं समाख्यातमभ्यस्तोचितयोरपि।" इत्यजयः।

कटित स्मित जल्पित-पदानि भावे क्त-प्रत्ययान्तानि। वदनकमलकमित्यत्र स्वार्थे कप्रत्ययः।

श्लोकोऽयमुत्तररामचरितचतुर्थाङ्केऽपि जनकेन पठितः। अस्यानुरूपः श्लोको यथा शाकुन्तले—

"आलक्ष्यदन्तमुकुलाननिमित्तहासै-रव्यक्तवर्णरमणीयवचःप्रवृत्तीन्।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो धन्यास्तदङ्गरजसा मलिनीभवन्ति॥"

पुष्पिताग्रा वृत्तम्॥ २॥

(ख) इतरं इति। इतरं मदयन्तिकालवङ्गिके। दैवदुर्विलसितेन विधेर्दुर्व्यवहारेण

(१) मदयन्तिकालवङ्गिके। (मालतीमाकाशे) इति पाठभेदः।

अअं देव्वदुव्विणअपरिणामो एक्किआए उवगदो (१)। महा-भाअ माहव ! उवत्थिदत्थमिदमहूसवो दे जीअलोओ संवुत्तो ।(ख)

काम ! सविशेषखेदम्। हा वत्सौ ! (ग)

अभिनवरागरसोऽयं भवतो: कृतकौतुकः परिष्वङ्गः।
लवलीलवङ्गयोरिव नियतिमहावात्यया निहत: (२) ॥३॥

---

शिरीषकुसुमसुकुमारस्य ते शरीरस्य अयं दैवदुर्विनयपरिणाम एकिकाया उपगत:। महाभाग माधव ! उपस्थितास्तमितमहोत्सवस्ते जीवलोक: संवृत्त:।

परिणाम: अवसानम्। उपगत उपस्थित:। एकिकाया इत्यनेन तया सार्द्धमात्मनोऽपि तदवस्थाप्राप्तिरुचितासीदिति व्यज्यते। उपस्थित एव अस्तमितौ लुप्तौ महोत्सवौ यस्मिन् स:। मालतीलाभादुपस्थितो महोत्सव: पुनस्तत्क्षणादेव तस्य। विलोपात् सोऽस्तमित इति भाव:।

(ग) कामेति। वत्सौ मालतीमाधवौ !।

अभिनवेति। लवली लवलीशाखा ( नोयारि, लोयाइल इति यस्या: प्रसिद्धि: ) लवङ्गतरुश्च, तयोरिव भवतोर्युवयोर्मालतीमाधवयो:, अभिनवो नूतनो रागोऽनुराग एव रसो यस्मिन् स:, तथा कृतं सम्पादितं कौतुकं माल्यपरिवर्त्तनादि कौतूहलं यस्मिन् स:, अयमचिरजात:, परिष्वङ्ग: सम्मेलनं, नियतिर्दैवं महावातेव तया निहतो विनाशित:। अतीवदु:खकारणमेतदिति भाव:।

अत्रोपमाऽलङ्कार:, नियतिमहावात्येत्यत्रापि लुप्तोपमैव न तु रूपकं, पूर्वोपमानुसारादित्यनयोरङ्गाङ्गिभावेन सङ्कर:। तथा प्रथमोपदर्शितानुरागरूपबीजोपस्थिते: सन्धिर्नाम निर्वहणसन्ध्यङ्गम्। "बीजोपगमनं सन्धि"रिति लक्षणात्।

आर्या जाति: ॥ ३ ॥

(१) कोदि सरीरस्स देव्वदुव्विलासपरिणामो एक्काकिणीए उवणदो, इत्यपि पाठ:

(२) अभिहत इति भिन्न: पाठ:।

लव। सोद्वेगम्। हदास ! वज्जमअहिअअ ! सव्वहा णिसंसेसि।

इति हृदयमाहत्य पतति। (घ)

मद। सहि लवङ्गिए ! णं भणामि खणमेत्तं वि दाव समस्सस। (ङ)

लव। सहि। किं करेमि। दिढ़-वज्जलेव-पड़िबद्धणिञ्चलं विअ जीविदं मं ण परिच्चअदि (१)! (च)

(घ) हताश वज्रमयहृदय ! सर्वथा नृशंसमसि।

(ङ) सखि लवङ्गिके ! ननु भणामि, क्षणमात्रमपि समाश्वसिहि।

(च) सखि ! किं करोमि। दृढवज्रलेपप्रतिबद्धनिश्चलमिव जीवितं मां न परित्यजति।

---

(घ) लवेति। नृशंसं क्रूरमसि। येनेदृशदारुणशोकेऽपि न विदीर्य्यसे इति भावः।

(ङ) मदेति। नन्वित्यनुनये। क्षणमात्रमित्यनेनाचिरमरोदनादिकं व्यज्यते। अतएवात्रार्थपत्तिर्नाम नाट्यलक्षणम्। "अर्थापत्तिर्यदन्यार्थोऽर्थान्तरोक्तः प्रतीयते" इति लक्षणात्।

(च) लवेति। दृढेन वज्रलेपेन अतिगाढ़संयोगजनकीभूतलेपविशेषेण प्रतिबद्धमाबद्धं अतएव निश्चलम्। अन्यथा ईदृशशोकताड़नायां सत्यां मामपरित्यज्य स्थातुं न शक्नुयादिति भावः।

(१)···मदअन्तिए !...णिच्चलं मम जीविदं...इति पाठभेदः

काम। वत्से मालति! जन्मनः प्रभृति वल्लभा ते लवङ्गिका। तत् किमिनामुज्जिहान-जीवितां वराकीं नानुकम्पसे! इयं हि (१)। (छ)

उज्ज्वलालोकया स्निग्धा त्वया त्यक्ता न राजते।
मलीमसमुखी वर्त्तिः प्रदीपशिखया यथा॥ ४॥

कथं कल्याणि! कामन्दकीं जहासि। नन्वकरुणे। मदीयचीवराञ्चलेनैव ते प्रगुणीकृतान्यङ्गानि (२)। (ज)

---

(छ) कामेति। उज्जिहानं तव शोकेन गच्छत् जीवितं जीवनं यस्यास्ताम्। वराकीं दीनाम्। इयं लवङ्गिका। उज्जिहानेति "ओहाङ् गतौ" वित्यस्यानशि रूपम्।

उज्ज्वलेति। उज्ज्वल आलोको द्युतिर्यस्यास्तया, प्रदीपशिखया त्यक्ता, अतएव दाहाच्च मलीमसमुखी मलिनाग्रदेशा, स्निग्धा तैलाक्ता वर्त्तिर्दशा, यथा, तथा उज्ज्वलालोकया त्वया त्यक्ता, अतएव शोकाच्च मलीमसमुखी मलिनवदना, स्निग्धा त्वत्प्रेमवती इयं लवङ्गिका न राजते न शोभते।

अत्र श्रौती पूर्णोपमाऽलङ्कारः॥ ४॥

(ज) कथमिति। मदीयचीवराञ्चलेनैव मम कौपीनाञ्चलेनैव, ते तव अङ्गानि प्रगुणीकृतानि पुष्टीकृतानि

अत्र गर्हणं नाम नाट्यलक्षणम्। "दूषणोद्घोषणायान्तु भर्त्सना गर्हणन्तु तत्।" इति लक्षणात्।

* (१)...वल्लभतरा। तत् किमुज्जिहान-जीवितां...इति पाठान्तरम्।

(२) कथं त्वं कल्याणि! कामन्दकीं त्यजसि. नन्वकरुणे! मदीयचीवराञ्चलेनैव ते प्रगुणितान्यङ्गानि इति भिन्नः पाठः।

स्तन्यत्यागात् प्रभृति सुमुखी दन्तपाञ्चालिकेव
क्रीडायोगं तदनु विनयं प्रापिता वर्द्धिता च ।
लोकश्रेष्ठे गुणवति वरे स्थापिता त्वं मयैव
स्नेहो मातुर्मयि समधिकस्तेन युक्तस्तवापि ॥ ५ ॥

सवैक्लव्यम् । हा चन्द्रमुखि ! सम्प्रति निराशास्मि संवृत्ता । (क)

स्तन्येति । हे मालति ! मयैव, न तु त्वत्पित्रादिना इति भावः । स्तन्यत्यागात् प्रभृति मातुः स्तन्यदुग्धपानपरित्यागादवधि, सुमुखी शोभनवदना त्वं, दन्तपाञ्चालिकेव गजदन्तादिनिर्म्मितपुत्तलिकेव क्रीडायोगं बाल्यखेलासम्बन्धं प्रापिता, तदनु ततः परं ततोऽपि किञ्चिद्वयोबाहुल्ये सतीत्यर्थः, विनयं शिल्पकलादिशिक्षां प्रापिता । वर्द्धिता च लालनादिना वृद्धिञ्च नीता । तदनु च लोकश्रेष्ठे सौन्दर्य्यादिगुणादिना सकलजनेभ्य उत्कृष्टे, गुणवति विद्यावीर्य्यादिगुणशालिनि, वरे जामातरि स्थापिता रक्षिता । तेन हेतुना, तवापि मातुरात्मजनन्याः सकाशात् मयि समधिकः अतिरिक्तः, स्नेहो वात्सल्यं युक्त उचितः । सुतरां स त्वया इयन्तं कालं यावत् कृतश्च ; कथमिदानीं तत्स्नेह-गत्या मतो दर्शनं न ददासीति भावः ।

यथा लोकः खल्वामोदानुभवाय गजदन्तादिना काञ्चित् स्त्रीपुत्तलिकां निर्म्माय तस्या बाल्यखेलादिकं विधाय निर्म्मिततादृशपुरुषपुत्तलिकान्तरे तां समर्पयति तद्वदिति सरलार्थः । अतएवात्रोपमाऽलङ्कारः । तथा दर्शनदानरूपार्थसिद्धये तत्कारणीभूत-स्नेहोपन्यासादर्थापत्तिर्नाम नाट्यालङ्कारः । तदुक्तं दर्पणे

"उपपत्तिर्मता हेतोरुपन्यासोऽर्थसिद्धये ।"

"पाञ्चाली शालभञ्जिका" इति हैमः । मन्दाक्रान्ता वृत्तम् ॥५॥

(क) (सवैक्लव्यम्) चन्द्रमुखि ! सम्प्रति निराशास्मि इतिमात्रः पाठः क्वचित् ।

अकारणस्मेरमनोहराननः (१)
शिखाललाटार्पितगौरसर्षपः ।
तवाङ्कशायी परिवृत्तभाग्यया
मया न दृष्टस्तनयः स्तनन्धयः ॥ ६ ॥

लव भअवदि ! पसीद । णीसहह्मि सम्पदं जीवणुव्वहणे ।

(ज) भगवति ! प्रसीद । निःसहास्मि साम्प्रतं जीवनोद्वहने । तदस्याङ्गिरि-

कथं निराशेत्याह अकारणेति । परिवृत्तभाग्यया विपर्यस्ताहृष्टया मया, अकारणं यथा स्यात्तथा दृष्टकारणं विनाऽपि, स्मेरम् ईषद्धास्ययुक्तम् अतएव मनोहरम् आननं यस्य सः । शिखायां ललाटे च अर्पितौ भूतग्रहनिवर्त्तनाय दत्तौ गौरसर्षपौ यस्य सः । स्तनौ धयति पिबतीति स्तनन्धयः स्तनपायी, अङ्कशायी क्रोडवर्त्ती तव तनयः कश्चित् पुत्रो न दृष्टः । मम हि चिरायैव तव पुत्रदर्शनाशासीत्, किन्त्विदानीं तवैवाभावात् तव निराशा स्मीति भावः ।

अत्र तादृशतनयदर्शनाभावं प्रति परिवृत्तभाग्यत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, तथा कारणाभावेऽपि स्मेरत्वकार्य्योदयाद्विभावना च अनयोरङ्गाङ्गिभावेन सङ्करः ।

"सर्षपस्तनधो गौरः सिद्धार्थो भूतनाशनः ।
कटुस्नेहो ग्रहघ्नश्च कण्डुघ्नो राजिकाफलः ॥" इति राजनिर्घण्टः ।

वंशस्थविलं वृत्तम् ॥ ६ ॥

---

(ज) देवीति । प्रसीद मत्प्रार्थनीयस्यानुमत्या आशीर्वादेन च प्रसन्ना भव ।

(१) अकारणक्षेहमनोहराननः । इत्यपि पाठः ।

ता इमादो गिरिसिहरादो अत्ताणं अवधुणिअ णिव्वुदा भविस्सं। तथा मे भअवदो आसिसं करेदु, जेण जम्मन्तरे वि दाव पिअसहीं पेक्खिस्सं (१)। (ञ)

काम। ननु लवङ्गिके! कामन्दक्यापि नातः परं वत्सावियोगेन जीवितव्यम् (२)। समस्तायमुत्कण्ठावेग आवयोः। किन्तु। (ट)

सङ्गमः कर्मणां भेदाद् यदि न स्यान्न नाम सः (३)।
प्राणानान्तु परित्यागे सन्तापोपशमः (४) फलम्॥७॥

---

शिखरादात्मानमवधूय निर्वृता भविष्यामि। तथा मे भगवती आशिषं करोतु, येन जन्मान्तरेऽपि तावत् प्रियसखीं प्रेक्षिष्ये।

---

निःसहा अक्षमा। आत्मानं स्वदेहं, अवधूय पातयित्वा। निर्वृता मरणेन शोकाभावे सति सुस्था। प्रियसखीं मालतीम्।

अत्र मरणकार्य्यान्वेषणादिबोधो नाम सन्ध्यङ्गम्। "विबोधः कार्य्यमार्गण"मिति लक्षणात्। मालतीदर्शनाशाकरणादाशीर्नाम नाट्यालङ्कारश्च। "आशीरिष्टजनाशंसा" इति लक्षणात्।

(ट) कामेति। आवयोः तव मम च। मरण एव युक्तिमभिधातुमाह—किन्त्विति। सङ्गम इति। यदि कर्मणां भेदात् सत्कर्मणां वैषम्यात् परलोके मालत्या सह

(१)...जीविदव्वहणे। साहम् इमादो...।...आसिप्पसादं...। इति पाठभेदः।
(२)...कामन्दक्यपि...जीविष्यतीति पाठान्तरम्।
(३) यदि न स्यान्न नाम नः। इति पाठान्तरम्।
(४) सन्तापोपरम इत्यपि पाठः।

लव। जधा तुह्मे आणवेध । इत्युत्तिष्ठति। (ठ)

काम। मदयं वीक्ष्य। वत्से मदयन्तिके ! । (ड)

मद। किं आणवेध अग्गेसरी होहि (१) त्ति। ता जाव अवहिदह्मि। (ढ)

(ठ) यथा यूयमाज्ञापयथ ।

(ढ) किमाज्ञापयथ अग्रेसरी भवेति। तद् यावदवहितास्मि।

सम्मिलनजनकीभूत-प्रभादृष्टाभावादित्यर्थः, सङ्गमो न स्यात् परलोके मालत्या सहास्माकं सम्मिलनं न भवेत्, तदा स सङ्गमः न नाम भवत्विति शेषः। ततो नास्माकं काचित् क्षतिरिति भावः। तर्हि कथं मरणेच्छा क्रियत इत्याह प्राणानामिति। तु किन्तु, प्राणानां परित्यागे मरणे सति, सन्तापस्य मालत्याः शोकानलसन्तापस्य उपशमः शान्तिः फलं मरणप्रयोजनं भवेदेवेति शेषः। सुतरामिदानीमस्माकं मरणमेव सर्व्वथा श्रेय इति भावः।

अत्र 'परलोके' 'अस्माकं' 'मालत्या सह' इत्यादीनां पदानामभावेऽपि न न्यूनपदत्व-दोषः, विषादमग्नया कामन्दक्या उक्तत्वात्। तत्प्रमाणन्तूक्तम् ॥ ७ ॥

(ड) कामेति। वीक्ष्य। मरणाय गच्छन्तीं लवङ्गिकां दृष्ट्वा। 'वत्से मदयन्तिके ! लवङ्गिकां धारय' इत्यन्तवाक्योच्चारणात् प्रागेव महावेगात् मदयन्तिका प्रवीतेति बोध्यम्।

(ढ) मदेति। अग्रेसरी मरणे अग्रवर्त्तिनी। अवहितास्मि अयं मरणं सावधानास्मि।

"सङ्गमः कर्म्मणां भेदा' दित्याद्येतदन्तसन्दर्भे कर्त्तव्यस्य मरणस्य कथनात् ग्रथनं नाम निर्वहणसन्धेरङ्गम्। "उपन्यासस्तु कार्य्याणां ग्रथन"मिति लक्षणात्।

(१) अग्गेसरी होदु इति क्वचित् पाठः। (२) ता जाव इति क्वचिन्नास्ति।

लव। मद्दि ! पसीद। विरम एत्तो अत्तणो वावादणादो। मा एदं (१) जणं विसुमरेसि। (ग)

मद: सकोपमिव। अवेहि। णह्मि दे वसंवदा। (त)

काम। स्वगतम्। हन्त ! निश्चितं वराक्या। (थ)

मद। स्वगतम्। णाह ! मअरन्द ! णमो दे (२)। (द)

(ग) मदिर ! प्रसीद। विरम एतस्मादात्मनो व्यापादनात्। मा एतं जनं विस्मरसि।

(त) अपेहि। नास्मि ते वशंवदा।

(द) नाथ ! मकरन्द ! नमस्ते।

(ग) लवेति ! एतं जनं मां न विस्मरसि न विस्मर। यद्वा त्वं न म्रियस्व तथात्वे तवापि शोकानुभवावश्यम्भावात्, किन्तु युगपदेव वयं म्रियामह इति भावः।

(त) मदेति। अपेहि दूरं गच्छ। वशंवदा अधीना नास्मि। येन तव वाक्यमनुसरामीति भावः। एतेनाग्र एव मया मर्त्तव्यमिति ध्वनितम्।

(थ) कामेति। वराक्या दीनया मदयन्तिकया, निश्चितं मरणमित्यर्थः। एतेन महायोगिनी त्रिकालज्ञा कामन्दकी सर्वमेव विषयं यथायथं पश्यन्त्यपि आत्मगोपनायैव साधारणवद्व्यवहरतीति बोध्यम्।

(द) मदेति। मकरन्दाय दत्तात्मतया तदन्तिके मरणानुमतियाचनार्थं मरणकाले स्मरणात् जन्मान्तरेऽपि तल्लाभार्थश्च नमस्कार इति बोध्यम्।

(१) माश्च एणं इति पाठोऽपि।

(२) णमो दे णमो इति भिन्नः पाठः।

लव। भअवदि। अअं ज्जेव्व महुमदीसोत्तसन्दाणिदपवित्तमेहलो महीहरविड़ङ्को (ध)

काम। कृतमिदानीं प्रस्तुतान्तरायेण। (न)

सर्वाः। पतितुमिच्छन्ति।

नेपथ्ये। आश्चर्य्यमाश्चर्य्यम् (१)। (प)

व्यतिकर इव भीमस्तामसो वैद्युतश्च
क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः।

(ध) भगवति! अयमेव मधुमतीस्रोतःसन्दानितपवित्रमेखलो महीधरविटङ्कः

(ध) लवेति। मधुमत्यास्तदाख्याया नद्याः स्रोतसा सन्दानिता बद्धा संसृष्टा, पवित्रा मेखला नितम्बदेशो यस्य सः महीधरस्य पर्व्वतस्य विटङ्कं कपोत-पालिका (पायरार खोप इति यस्य प्रसिद्धिः)। उच्चदेश इत्यर्थः। अस्मादेव पताम इति भावः।

(न) कामेति। प्रस्तुतस्य प्रकृतस्य मरणस्य अन्तरायेण विघ्नाचरणेन, कृतं अलं। इदानीमितः पतित्वा सर्वा एव वयं म्रियामहे इति भावः।

अत्र विसर्पो नाम नाट्यालङ्कारः। 'विसर्पो यत् समारब्धं कर्म्मानिष्टफलप्रदम्।" इति लक्षणात्।

(प) नेपथ्ये इति। अकस्मादुपस्थितं तेजोमण्डलं तन्निर्वाणञ्चावलोक्य नेपथ्ये कश्चिद्वदतीत्यर्थः।

---

(१) क्वचित् द्विरुक्तिर्नास्ति।

कामः विलोक्य साद्भुतहर्षम् । (फ)

कथमिह मम वत्स स्तत् किमेतत्—

प्रविश्य मकरन्दः । ... ... ... किमन्यत्,

प्रभवति हि महिम्ना स्वेन योगीश्वरीयम् (१) ॥८॥

नेपथ्ये कथमतिदारुणो जनसम्मर्द्दो वर्त्तते (२)। (ब)

मालत्यपायमधिगम्य विरक्तचेताः

सांसारिकेषु विषयेषु च जीविते च (३)।

---

(प) कामेति। विलोक्य आगच्छन्तं मकरन्दम् अकस्मादुपस्थिततिरोभूतं तेजोमण्डलञ्च दृष्ट्वा।

कथमिति। इह अस्मिन् स्थाने, मम वत्सो मकरन्दः, कथं, दुर्गमत्वात् केन प्रकारेणागतः। तदेतत् दृष्टं तेजोमण्डलञ्च किं कुत आगतम्। सहसा प्रविश्य मकरन्दः, 'तत्किमेत'दितिमात्रमुक्त-कामन्दकीप्रश्नस्योत्तरमाह किमन्यदिति।

अन्यत पुनः किं किमपि नेत्यर्थः। इयं हि काचिद्योगीश्वरी स्वेन महिम्ना प्रभवति। तदीयमिदं तेजोमण्डलमिति भावः। सौदामिन्यास्तेजोमण्डलस्य परिचितपूर्व्वत्वादयं मकरन्दस्य निर्णय इति बोध्यम्। अतएवात्र निर्णयो नाम निर्वहणसन्ध्यङ्गम्।

...निर्णयः पुनः। अनुभूतार्थकथनं...।" इति दर्पणलक्षणात्। मालतीमाधवौ समादायागच्छन्त्याः सौदामिन्यास्तेजोमण्डलमिति दूरतो मालतीमाधवावागच्छन्तौ विलोक्य सर्व्वा एव पतनाद्विरता इति च प्रत्येतव्यम् ॥ ८ ॥

(ब) नेपथ्य इति। नेपथ्ये कश्चिद्वनेचरो वदतीति परवर्त्तिमाधववाक्यादवगन्तव्यं विषादे कथंशब्दः। जनसम्मर्द्दः दर्शनार्थागतलोकसङ्घर्षः।

(१)...योगीश्वरीयमित्यपि पाठः। (२)...जनावमर्द्दं सम्प्रवर्त्तते इति पाठभेदः।

(३) जीवितेषु, इति क्वचित् पाठः।

निश्चित्य वह्निपतनाय सुवर्णविन्दु-
मभ्येति भूरिवसुरित्यधुना हताः स्मः ॥९॥

मदयन्तिकालवङ्गिके । झत्ति मालदीमाहवाणं दंसणमहूसवो. (१) झत्ति अच्चाहिदं अ । (भ)

कामन्दकीमकरन्दौ : दिष्ट्या । कष्टं भोः ! । आश्चर्य्यम् (२) । (म)

(भ) झटिति मालतीमाधवयोर्दर्शनमहोत्सवः, झटिति अत्याहितञ्च ।

मालत्यपायमिति । भूरिवसुर्मालत्याः पिता, मालत्या अपायं विनाशम् अधिगम्य ज्ञात्वा सांसारिकेषु विषयेषु आयव्ययादिषु च जीविते आत्मजीवने च विरक्तचेता निवृत्तचित्तः सन्, वह्निपतनाय मरणार्थमग्नौ प्रवेशाय निश्चित्य, सुवर्णविन्दुं महाकाल-कालप्रियनाथापरपर्यायं महादेवं, महातीर्थत्वात्तदायतनमित्यर्थः, अभ्येति आगच्छति इति हेतोरधुना वयं हताः स्मः । प्रतिपालकभूरिवसोरपि वियोगादिति भावः ।

वसन्ततिलका वृत्तम् ॥ ९ ॥

(भ) मदेति । झटिति हठात् । अत्याहितं महाभीतिः । भूरिवसोर्वह्निपतनोद्यमेनेति भावः । दूरादागच्छन्तौ मालतीमाधवौ विलोक्य 'मालत्यपाय'मित्यादि वाक्यञ्च श्रुत्वा किलोक्तिरियम् ।

(म) कामेति । दिष्ट्या भाग्येन पुनर्मालतीमाधवयोर्दर्शनम् । कष्टं भूरिवसोर्वह्निपतनोद्यमश्रवणात् । आश्चर्य्यं तयोरभावनीययोर्युगपदुपस्थितेरिति च भावः ।

(१) दंसणब्भुदओ इति पाठभेदः ।

(२) (सहर्षं) हा धिक कष्टमाश्चर्य्यमाश्चर्य्यम् इति पाठान्तरम् ।

किमयममसिपत्र-चन्दनरसच्छटासार-युगपदवपातः ।
अनलस्फुलिङ्गकलितः किमयमनभ्रः सुधावर्षः ॥१०॥
सञ्जीवनौषधि-विषव्यतिकरमालोकतिमिरसम्भेदम् ।
अद्य विधिरशनिशशधरमयूखसंवलनमनुकुरुते ॥११॥

किमिति । अयं भूरिवसोर्वह्निपतनश्रवणेन सह मालतीमाधवदर्शनमहोत्सवः, असयः कृपाणा इव पत्राणि सुधारत्वात्, अथवा असय एव पत्राणि इत्यसिपत्राणि, तथा चन्दनरसच्छटा चन्दनद्रवसमूहश्च, तेषामासारो धारावृष्टिः, तस्य युगपदेकदा अवपातः पतनं किम् । तथा अयम्, अनलस्फुलिङ्गकलितः वह्निकणसंयुतः, अनभ्रः मेघरहितः, सुधावर्षः अमृतवृष्टिः किं भवति । तथा च यथा असिपत्रचन्दनरसयोर्युगपदवपाते युगपदेव वेदना सुखञ्चानुभूयते तथा भूरिवसुवह्निपतनश्रवणमालतीमाधवदर्शनयोः युगपदुपस्थितत्वात् युगपदेव वेदना सुखञ्चानुभूयते । यथा वा वह्निकणमिश्रसुधावृष्टौ युगपदेव देहदाहशैत्ययोरनुभवः, तथा भूरिवसुवह्निपतनश्रवणमालतीमाधवदर्शनयोर्योगपद्येऽपि युगपदेव मनःसन्तापसुखयोरनुभवो जात इति सरलार्थो भावार्थश्च ।

अत्रोपमेये उपमानसंशयात् "किं तारुण्यतरोरिय" मित्यादिदर्पणोदाहृतवत् ससन्देहोऽलङ्कारः । संशयो नाम नाट्यलक्षणञ्च ।

"संशयो ज्ञाततत्त्वस्य वाक्यं स्याद् यदनिश्चयः ।" इति लक्षणात् । केचित् किंशब्दस्यानर्थप्रश्नावाचकतामङ्गीकृत्य क्रियोत्प्रेक्षामाहुः ॥ १० ॥

सञ्जीवनौषधीति । विधिर्विधाता अस्माकं दैवं वा, अद्य, भूरिवसोर्वह्निपतनश्रवणं मालतीमाधवयोर्दर्शनञ्च युगपदेव सङ्घटयन्नित्यर्थः, सञ्जीवनौषधिविषयोर्व्यतिकरं संयोगम्, आलोकतिमिरयोः दीप्तान्धकारयोः सम्भेदं सम्मेलनं, तथा अशनि शशधरमयूखयोः वज्र-चन्द्रकिरणयोः संवलनं सम्मिश्रणम् अनुकुरुते उपमास्थलं करोतीव । भूरिवसुवह्निपतनश्रवणमालतीमाधवदर्शनयोरपि सञ्जीवनौषधिविषव्यतिकरादिवत् युगपदेव सुख-दुःखोभयजनकत्वादिति भावः ।

नेपथ्ये। हा ताद! विरम, दंसणूसुअह्मि दे वअणकमलस्स, पसीद, सम्भावेहि मं। कहं मम कारणादो समत्थलोआलोआन्तराल-विक्खाद णिम्मल-कुलेक्क-मङ्गल-पदीवभूदं अत्ताणअं परिच्चअसि। मए उण अणज्जाए णिरणुक्कोसा तुह्मे त्ति सम्भाविदं आसि (१)। (य)

(य) हा तात! विरम, दर्शनोत्सुकास्मि ते वदनकमलस्य, प्रसीद सम्भावय माम्। कथं मम कारणात् समस्तलोकालोकान्तराल-विख्यात-निर्म्मल-कुलैक-मङ्गल-प्रदीपभूतमात्मानं परित्यजसि। मया पुनरनार्य्यया निरनुक्रोशा यूयमिति सम्भावितमासीत्।

अत्र प्रतीयमाना क्रियोत्प्रेचाऽलङ्कारः। अभिप्रायो नाम नाट्यलक्षणञ्च।
"अभिप्रायस्तु सादृश्यादद्भुतार्थस्य कल्पना।" इति लक्षणात्।
अनयोरार्य्या जातिः।

(य) नेपथ्य इति। विरम वह्निपतनोद्यमादिति शेषः। सम्भावय दर्शनदानेनानुगृहाण। समस्तं सकलं यत् लोकालोकस्य पृथिवीप्राचीरभूतस्य लोकालोकपर्वतस्य अन्तरालं मध्यदेशः, तत्र विख्यातम् उत्कृष्टतया प्रथितं निर्म्मलं निर्दोषं यत् कुलं वंशः, तस्य मङ्गलप्रदीपभूतं मङ्गलदीपतुल्यम्, आत्मानं स्वदेहम्। अनार्य्यया अशिक्षितया वुद्धिगन्यया, यूयं निरनुक्रोशाः ममान्वेषणाभावात् निर्दया इतीत्थं सम्भावितं मनसा स्थिरीकृतं आसीत्। इदानीन्तु मम शोकेनैव तव प्राणत्यागोद्यमश्रवणात् मां प्रति त्वत्तुल्यो दयावान् कश्चिदपि नास्तीति सम्भाव्यत इति भावः।

(१) ...ऊसुअम्हि।...अन्तरालविक्कम...। अलज्जाए णिरणुक्कोसाए तुह्मं परिअत्ता इति भिन्नः पाठः।

काम। **हा वत्से मालति! (१)।**

**जन्मान्तरादिव पुनः कथमपि लप्स्यामि यावदयमपरः (२)।**

**उपराग इव शशिकलां कवलयितुमुपस्थितोऽनर्थः॥१२॥**

दूत (३)। **हा पियसहि!। (ग)**

ततः प्रविशति प्रमुग्धां मालतीं धारयन् माधवः। (ल)

माध। **कष्टं भोः कष्टम्।**

(ग) हा प्रियसखि!।

अत्रानार्थ्यत्यनेनात्मनः परिवादकरणात् परिभाषणं नाम निर्वहणसन्ध्यङ्गम्।
"परिवादकृतं वाक्यं वदन्ति परिभाषण" मिति लक्षणात्। तथा समसत्यादिना वह्निपतननिवारणरूपार्थसाधनात् प्रसिद्धिर्नाम नाट्यलक्षणञ्च।

"प्रसिद्धिर्लोकसिद्धार्थैरुत्कृष्टैरर्थसाधन" मिति लक्षणात्।

जन्मेति। हे वत्से मालति! त्वं जन्मान्तरादिव पुनर्लाभे असम्भाव्यमानत्वात् लोकान्तरादिव कथमप्यतिकष्टेन यावत् पुनर्लप्स्यामि, तावदेव अयमपरः अनर्थः त्वत्पितुर्भूविरसौ: वह्निपतनोद्यमरूपा विपत्, उपरागो राहुः शशिकलामिव त्वां कवलयितुं ग्रसितुम् उपस्थितः। किमिदानीं करणीयमिति भावः।

अत्रोपमाऽलङ्कार उत्प्रेक्षयाङ्गभूतया सङ्कीर्य्यते।

"उपरागो राहुग्रस्तार्कचन्द्रयोः। विरागे दुर्नये राहा"विति हैमः।

आर्य्या जातिः॥ १२॥

(ल) तत इति। प्रमुग्धां भूविरसौ वह्निपतनोद्यमश्रवणात् तच्छोकेन मूर्च्छिताम्।

(१) क्वचित् मालतीति पाठो नास्ति।

(२) भोस! यावदयं इत्यपि पाठः।

(३) लवङ्गिका इति पाठान्तरम्।

एषा प्रवासं कथमप्यतीत्य
याता पुनः संशयमन्यथैव।
को नाम पाकाभिमुखस्य जन्तो-(१)
र्द्वाराणि दैवस्य पिधातुमीष्टे ॥ १३ ॥

मक। (२) सखे! अथ क्व सा योगिनी?

माध। श्रीपर्वतादिहाहं सत्वरमपतं तयैव सह सद्यः।
करुणवनेचरवचनादन्तरितां (३) तां न पश्यामि ॥१४॥

---

एषेति। एषा मालती कथमप्यतिकष्टेन प्रवासं देशान्तरावस्थानदुःखं कपाल-कुण्डलाक्रान्ततया जीवनसंशयमित्यर्थः, अतीत्य सौदामिन्याः कृपया अतिक्रम्य अन्यथैव अन्यप्रकारेणैव पितृशोकेनैव संशयं जीवनमरणयोः सन्देहं याता प्राप्ता। तथाहि को नाम जनः, जन्तोः प्राणिनः पाकाभिमुखस्य परिणामोन्मुखस्य फलोत्पादनप्रवृत्तस्य, दैवस्य नियतेः, द्वाराणि प्रसरणमार्गान् पिधातुं आच्छादयितुं अवरोद्धुं ईष्टे प्रभवति शक्नोति, अपि तु कोऽपि नेत्यर्थः तथा च दैववशादेवेयं दशा समुपस्थितेति नास्ति प्रतीकारोपाय इति भावः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, स चार्थापत्त्या सङ्कीर्य्यते।

फलोत्पादनप्रवृत्तेः पूर्वमवगतस्य दुर्दैवस्य स्वस्त्ययनादिना शान्तिरपि विधातुं शक्यते, फलतोत्पादनप्रवृत्तस्य तु कथमपि नेति प्रतिपादनार्थं पाकाभिमुखस्येत्युक्तम्।

अस्य द्वितीयार्द्धमुत्तररामचरितसप्तमाङ्केऽपि भागीरथ्या पठितम्।

इन्द्रवज्रा वृत्तम् ॥ १३ ॥

श्रीपर्वतादिति। अहं तया योगिन्यैव सह श्रीपर्वतात् इह अस्मिन् स्थाने

(१) जन्तुरिति प्रथमान्तः पाठः क्वचित्।

(२) सहसोपसृत्य माधवं प्रति, इत्यधिकः पाठः।

(३) अनन्तरं इति पाठान्तरम्।

कामन्दकीमकरन्दौ। महाभागे! पुनः परित्रायस्व नः (१)। किमर्थमन्तर्हितासि।

मदयन्तिकालवङ्गिके। सहि! मालदि! णं भणामि सहि! (२) मालदि त्ति। सोत्कण्ठम् (३)। भअवदि! परित्ताहि। चिरणिरुद्धणिस्सासणिच्चलं (४) से हिअअं। हा अमच्च! हा पिअसहि! तुम्हे दुवे वि परप्पराअवसाणस्स कारणं जादा। (ल)

(ल) सखि! मालति! ननु भणामि सखि! मालतीति। भगवति! परित्रायस्व। चिरनिरुद्धनिःश्वासनिश्चलमस्या हृदयम्। हा अमात्य! हा प्रियसखि! द्वावपि युवां परस्परावसानस्य कारणं जातौ।

सत्वरम् अपतम् आगच्छम्। इतो मध्ये करुणं सशोकं यत् वनेचरस्य वचनं "मालत्या पाश्मधिगम्य" इत्यादि कस्यचित् वनचारिणो जनस्य वाक्यं, तस्मात् तच्छ्रवणात् हेतोः सद्यस्तच्छ्रवणात् अन्तरितामन्तर्हितां तां योगिनीं न पश्यामि। आश्चर्यमेतदिति भावः।

अत्र यतोऽन्तरिता अतस्तां न पश्यामीति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। तथा परांङ्कान्वितस्य सद्य इत्येकपदस्य पूर्वार्द्धे पाठादङ्कान्तैकपदतादोषः, स च, सद्य इत्यस्योपादानावश्यकताऽभावात्तत्र 'वयस्य!' इति सम्बोधनान्तपाठेनैव समाधेयः।

आर्या जातिः॥ १४॥

(ल) सहीति। मालती सचैतन्या नवेति ज्ञानाय नन्वित्यादिवाक्यमापृच्छक-

(१) (सप्रणयमाकाशे) महाभागे! पुनस्त्रायस्व...। इति पाठान्तरम्।

(२) क्वचित् 'सहि' इति पुनः पाठो नास्ति।

(३) सोत्कम्पम्। इत्यपि पाठः।

(४) ...णिस्फुरं इति पाठभेदः।

काम। हा वत्से मालति !।

माध। हा प्रिये !।

मक। हा, प्रियसखि !।

सर्वे। मोहमुपगम्य पुनः संज्ञां लभन्ते।

काम। ऊर्द्ध्वमवलोक्य। तत् किमेष पाठ्यमानादिवाम्बुदादम्बु-निवहः परिस्खलन्नस्मान् प्रीणयति (१)। (व)

माध। सोच्छासम्। अये ! प्रत्यापन्नचेतना (२) मालती। तथाह्यस्याः:

भवति विततश्वासा नासा प्रणुन्नपयोधरं (३)
हृदयमपि च स्निग्धं चक्षुर्निजप्रकृतौ स्थितम्।

दीर्घस्वरेण पुनरुच्चारितमिति बोध्यम्। चिरं निरुद्धो मोहेन बहुकालमवरुद्धो निश्वास-स्तेन निश्चलं निस्पन्दम्। परस्परावसानस्य अन्योन्यमरणस्य। मालत्याः शोकेन भूरिवसोर्वक्षिप्तमोद्यमात्, तच्छोकेन च मालत्या मोहप्राप्तेरिति भावः। कारणमित्यस्य विधेयत्वेन प्राधान्यात् क्लीवैकत्वप्रसक्तावपि "उद्देश्यविधेययोरुद्देश्यवचनत्वमाख्यातस्ये"ति न्यायादुद्देश्यतया युवामित्यनुसारादेव जाताविव्यत द्वित्वं पुंस्त्वञ्च। अत्राख्यातस्य प्रधान-क्रियाया इत्यर्थः।

(व) कामेति। पाठ्यमानात् केनचिद्विदार्यमाणात्। अम्बुदात् मेघात्। एतेन मेघजलेनेव सर्वेषां संज्ञालाभ इति बोध्यम्।

भवतीति। नासा नासिका, वितते तिरोधानान्तरत्वात् विस्तृतभावेन वहन् श्वासो यस्यां सा तादृशी भाति। हृदयं वक्षोऽपि, प्रणुन्नौ श्वासप्रश्वासाभ्यां स्पन्दितौ

(१)...परिस्खलन्...इति भिन्नः पाठः।

(२) प्रत्यापन्नचेतनेव, इति क्वचित् पाठः। (३) प्रसन्नपयोधरम्, इति पाठान्तरम्।

तदनु वदनं मूर्च्छाच्छेदात् प्रसादि विराजते ।
परिगतमिव प्रारम्भेऽह्नः श्रिया सरसोरुहम् ॥ १५ ॥

नेपथ्ये अविगणय्य नृपं सहनन्दनं
चरणयोर्नतमग्निचये (१) पतन् ।

पयोधरो स्तनो यस्मिन् तत्तथोक्तं भवति ; चक्षुश्च स्निग्धं सत् निजप्रकृतौ स्वकीय-स्वभावे स्थितं । मूर्च्छाकाले तु रूक्षमासीदिति भावः । तदनु ततः परं, वदनं मुख कमलं, मूर्च्छाच्छेदात् मोहापगमाद्धेतोः, अह्नः प्रारम्भे दिवसोत्पत्तौ प्रातःकाले, श्रिया स्वाभाविकशोभया परिगतं परिव्याप्तं सरसोरुहं पद्ममिव प्रसादि प्रसन्नं मोहमालिन्यापगमेन निर्म्मलं सत् विराजते शोभते । एभिर्लिङ्गैः प्रत्यापन्नचेतनेत्यनुमीयत इति भावः ।

अत्र भवतीत्येकक्रियया प्रस्तुतानां नामादीनां कर्त्तृतयाभिसम्बन्धात्तुल्ययोगिता, तथा प्रत्यापन्नचेतनत्वानुमानकार्य्यं प्रति बहुतरकारणापत्यासात् समुच्चयः, तदुभयकृत विच्छित्तिवशात् 'मालती प्रत्यापन्नचेतना विततश्वासकृतनासादिमत्त्वात्' इति ज्ञानादनु-मानालङ्कारः । तथा प्रकृतिशब्देनैव स्वभावाभिधानात् निजपदमधिकमित्यधिकपदता-दोषः, स च 'चक्षुः पुनः प्रकृतौ स्थितं'मिति पाठेन समाधेयः तथा प्राप्तचैतन्यस्य स्थिरीकरणात् कृतिर्नाम सन्ध्यङ्गम् :

"लब्धार्थशमनं कृति"रिति लक्षणात् ॥

दृष्टान्तो नाम नाट्यलक्षणञ्च । तदुक्तं दर्पणे—

"दृष्टान्तो यस्तु पक्षार्थसाधनाय निदर्शनम् ।"

हरिणी वृत्तम् ॥ १५ ॥

अविगणय्येति । भूरिवसुः, चरणयोर्नतं वह्निप्रवेशनिवारणाय पादयोः पतितं नन्दनेन तदाख्येन नर्म्मसुहृदा सहेति सहनन्दनं नृपं राजानं अविगणय्य शोकावेगा-

(१) अग्निमुखे, इति पाठभेदः ।

झपदि भूरिवसुर्विनिवर्त्तितो
मम गिरा गुरुसम्मदविस्मयः ॥ १६

माधवमकरन्दौ : ऊर्द्धमवलोक्य सविस्मयम् (१)। भगवति ! दिष्ट्या वर्द्धसे। (ग)

सा योगिन्यम्बरतो विघटितजलदाऽभ्युपैत्ययं यस्याः (२)।
वागमृतजलासारो जलदजलासारमतिशेते ॥ १७ ॥

दवज्वाय तयोरननयवचनमगृहीत्यर्थः, अग्निचर्यां वह्निरार्गौ पतन् प्रविशन् सन् झपदि तत्क्षणात् मम गिरा 'वह्निप्रवेशं मा कुरु, जीवति ते मालती, सुस्था च मया-नीता' इत्येवं मम वचनेन, गुरु महान्तौ सम्मदविस्मयौ आनन्दाश्चर्ये यस्य स तथाभूतः सन् विनिवर्त्तितो वह्निपतनान्निवारितः। इत्यतो यूयमप्याश्वसितेति भावः। नेपथ्यात् सौदामिन्या उक्तिरियम्।

अत्र मम गिरेति साहङ्कारोक्तं गर्वोनाम नाट्यालङ्कारः। "गर्वोऽवलेपजं वाक्य"-मिति लक्षणात्।

द्रुतविलम्बितं वृत्तम् ॥ १६ ॥

(ग) माधवेति। भगवतीति कामन्दक्याः सम्बोधनम्।

सेति। सा आवयो रक्षाकर्त्री योगिनी, विघटितजलदा अपसारितमेघा सती, अम्बरत आकाशात् अभ्युपैति अस्माकमन्तिकमागच्छति। यस्या योगिन्याः, अयं इदानी-मेव श्रुतः, वागमृतजलासारः अविगणय्येत्यादिवचनामृतरसधारासम्पातः जलदजलासारं मेघजलधारासम्पातं अतिशेते उपकारविषये अतिक्रामति। तेनैव सर्वेषामेवास्माकमा-श्वासनादिति भावः।

(१) क्वचित् 'ऊर्द्धमवलोक्य सविस्मयम्' इति पाठो नास्ति।

(२) सा योगिनीयमतिरयविघटितजलदाऽभ्युपैति नौ यस्याः। इति क्वचित् पाठः।

कामन्द — प्रियं नः प्रियम् (१)। (ष)

मालती — दिट्ठिआ चिरस्स पच्चुज्जीविदह्मि (२)। (स)

कामन्द — महर्षिवाक्यम्। एह्येहि पुत्रि!।

(स — दिष्ट्या चिरस्य प्रत्युज्जीवितास्मि।)

---

अत्रातिशयेन इत्यनेनोपमानादुपमेयस्याधिक्यवर्णनात् व्यतिरेकालङ्कारः, स च वागमृतजलमिति निरङ्गकेवलरूपकेण सङ्कीर्णः। तथा जलदशब्दस्य जलनामार्थशब्दस्य च द्विरुक्तत्वे पुनरुक्तत्वदोषद्वयम्।

'सा योगिन्यम्बरतो विघटितमेघाभ्युपेताग्रे यस्याः।
वागमृतरसासारो जलदजलधारामतिशेते॥'

इति पाठान्तरे समाधानम्। तच्छन्देन पूर्वानुभूतोपस्थापनात् परवर्तियच्छब्दस्य चोत्तरवाक्यगतत्वेन तच्छब्दानपेक्षणात् न वाक्यगतविधेयाविमर्शदोषः। अग्रे यस्या इति पदद्वयान्वितस्य पूर्वार्द्धे पाठादपि नार्द्धान्तरैकपदतादोषः, तादृगेकपदपाठ एव तद्दोषाङ्गीकारात्। अत्र उपगूहनं नाम निर्वहणसन्ध्यङ्गम्। तदुक्तं दर्पणे—

"...तद्भवेदुपगूहनम्। यत् स्यादद्भुतसम्प्राप्तिः...।"

आर्या जातिः॥ १७॥

(ष) कामेति। प्रियं भूरिवसोर्वह्निपतनान्निवर्त्तनमित्यर्थः। प्रीतिरतिशये द्विरुक्तिः।

(स) मालतीति। चिरस्य बहुकालात् परं। आत्मनः परित्राणेन पितुश्च जीवनलाभेन सर्वदुःखस्यैवापगमादिति भावः। तेनात्र समयो नाम निर्वहणसन्ध्यङ्गम्।

---

(१) क्वचित् प्रियं प्रियमिति द्विरुक्तिर्नास्ति।

(२) पच्चुज्जीविदह्मि इति पाठान्तरम्।

माल। कथं (१) भअवदो। इति पादयोः पतति। (ह)

काम। उत्थाप्यालिङ्ग्य मूर्ध्नि उपाघ्राय।

जीव, जीवितसमाय जीवितं
देहि, जीवतु सुहृज्जनश्च ते।
अङ्ककैस्तुहिनसङ्गशीतलैः
पुत्रि! मां प्रियसखीञ्च जीवय ॥१८॥

---

(ह) कथं भगवती।

"समयो दुःखनिर्याण"मिति दर्पणलक्षणात्।

(ह) मालीति। अत्र हर्षे कथंशब्दः।

जीवेति। हे पुत्रि! आत्मजारूपे मालति! त्वं स्वयं जीव। तेन च जीवितसमाय प्राणतुल्याय प्रियतमाय माधवाय जीवितं जीवनं देहि। तथा ते तव सुहृज्जनो बान्धवजनः पित्रादिश्च जीवतु। तव जीवननाशशङ्कया एते खल्वेतावन्तं कालं यावन्मृतप्राया एवासन्, इदानीन्तु तव जीवनात् सर्व एवैते जीविता इव जाता इति भावः। एतेन त्वयि सर्वेषामेव स्नेहस्य परा काष्ठा विद्यत इति वस्तुना वस्तुध्वनिः। तथा तुहिनसङ्गशीतलैः हिमसंसर्गेणेव शीतलीभूतैः अङ्ककैर्देहावयवैः मां प्रियसखीं लवङ्गिकाञ्च जीवय आलिङ्गनेन समुच्छ्वासय।

अत्र जीवितसमायेत्यार्थीयमुपमाऽलङ्कारः। तथा जीवितशब्दस्य द्विरुक्ततया पुनरुक्ततादोषः, स तु जीवितमित्यत्र जीवनमिति पाठेनैव समाधेयः। 'कथं भअवदो' इत्याद्येतदन्ते सन्दर्भे प्रसादो नाम निर्वहणसन्धेरङ्गम्। तथाचोक्तं—

'शुश्रूषादिः प्रसादः स्यात्।"

रथोद्धता वृत्तम् ॥ १८ ॥

(१) हा कहं इत्यपि पाठः

भाध। वयस्य! मकरन्द! सम्प्रत्युपादेयो माधवस्य (१) जीवलोकः संवृत्तः। (च)

मक। सहर्षम्। एवमेवैतत् (२)

मदयन्तिकालवङ्गिके (३)। पिअसहि! मणोरहादिक्कन्तदंसणे! सम्भावेहि अम्हे परिस्सङ्गेण। (क)

माल। हा पिअसहिओ!। इत्युभे आलिङ्गति (४)। (ख)

काम। वत्सौ! किमेतत्?। (ग)

---

(क) प्रियसखि! मनोरथातिक्रान्तदर्शने! सम्भावयास्मान् परिष्वङ्गेन।

(ख) हा प्रियसख्यौ!।

---

(च) माधेति। उपादेयः परमरमणीयः। प्राणप्रियायाः मालत्याः समुपस्थितत्वात् विपन्निवृत्तेरिति भावः। अत्र प्रहर्षो नाम नाट्यालङ्कारः। तथा च दर्पणे —

"प्रहर्षः प्रमदाधिक्यम्।"

(क) मदेति। मनोरथमपि अतिक्रान्तं दर्शनं यस्यास्तत्सम्बोधनम्। त्वमीदृशमदर्शनं गतासि यथा तव पुनर्दर्शनेच्छापि कर्तुमसम्भावितासीदित्यर्थः। मृत्योरेव निश्चितत्वादिति भावः। परिष्वङ्गेन आलिङ्गनेन। सम्भावय समुत्कामय। अत्रालिङ्गने मालत्या योजनात् प्रोत्साहनं नाम नाट्यालङ्कारः। तदुक्तं दर्पणे—

"प्रोत्साहनं स्यादुत्साहगिरा कस्यापि योजनम्।"

(ख) मालेति। उभे मदयन्तिकालवङ्गिके।

(ग) कामेति। वत्सौ! माधवमकरन्दौ! एतत् मालत्या अदर्शनं पुन-

---

(१) क्वचित् 'माधवस्य' इति पाठो नास्ति। (२) एवमेतत्, इति पाठभेदः।
(३) इतरे इति क्वचित् पाठः। (४) उभे आलिङ्गतः, इति पाठान्तरम्।

माधवमकरन्दौ । भगवति !

कपालकुण्डलाकोप-दुर्जातजनितापदः ।
वयमभ्यद्धृताः (१) कृच्छ्रान्निबन्धेनार्य्ययानया ॥ १९ ॥

काम । कथमघोरघण्टवधविजृम्भितमेतत् (घ)

मद । अह्मा (२) अच्चरीअं ! पुणरुत्तदारुणस्स परिणाम-रमणिज्जं विहिणो विलसिदं (३)। (ङ)

(ङ) अहो आश्चर्य्यम् ! पुनरुक्तदारुणस्य परिणामरमणीयं विधेर्विलसितम्

---

दर्शनञ्च किं कथं जातमित्यर्थः । माधवेन मालत्या आनयनात् मकरन्देन च योगिनी-विषयविवरणात् तौ प्रति प्रश्नोऽयं युज्यत एव ।

कपालेति । अनया नातिदूरे दृश्यमानया, आर्य्यया माननीयया योगिन्या, कपाल-कुण्डलायाः कोपात् यत् दुर्जातं व्यसनं, वधाय मालत्यपहरणात्मकं साहसाख्यं क्रोधजव्यसनमित्यर्थः, तेन जनिता आपदः मरणोपस्थितिरूपा विपत्तयो येषां ते तथोक्ताः । वयं मालतीमाधवमकरन्दाः, निर्बन्धेन आग्रहातिशयेन कृच्छ्रात् कष्टात् तत्तद्विपद्भ्य इत्यर्थः अभ्युद्धृता उत्तारिताः । एतत् सर्वं वक्ष्यमाणमालतीवाक्येन स्फुटीभविष्यति ।

"दुर्जातं व्यसनं क्लीबं असम्यग्जातवस्तुनि ।" इति केशवः । क्रोधजव्यसन-माह मनुः—

"पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम् ।
वागदण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः" ॥ १९ ॥

(घ) कामेति । अघोरघण्टस्य यो वधः माधवेन हत्या, तस्य विजृम्भितं

(१) वयमभ्युद्धृता इति पाठोऽपि । (२) लवङ्गिए ! इत्यपि पाठः ।

(३)...रमणिज्जत्तणं विहिणो इतिमात्रः पाठः क्वचित् ।

प्रविश्य सौदामिनी । उपसृत्य । **भगवति ! (१) स एष चिर-न्तनोऽन्तेवासिजनः प्रणमति । (च)**

काम । **अये ! भद्रा सौदामिनी ।**

माधवमकरन्दौ । सविस्मयम् । **कथमियं भगवत्याः पक्षपात-स्थानमाद्या शिष्या सौदामिनी । तत् सर्वमधुना अङ्गीक्रियते (२) । (छ)**

फलम् । माधवेन गुरोरघोरघण्टस्य वधात् क्रुद्धा कपालकुण्डला माधवस्यापकारार्थं वधाय मालतीमपहृतवतीत्यधुना सर्वमवगतमिति भावः ।

( ङ ) सर्वेति । पनरुक्तदारुणस्य द्विगुणभयङ्करस्य विधेर्दैवस्य विलसितं व्यवहारः परिणामरमणीयं मालत्याः पुनः प्राप्तिविधानेन अवमाने शोभनं जातम् ; सुतरामीदृशो विधि र्नोपालम्भविषय इति भावः ।

( च ) प्रविश्येति । उपसृत्य कामन्दक्याः समीपं गत्वा । चिरन्तनः पुरातनः अन्तेवासिजनः शिष्यजनः । वो युष्मान् । गुरुनमस्कारस्य शास्त्रीयत्वादत्र नीति-र्नाम नाट्यालङ्कारः ।

'नीतिः शास्त्रेण वर्त्तन" मिति लक्षणात् ।

( छ ) माधेति । पक्षपातस्य स्नेहेन हृदयाकर्षणस्य स्थानमाश्रयः । तत्तस्मात् सर्वं मालत्याः परित्राणादिकं । सर्वेषामेवास्माकं कामन्दकीस्नेहपात्रत्वेनावगमादिति भावः ।

---

( १ ) सौदामिनी । प्रविश्य । भगवति ! स एष चिरन्तनोऽन्तेवासी जनः प्रणमति । इति पाठभेदः ।

( २ ) सा भगवत्या...आद्यशिष्या ।...यतः सर्वं...इति पाठभेदः ।

काम। पश्चेहि भूरिजन-(१) जीवितदानपुण्य-
सम्भारधारिणि ! चिरादसि हन्त दृष्टा।
दत्तप्रमोदमपि नन्दय (२) मे शरीर-
मालिङ्ग्य सौहृदनिधे ! विरम प्रणामात् ॥२०॥

अपिच। वन्द्या त्वमेव जगतः स्पृहणीयसिद्धि-
रेवंविधैर्विलसितै रतिबोधिसत्त्वैः।

एह्येहीति। भूरिजनानां माधवप्रभृतीनामस्माकमनेकलोकानां जीवितानां मालतीशोकेन गमनोद्यतानां जीवनानां दानेनार्पणेन मालतीं परित्राय रक्षणेन यः पुण्यसम्भारो धर्म्मसमूहः तं धारयतीति सा, तत्सम्बोधनम्। एह्येहि। हन्त हर्षे। चिराद्बहुकालात् परं मया दृष्टासि। दत्तो दर्शनदानेनैवार्पितः प्रमोदः प्रमोदजनितरोमाञ्चो यस्मिन् तादृशमपि मे मम शरीरमालिङ्ग्य नन्दय पुनश्चित्तमानन्दय। हे सौहृदनिधे ! मातिशयवात्सल्यपात्रीभूते ! प्रणामात् विरम। अत्रालिङ्गनकार्य्यप्रवर्त्तनात् प्रवर्त्तनं नाम नाट्यालङ्कारः। तदुक्तम्—

"प्रवर्त्तनन्तु कार्य्यस्य यत् स्यात् साधुप्रवर्त्तनम्।"

वसन्ततिलका वृत्तम् ॥ २० ॥

कथं प्रणामाद्विरमामीत्याह वन्द्येति। एवं विधैरीदृशैर्मालतीपरित्राणप्रभृतिरूपैः, बोधिसत्त्वं बुद्धविशेषं तच्चरितमित्यर्थः अतिक्रान्तैः निःस्वार्थभावेन परोपकारकरणविषये अतिक्रम्य स्थितैः, विलसितैः व्यवहारैः, स्पृहणीया अस्माकमपि वाञ्छनीया सिद्धिः मन्त्रैश्वर्य्यादिसिद्धिर्यस्याः सा, तादृशी त्वमेव जगतः सर्वलोकस्य वन्द्या प्रणामयोग्या। सुतरां तव मत्प्रणामकरणमनुचितमिव प्रतिभातीति भावः। यस्यास्ते तव पुरा एकत्राध्ययनकाले परिचयः तव मम च परस्परस्नेहपात्रत्वेन विशेषज्ञानं, स एव

(१) भूरिवसु...इति क्वचित् पाठः। (२) अभिनन्दय इति पाठान्तरम्।

यस्याः पुरा परिचयप्रतिबद्धबीज-

मुद्भूतभूरिफलशालि विजृम्भितं ते (१) ॥(२)

मदय न्तिकान्विद्धिके । इअं सा अज्जा सौदामिणी (ज)

माल । बाढं । इमाए खु भअवदीसम्बन्धपक्खवादिणीए णिब्भच्छिअ कवालकुण्डलां अत्तणो आवसधं उपणिअ मं

(ज) इयं सा आर्या सौदामिनी ।

(झ) बाढम् । अनया खलु भगवतीसम्बन्धपक्षपातिन्या निर्भर्त्स्य कपाल-कुण्डलां आवसथमुपनीय मां, भगवतानिर्विशेषं समाश्वासितास्मि । किञ्च केसरावली-

प्रतिबद्धमुत्पन्नं बीजं यस्य तत् तादृशं इदं विजृम्भितं चेष्टितं मालतीपरित्राणादिव्यवहार इत्यर्थः, उद्भूतैरुत्पन्नैः भूरिभिः प्रचुरैः फलैः माधवादीनामस्माकं जीवनरक्षारूपैः शालते श्लाघ्यते इति तत् तथोक्तं जातमिति शेषः । आवयोस्तदानीन्तनपरिचय-जनित-परस्परप्रणय एव तव मालतीपरित्राणकार्य्यस्य बीजं, तेन च मालतीपरित्राणेन माधवादयो वयमपि पुनर्मालतीं प्राप्य तच्छोकेन गमनीयतजीवनरक्षणक्षमाः सञ्जाताः, सुतरां त्वं धन्यासीति सरलार्थो भावार्थश्च ।

अत्र विजृम्भिते श्लिष्टविशेषणसाम्यात् प्रथमबद्धबीजानन्तरफलशालिधान्यादिव्यवहार समारोपेण समासोक्तिरलङ्कारः । तथा अनुवृत्तिर्नाम नाट्यालङ्कारः । तथा च दर्पणे—

"...प्रश्रयादनुवर्त्तनम् । अनुवृत्तिः...।"

वसन्ततिलका वृत्तम् ॥ २१ ॥

(झ) बाढमिति । बाढं अवश्यं इयमेव सा सौदामिनीत्यर्थः । "अवश्य भृशयोर्बाढम् ।" इति हलायुधः । भगवत्याः कामन्दक्या यः सम्बन्धः आत्मनः

(१) विजृम्भितेन इत्यपि पाठः ।

भअवदीणिव्विसेसं समासादिदह्मि (१)। किञ्च केसराबली साहिस्साणहत्थाए इह आगदुण सब्बे तुह्मे सन्धारिदा मरणादो। सा एसा जीविदप्पदाइणी सौदामिणी (२)। (झ)

मदयन्तिकालवङ्गिके (३)। सुप्पसस्सा णो कणिट्ठा भअवदी। (ञ)

---

साभिज्ञानहस्तया इह आगत्य सर्वे यूयं सन्धारिता मरणात् सैषा जीवितप्रदायिनी सौदामिनी।

(ञ) सुप्रसन्ना नः कनिष्ठा भगवती।

प्रणयसम्बन्धः, तेन पक्षपातिन्या अस्मत्पक्षावलम्बिन्या सत्या। आवसथमाश्रमं। भगवतीं निर्विशेषं कामन्दकीतुल्यं यथा स्यात्तथा न केवलमहं रक्षिता अपित्वन्येऽपीत्याह किञ्चेति। केसरावल्या वकुलमालया साभिज्ञानः सचिह्नः वकुलकुसुमस्मारकाभिज्ञानशालीत्यर्थः हस्तो यस्यास्तया, अनया। सन्धारिता अवस्थापिता रक्षिता, इति तात्पर्य्यम्। तथा च वकुलकुसुममालाप्रदर्शनद्वारा माधवमकरन्दयोर्जीवनरक्षणात् युष्माकमपि जीवनं रक्षितं, अन्यथा तयोः शोकेनापि युष्माकं मरणसम्भव आसीदिति भावः।

(ञ) मदेति। कनिष्ठा भगवती सौदामिनी। कामन्दकी तु ज्येष्ठा भगवतीति भावः। नोऽस्मान् प्रति सुप्रसन्ना स्वयमेव सानुग्रहा जाता। कथमन्यथा स्वयमेवेदृशमनुकम्पेतेति भावः।

---

(१) मं भअवदीणिव्विसेसं, इति पाठः क्वचिन्नास्ति।

(२)...मरणादो। सा एसा जीविदप्पदाइणी सौदामिणी, इति पाठोऽपि क्वचिन्नास्ति।

(३) इतराः, इति क्वचित् पाठः।

माधवमकरन्दौ । अहोनुखलुभाः ! (ट)

अपि चिन्तामणिश्चिन्तापरिश्रममपेक्षते ।

इदं त्वचिन्तितं मन्ये कृतमाश्चर्य्यमार्य्यया ॥२२॥

सौदा । स्वगतम् । हन्त ! लज्जयति मामत्यन्तसौजन्यमेषाम् (१) । प्रकाशम् । भगवति ! एतत् प्रहृष्टनन्दनाभिनन्दितेन राज्ञा पद्मावतीश्वरेण भूरिवसाः प्रत्यक्षमभिलिख्य पत्रमायुष्मतो माधवस्य प्रेषितम् । इति पत्रमर्पयति (२) । (ठ)

(ट) माधेति । अहोनुखलुभोरित्येकमेवाव्ययं हर्षाश्चर्य्ये ।

अपीति । चिन्तामणिरपि वाञ्छितफलप्रदो मणिविशेषोऽपि, चिन्तैव परिश्रमस्तं, चिन्तापूर्वकप्रार्थनाप्रयासमित्यर्थः अपेक्षते फलदान इति शेषः । तु किन्तु आर्य्यया मान्यया अनया सौदामिन्या, अचिन्तितं अस्माभिरसम्भावितं अप्रार्थितं कृतं मालत्यादीनामस्माकं रक्षणं विहितं, इदमाश्चर्य्यं मन्ये ।

अत्रोपमानभूताच्चिन्तामणेरुपमेयायाः सौदामिन्या आधिक्यवर्णनात् व्यतिरेकालङ्कारः, छेकानुप्रासश्चेत्यनयोः संसृष्टिः । तया च सौदामिन्यलौकिकदयाशक्तिशालिनीति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः । तथा अक्षरसङ्घातो नाम नाट्यलक्षणम् । तदुक्तम् दर्पणे—

"वर्णनाऽक्षरसङ्घातश्चित्रार्थैरक्षरैर्मितैः ।

"सामर्थ्यसम्पादित-वाञ्छितार्थश्चिन्तामणिः स्यान्न कथं हनूमा"निति भट्टिः ॥२२॥

(ठ) सौदेति । प्रहृष्टेन भूरिवसोर्जीवनलाभादानन्दितेन, नन्दनेन तदाख्येन राज्ञो नर्म्मसुहृदा, अभिनन्दितः 'अहो भाग्यवान् भवान्, येन भूरिवसोर्जीवनस्थिते र्न ब्रह्मवधनिमित्तो जात' एवम्भूतवचनादिना प्रशंसितस्तेन । माधवस्य समीपे ।

(१) ...एवं सौजन्यमेषामिति पाठान्तरम् । (२) लेख्यमर्पयति, इति पाठभेदः

काम। गृहीत्वा वाचयति। 'स्वस्त्यस्तु वः। परमेश्वरः समाज्ञापयति। यथा (ड)

श्लाघ्यानां गुणिनां धुरि स्थितवति श्रेष्ठान्वये च (१) त्वयि-
प्रत्यस्तव्यसने महीयसि परं प्रीतोऽस्मि जामातरि ।
तेनेयं मदयन्तिकाद्य भवतः प्रीत्यै तव प्रेयसे
मित्राय प्रथमानुरागघटिताऽप्यस्माभिरुत्सृज्यते ॥२३॥

---

(ड) कामेति। वाचमाचष्ट इति वाचयति पठति। वो युष्मभ्यं स्वस्ति मङ्गलमस्तु। परमेश्वरो राजा पद्मावतीश्वरः, समाज्ञापयति अवगमयति।

श्लाघ्यानामिति। श्लाघ्यानां, प्रशस्तानां गुणिनां रूपविद्यादिगुणशालिनां जनानां धुरि अग्रे स्थितवति विद्यमाने, गुणिगणाग्रगण्ये, श्रेष्ठः अन्वयो वंशो यस्य तस्मिन् सद्वंशोत्पन्ने, प्रत्यस्तं शुभादृष्टेनैव निरस्तं व्यसनं विपद्यस्य तस्मिन् एतेन परम-सौभाग्यशालित्वमपि सूचितं, महीयसि महामात्यपुत्रत्वेन धनवत्त्वादपि परममहति, त्वयि जामातरि दुहितृस्थानापातिन्या मालत्याः पत्यौ सति परं नितान्तं प्रीतः सन्तुष्टोऽस्मि। "कन्या कामयते रूपं माता वित्तं पिता गुणम्। भ्रातरः कुलमिच्छन्ति मिष्टान्नमितरे जनाः।" इत्युक्तसर्वविधगुणवत्त्वादिति भावः। ननु प्रीतेन किं करणीयमित्याह तेनेति। तेन हेतुना, अस्माभिः भवतः प्रीत्यै तव सन्तोषाय, तव प्रेयसे मित्राय परमप्रियसुहृदे मकरन्दाय, प्रथमात् पूर्वस्मादेव अनुरागेण आसक्त्या घटिताऽपि संयो-जितापि इयं मदयन्तिका उत्सृज्यते प्रदीयते। 'गच्छ धर्मो भविष्यति', इत्युक्त्या अनुसर्त्तुमशक्तस्य तस्करपरित्यागवत् गत्यन्तराभावात् राज्ञः खल्वयमुत्सर्ग इति समालोचनीयम्।

अत्र प्रीतिकार्य्यं प्रति गुणिगणाग्रगण्यत्वादिबहुतरकारणोपन्यासात् समुच्चयोऽ-

(१) श्रेष्ठान्ववाये, इति पाठान्तरम्

माधवमुद्दिश्य सहर्षम्। **वत्स! श्रूयताम्।** (ढ)

माध। **श्रुतम्। इदानीं सर्वथा कृतार्थोऽस्मि।** (ण)

माल। **दिट्ठिआ एदं वि दाव अवगदं हिअअस्स सङ्कासल्लं (१)। (त)**

लव। **सम्पदं णिरवसेसं माहवसिरिणो मालदीए अ समं फलिदा मणोरहा (२)। (थ)**

(त) दिष्ट्या, एतदपि तावदपगतं हृदयस्य शङ्काशल्यम्।

(थ) साम्प्रतं निरवशेषं श्रीमाधवस्य मालत्याश्च समं फलिता मनोरथाः।

---

लङ्कारः। तथा भाषणं नाम निर्वहणसन्धेरङ्गम्। "सामदानादि भाषण"मिति लक्षणात्। तथा नन्दनाय मालतीदानोद्यमरूपस्यानुचितस्यानेन मार्ज्जनात् परिहारो नाम नाट्यालङ्कारः।

तदुक्तम्..."परिहार इति प्रोक्तः कृतानुचितमार्जनम्।"

शार्दूलविक्रीड़ितं वृत्तम्॥ २३॥

(ढ) माधेति। एतेन सर्वप्रकाराशङ्कानिरासात् कामन्दक्या महानानन्दो व्यज्यते।

(ण) माधेति। सर्वथा सर्वेण प्रकारेण। कृतार्थोऽस्मि सर्वानुमोदनेन राज्ञोऽपि कोपाशङ्कानिरासादिति भावः। अतीवानन्दादुक्तिरियम्।

(त) मालेति। दिष्ट्या भाग्येन शङ्काशल्यम् राजकोपाशङ्कारूपम् शैलम्।

(थ) लवेति। निरवशेषम् सम्पूर्णं यथा स्यात्तथा। समं युगपत्। मकरन्दस्यापि मदयन्तिकालाभात्, सर्वत्रैव राज्ञोऽप्यनुमोदनात् तत्कोपाशङ्काऽभावाच्चेति भावः।

(१) दिट्ठिआ दाणिं अवहदं णो हिअअस्स आसङ्कासल्लं, इति पाठभेदः।

(२) सम्पदं णिरवसेसं पूरिआ माहवसिरिणो मणोरहा, इति क्वचित् पाठः

मक । पुरोऽवलोक्य । **कथमवलोकिताबुद्धरक्षिते कलहंसेन सह सुप्रमोदं नृत्यन्त्यावित एवागच्छतः (१) । (द)**

ततः प्रविशतोऽवलोकिताबुद्धरक्षिते कलहंसश्च ।

सर्वे । विविधं नृत्यं कृत्वा उपसृत्य सप्रणामं कामन्दकीं प्रति । **जअ भअ वदि कज्जणिहाणे !** माधवं प्रति । **जअ मअरन्दणन्दण ! माहव ! पुस्सचन्द ! दिट्ठिआ वड्ढसि । (ध)**

(ध) जय भगवति ! कार्य्यनिधाने ! । जय मकरन्दनन्दन ! माधव ! पूर्णचन्द्र ! दिष्ट्या वर्द्धसे ।

अतमित्याद्यं तदन्तं सन्दर्भे आनन्दो नाम निर्वहणसन्धेरङ्गम् । तथाचोक्तं "आनन्दो वाञ्छितागमः ।"

प्राकृते पूर्वनिपातनियमाऽभावात् 'माहवसिरिणो' इत्युक्तिरिति ज्ञेयम् ।

(द) मकेति । हर्षे कथंशब्दः । शोभनः प्रमोदो यस्मिन् कर्म्मणि तद्यथा तथा ।

(ध) सर्वे इति । सर्वे अवलोकिताबुद्धरक्षिताकलहंसाः । कार्य्याणां निधानं स्थापनं यस्यां तत् सम्बोधनम् । महामात्येन भूरिवसुनापि त्वयि मालतीमाधवयो-र्योजनकार्य्यभारस्थापनात् तस्य च सुकौशलेन निष्पादनात् त्वमतीव निपुणासीति भावः । मकरन्दनन्दन ! मकरन्दस्यानन्दजनक ! अलौकिकस्नेहादिति भावः । एतदुक्त-विशेषतात्पर्य्याभावेऽपि प्रमोदमग्नत्वाद् यत्किञ्चिद्विधयाऽभिहितम् । पूर्णचन्द्र । रूपेण तादृशाह्लादजनकत्वादिति भावः ।

(१)...कलहंसश्च दूरतः समागतानस्मान् वीक्ष्य तत्रैव हर्षनिर्भरं नृत्यन्त इत एवागच्छन्ति । इति भिन्नः पाठः ।

सर्वे । सस्मितं पश्यन्ति (१) । (न)

लव । **को वा इमस्सिं परिपुरिदसव्वप्पआरमहूसवे ण-च्चदि (२) । (प)**

काम । **एवमेतत् । अस्ति वा कुतश्चिदेवम्भूतं (३) विचित्र-रमणीयोज्ज्वलं प्रकरणम् ? (४) । (फ)**

---

(प) को वा अस्मिन् परिपूरितसर्वप्रकारमहोत्सवे न नृत्यति ।

(न) सर्व इति । सर्वे कामन्दकी सौदामिनी-मदयन्तिका-लवङ्गिका-माधव-मकरन्दाः । पश्यन्ति अवलोकिता बुद्धरक्षिताकलहंसानां नृत्यमिति शेषः ।

(प) लवेति ! को न नृत्यति, अपि तु सर्व एवेत्यर्थः, तेनास्माकमपि नर्त्तनेच्छा जायत इति ध्वनितम् ।

(फ) कामेति । कुतश्चित कस्मिंश्चिदित्यर्थः । विचित्रमाश्चर्य्यं, रमणीयं मनोहरं, उज्ज्वलं विशदं निर्दोषमित्यर्थः । अत्र कर्म्मधारयत्रयम् । प्रकरणं वृत्तान्तावली । अस्तीतिकाकुवशात् प्रश्नप्रतीतिः, तेन अस्ति किं नास्त्येवेत्यर्थः । अत्र च, एवम्भूतं भवभूतिविरचितैतन्मालतीमाधवसदृशं, विचित्ररमणीय आश्चर्य्यमनोहर उज्ज्वलः शृङ्गाररसो यत्र तत् तादृशं, प्रकरणं "भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पित"मित्याद्युक्तलक्षणको रूपकविशेषः, कुतश्चिद्भवभूतिभिन्नात कवेरुत्पन्नमस्ति किं अपि तु नास्त्येवेति ध्वनिः । "उज्ज्वलो दीप्तशृङ्गारविशदेषु विकाशिनि ।" इति मेदिनी ।

---

(१) सहर्षं सर्वे सस्मितं पश्यन्तीति पाठान्तरम् ।

(२) तदीअकज्जं वि अ एदस्सिं सम्पूरिदे ; अदो सव्वप्पआरमहूसवे णच्चदि इति पाठभेदः ।

(३) एवम्भूतं महाद्भुतमिति क्वचित् पाठः ।

(४) महाप्रकरणमिति भिन्नः पाठः ।

सौदा। इदमत्र रमणीयान्तरम्, (१) यदमात्ययोर्भूरिवसुदेवरातयोश्चिरात् पूर्णोऽयमितरेतरापत्यसम्बन्धरूपो (२) मनोरथः। (व)

माल। (स्वगतम्।) कहं विम्र (३)। (भ)

माधवमकरन्दौ। सकौतुकम्। भगवति! अन्यथा वस्तु वृत्तम्, अन्यथा वचनमार्य्यायाः (४)। (म)

लव। जनान्तिकम्। भअवदि! किं एत्थ (५) पड़िवज्जिदव्वं (य)।

(भ) कथमिव।

(य) भगवति! किमत्र प्रतिपत्तव्यम्।

---

(व) सौदेति। इतरेतरापत्यसम्बन्धरूपः परस्परसन्तानयोर्विवाहसम्बन्धनिष्पादनविषयकः।

(भ) मालेति। कथमिव अयं वृत्तान्त इति शेषः।

(म) माधवेति। वस्तु घटना, अन्यथा वृत्तं अन्यप्रकारेण जातम्। आर्य्यायाः सौदामिन्यास्तु वचनं यदमात्ययोरित्यादिवाक्यं अन्यथा वृत्तमित्यर्थः। तथा च अत्रभवान् भूरिवसुः स्वयमेव नन्दनाय मालतीं दातुमुद्यत आसीत्; इतस्तु आर्य्या सौदामिनी वदति, भूरिवसुदेवरातयोः परस्परापत्यसम्बन्धकरणाभिलाष आसीदिति सुतरां कृतघटनया सह सौदामिनीवचनस्यासामञ्जस्यं जातमिति भावः।

(य) लवेति। अत्र माधवमकरन्दयोरसामञ्जस्यप्रदर्शनप्रश्ने, किं प्रतिपत्तव्यं त्वया किमुत्तरं दातव्यम्। एतेनात्मनोऽपि तादृगसामञ्जस्यज्ञानमुत्पन्नमिति सूचितम्।

---

(१) रामणीयकमित्यपि पाठः। (२) इतरेतरापत्यसम्बन्धादिति कुत्रचित् पाठः।

(३) तं कहं विम्र इति पाठोऽपि।

(४) अन्यथा वस्तु प्रवृत्तं, अन्यथा वचनपर्य्यायः, इति पाठोऽपि दृश्यते।

(५) कुत्रचित् 'एत्थ' इति पाठो नास्ति।

काम। (स्वगतम्।) सम्प्रति मदयन्तिकासम्बन्धेन नन्दनावग्रहात् प्रत्यस्तशङ्काः खलु वयम्। (प्रकाशम्।) वत्सौ ! न खल्वन्यथा वस्तुवृत्तम्। यतः श्रावकावस्थायामस्मत्सौदामिनीप्रत्यक्षमनयोर्वृत्तेयं प्रतिज्ञा 'आवाभ्यामपत्यसम्बन्धः कर्त्तव्य' इति प्रधानप्रकृतिकोपस्त्वेवं परिहृतः (१)। (२)

(२) कामेति। मदयन्तिकायाः सम्बन्धेन विशेषस्नेहसम्पर्केण, नन्दनावग्रहात् नन्दनकर्तृकमन्निर्यातनात् प्रत्यस्तशङ्काः तिरोहितातङ्काः, वयं अहमित्यर्थः। तथा च यद्यहं 'आवाभ्यामपत्यसम्बन्धः कर्त्तव्य' इति भूरिवसुदेवरातयोः प्रतिज्ञां प्रकाशयामि; तदा लोकपरम्परया नन्दनस्तमाकर्ण्य इत्थं मन्येत, यत्, इयं खलु कूटदूती कामन्दकी भूरिवसुदेवरातयोस्तां प्रतिज्ञां जानत्यपि मां न निवेदितवती, प्रत्युत मालत्याः परिणयायैव प्रकाश्यभावेन मां प्रोत्साहितवती, अथ च गुप्तभावेन माधवेन सह मालतीं योजयितुं प्राणपणेन चेष्टितवती ; सुतरामियमेव कामन्दकी ममेदृक्तिरस्कारलज्जाप्राप्तिमूलं, अत एनां निर्यातयामि' इति मन्यमानो यदि मां निर्यातयितुमुपक्रमेत, तदा खलु मदयन्तिका मां प्रति स्नेहवशात् भ्रातरं तं नन्दनं निवारयेत्। सुतरामिदानीं तत्प्रतिज्ञाप्रकाशे नास्ति दोष इति भावः सरलार्थश्च। वत्सौ माधवमकरन्दौ !। वस्तुघटना न खल्वन्यथा वृत्तमित्यन्वयः। श्रावकौ गुरुमुखात् शास्त्रार्थश्रोता तदवस्थायां छात्रदशायामित्यर्थः। अनयोर्भूरिवसुदेवरातयोः। वृत्ता भूता। ननु तर्हि "प्रभवति निजस्य कन्यकाजनस्य महाराज" इत्यभिदधानो भूरिवसुर्नन्दनाय मालतीं दातुं कथमङ्गीकृतवानित्याह प्रधानेति। प्रधानप्रकृतेः सप्तविधासु प्रकृतिषु मध्ये स्वामित्वात् प्रधानीभूतायाः प्रकृतेः, राज्ञः, कोपः क्रोधः, एवमनेन प्रकारेण परिहृतः परित्यक्त उत्पत्त्ययोग्यीकृत इत्यर्थः। तथा च नन्दनाय मालतीं दातुं राजा स्वयमनुरोधं कुरुते, तस्य तु

(१)...मदयन्तिकासम्बन्धात् नन्दनोपग्रहात्...।...प्रवृत्तम् अन्यथा वचनमस्याः। ...अस्मात् सौदामिनीसमक्षं तयोः प्रवृत्तेयम्...इति पाठभेदः।

माल । अहो संवरणम् । (ल)

माधवमकरन्दौ । साश्चर्यम् । जयन्ति खलु महतां विसंवादिन्यः प्रत्यायिन्यः कल्याणिन्यो नीतयः ( १ ) । ( व )

(ल) अहो ! सम्बरणम् ।

स्पष्टतः प्रत्याख्याने राज्ञः कोपो भवेदित्याशङ्कमानो भूरिवसुः "प्रभवति निजस्य कन्यका-जनस्य, महाराज" इति श्लिष्टोत्तरेण तदङ्गीकारभङ्ग्या प्रकाश्यभावेन राज्ञस्तमनुरोधं रक्षितवानिव । मालतीमाधवयोः संयोगे जाते 'परस्परानुरागवशादेवाय संयोगो जातः, तथा किं करणीयं, जनान्तरसंयुक्ता च कन्या जनान्तराय न देयेति पुन र्नन्दनाय दातुमपि न शक्ता' इत्थं राजानं ज्ञापयिष्यन्, अन्तरा तु मालतीमाधवयोर्योजनायामाज्ञि-योजितवान् । इदानीञ्च संवृत्ता तथैव सर्वा घटना, तेन तु राजा प्रत्युत प्रीत एव जात इति सरलार्थो भावार्थश्च ।

अत्र पूर्ववाक्यं नाम निर्वहणसन्धेरङ्गम् । "पूर्ववाक्यन्तु विज्ञेयं यथोक्तार्थोप-दर्शनम् ।" इति लक्षणात् ।

"स्वाम्यमात्यसुहृत्कोष-राष्ट्र-दुर्ग-बलानि च । राज्याङ्गानि प्रकृतयः...। इत्यमरः ।

(ल) मालेति । अहो सम्बरणम् आश्चर्यममीषां तत्प्रतिज्ञागोपनमित्यर्थः । एतावतीषु घटनासु जातास्वपि केनापि कुत्रापि तदप्रकाशादिति भावः ।

(व) माधवेति । महतां विद्याबुद्धिचातुर्यादिभिः प्रधानीभूतानां जनानां विसंवादिन्यः परस्परविरोधिन्यः, अथ च प्रत्यायिन्यः सर्वेषामेव विश्वासजनिकाः अपि च कल्याणिन्यः परिणामे मङ्गलकारिण्यः । तथा च भूरिवसोरन्यविधा प्रतिज्ञा, अन्य-मध्ये व्यवहारः ; तथा सा प्रतिज्ञा, मध्ये नन्दनाय मालतीदानोद्यमश्च एतौ

(१) जयन्ति महतां विसंष्ठुलाः प्रतीपिन्यः कल्याणिन्यो ( कल्याणाः ) नीतय इति पाठान्तरम् ।

काम। वत्स माधव ! (१) ।

यत् प्रागेव मनोरथैर्वृतमभूत् कल्याणमायुष्मतो-
स्तत्पुण्यैर्मदुपक्रमैश्च फलितं क्लेशैश्च (२) मच्छिष्ययोः ।
निष्णातश्च समागमोऽपि विहितस्त्वत्प्रेयसः कान्तया
सम्प्रीतौ नृपनन्दनौ, यदपरं (३) श्रेयस्तदप्युच्यताम् ॥२४॥

द्वावपि सम्भवपरत्वात् लोकानां विश्वासयोग्यौ ; परिणामे च कन्याया योग्यजनाश्रयात् राजनन्दनयोः सन्तोषाच्च मङ्गलकारितेति नीतेर्महानेवोत्कर्ष इति सन्तार्थौ भावार्थश्च । अतानुक्तसिद्धिर्नाम नाट्यलक्षणम् । तथाचोक्तं दर्पणे

"विशेषार्थोऽतिविस्तारोऽनुक्तसिद्धिरुदीर्य्यते ।"

यदिति । प्राक् पूर्वमेव, मनोरथैरस्माकमभिलाषैः आयुष्मतोः प्रशस्तायुःशालिनोः युवयोर्मालतीमाधवयोः, यत् कल्याणं समागमरूपं मङ्गलं वृतं विषयीकृतमभूत् ; तद्युवयोः समागमलक्षणं कल्याणं, पुण्यैर्युवयोः प्राक्तनधर्म्मैः, मदुपक्रमैर्मम चेष्टाभिश्च, मच्छिष्ययोः सौदामिन्यवलोकितयोः क्लेशैस्तत्तत्कार्य्यसाधनकष्टैश्च फलितं इदानीं निर्विघ्नेन सम्पन्नं जातम् । तथा त्वत्प्रेयसः तव परमप्रियसुहृदो मकरन्दस्य, कान्तया तद्वल्लभया मदयन्तिकया सह, निष्णातः कौशलोपेतः समागमः सम्मेलनमपि विहितः कृतः । तथा नृपनन्दनौ राजा नन्दनश्चेमौ सम्प्रीतौ सन्तुष्टौ जातौ । अनभिप्रेत-व्यापारेषु सत्स्वपि युष्माकं गुणयोगादिति भावः । एभ्यः अपरं यत् श्रेयः तव प्रार्थनीयं मङ्गलमस्ति तदप्युच्यतां कथ्यताम् । पूर्ववदेव तदप्यहं सम्पादयामीति भावः ।

अत्र काव्यसंहारो नाम निर्वहणसन्धेरङ्गम् । "वरप्रदानसम्प्राप्तिः काव्यसंहार

(१) क्वचित् 'माधव !' इति पाठो नास्ति ।

(२) क्लेशैश्च. इति पाठभेदः । (३) किमपरं इत्यपि पाठः ।

माध। सहर्षम् (१)। भगवति! अतोऽपि परं प्रियमस्ति?। तथापीदमस्तु भगवतीप्रसादात् (२)। (ञ)

भरतवाक्यम्। (३) (ष)

सन्तः सन्तु निरन्तरं सुकृतिनो विध्वस्तपापोदयाः,
राजानः परिपालयन्तु वसुधां धर्म्मे स्थिताः सर्व्वदा।

इष्यते।" इति लक्षणात्। तथा कार्य्यं नामार्थप्रकृतिः, फलाख्या कार्य्यावस्था च समुन्नेया। तयोर्लक्षणन्तु दशमाङ्कारम्भ एवोक्तम्।

शार्दूलविक्रीड़ितं वृत्तम्॥ २४॥

(ञ) माधेति। अपिशब्दः प्रश्ने। अथवा काकुवशात् प्रश्नप्रतीतिः। अतः परमपि प्रियमस्ति किं नास्त्येवेत्यर्थः। इदानीं मालतीलाभादिनैव प्रीतेः परा काष्ठा जातेति भावः। तथापि भगवत्याः प्रसादात् तवानुग्रहात्, इदं वक्ष्यमाणमस्तु।

(ष) भरतेति। नटानामादौ नान्दीवदन्ते च मङ्गलाचरणस्य करणीयत्वात् प्रस्तावनानन्तरञ्च तेषां पुनःप्रवेशवाक्ययोरसम्भवात् भरतवाक्यमित्युक्तम्।

माधवस्य भरतानाञ्च प्रार्थनीयमेक एव श्लोकः प्रतिपादयति सन्त इति। सन्तः साधवो जनाः, विध्वस्तो विनष्टः पापोदयः पापोन्नतिः पापसमूहो वा येषां ते तथाभूताः सन्तः, निरन्तरं सर्वदा सुकृतिनः पुण्यवन्तः सन्तु। विषयविशेषे पापवन्तोऽपि विषयान्तरे पुण्यवन्तो भवितुमर्हन्तीति निष्पापाः सन्त एव पुण्यवन्तो भवन्तु इत्यभिप्रायेणोभयपदमुपात्तम्। तथा राजानः सर्वदा धर्म्मे शिष्टानुग्रहदुष्टनिग्रहादिना धर्म्मपथे स्थिताः सन्तो वसुधां पृथिवीं परिपालयन्तु रक्षन्तु। तथा जलमुचो मेघाः, काले उपयुक्तसमये सन्ततवर्षिणः अविरतवर्षणकारिणः सन्तु। तथा प्रजा जनाः, पुण्यतः

(१) सहर्षं प्रणमति, इति क्वचित् पाठः।

(२) अतःपरं मम प्रियमस्ति तथापीदमस्तु, इति पुस्तकान्तरे पाठः।

(३) भरतवाक्यमिति पाठः पुस्तकान्तरे नास्ति।

काले सन्ततवर्षिणो जलमुचः सन्तु, स्थिराः पुण्यतो
मोदन्तां घनबद्धबान्धवसुहृद्गोष्ठीप्रमोदाः प्रजाः ( १ ) ॥२५॥

इति निष्क्रान्ताः सर्वे

## इति मालतीमाधवे दशमोऽङ्कः ।

—*—

## समाप्तश्चेदं मालतीमाधवप्रकरणम् ।

स्वस्वधर्म्मात्, स्थिराः स्थायिन्यः दीर्घायुषः सत्यः, घनं निविड़ं यथा तथा बद्धः कृतः विषादलेशाभावेनैव प्राप्त इत्यर्थः बान्धवसुहृदां सहोदरादिबन्धुजन-सुहृज्जनानां गोष्ठीषु समवायेषु, प्रमोद आलापादिजनित आनन्दो याभिस्तास्तथोक्ताः, रोगशोकाद्यभावेन सर्व्वदानन्दमग्नाश्च सत्य इत्यर्थ, मोदन्तां हृष्यन्ताम् । इयमेव प्रार्थनेति भावः ।

अत्र वृत्त्यनुप्रासोऽलङ्कारः । तत्र चतुर्थपादे आनन्दार्थस्य द्विरुक्तत्वात् पुनरुक्ततादोषः स च 'मोदन्ता' मित्यत्र 'वर्त्तन्ता' मिति पाठेन समाधेयः । तथा प्रशस्तिर्नाम निर्वहण सन्ध्यङ्गम् । तदुक्तं दर्पणे—

"नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते ।"

शार्दूलविक्रीड़ितं वृत्तमिति ॥ २५ ॥

(१) शिवमस्तु सर्व्व जगतां परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु शान्तिं सर्वत्र सुखी भवतु लोकः ॥ २५ ॥

काम । एवमस्तु । ईदृशः पाठभेदः पुस्तकान्तरे दृश्यते ।

जानकीविक्रमं नाम नाटकं वीररौद्रवत् ।
नाटिकामुज्ज्वलरसां श्रीविराजसरोजिनीम् ॥
वियोगवैभवाख्यानं खण्डकाव्यमनन्तरम् ।
नानाबन्धं महाकाव्यं रुक्मिणीहरणाभिधम् ॥
स्मृतिचिन्तामणिं नाम संक्षिप्तस्मृतिसंग्रहम् ।
उत्तररामचरितटीकां सर्वार्थबोधिनीम् ॥
मालविकाग्निमित्रस्य टीकां सारार्थदीपणीम् ।
कृत्वा, कुर्वन् गद्यकाव्यमपूर्वं सरलाभिधम् ॥
कोटालिपाडौनशियानिवासी नवद्वीपुरेशस्य सभाप्रवासी ।
सत्काव्यपोऽध्यापनमुख्यकर्म्मा व्यधादिमां श्रीहरिदासशर्म्मा ॥
रसाग्निनागेन्दुमिते शकाब्दे रवौ तुलायां दिवसे तृतीये ।
टीकाऽसकौ भावमनोहराख्या समाप्तिमाप्ता गिरिशप्रसादात् ॥
गुणान्विता दोषनिरासशालिनी सालङ्कृती रीतिमती रसोज्ज्वला ।
सुलक्षणा भावमनोहरा परा चिराय सल्लोचनचुम्बनं क्रियात् ॥

इति श्रीगङ्गाधरविद्यालङ्कार-भट्टाचार्य्यात्मज-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्य-
विरचितायां मालतीमाधवटीकायां भावमनोहरायां
दशमाङ्कविवरणं समाप्तम् ॥ ० ॥